॥ श्रीः ॥

चौखम्बा सुरभारती ग्रंथमाला

१७



श्रीमद्भट्टिविरचितं

# भट्टिमहाकाव्यम्

'काव्यमर्मविमर्शिकाख्य' संस्कृत-हिन्दीव्याख्योपेतम्

( प्रथमादि-चतुर्थसर्गपर्यन्तम् )

व्याख्याकारः—

म० म० पण्डितराज डॉ० श्रीगोपालशास्त्री 'दर्शनकेशरी'

[ काशीपण्डितसभाध्यक्षः, राष्ट्रपतिसम्मानितश्च ]

सम्पादकः—

गोपालदत्त पाण्डेयः एम. ए., व्याकरणाचार्यः

(अवकाशप्राप्तः शिक्षोपनिरीक्षकः)






चौखम्बा सुरभारती प्रकाशन

वाराणसी

THE

CHAUKHAMBA SURBHARATI GRANTHAMALA

17



# BHAṬṬIMAHĀKĀVYAM

OF

SRI BHATTI

( *Cantos I–IV* )

*With 'Kavyamarmavimarshika' Sanskrit-Hindi Commentaries*

*By*


M. M. Panditraj Dr. SRIGOPAL SHASTRI

*'Darshankeshari'*

**Edited by**

Gopal Datta Pande M. A., Vyakaranacharya

**Retired Deputy Director of Education, U.P.**





CHAUKHAMBA SURBHARATI PRAKASHAN

VARANASI

# प्रस्तावना

न विद्यते तादृगिह प्रकाशो, योऽपाकरोत्यान्ध्यमधीतिहार्दम् ।
इत्यामृशंस्तस्य कवेस्तमेवम्, प्रदीपये भूमिकयाऽनयाऽहम् ॥

मर्यादापुरुषोत्तमस्य भगवतः श्रीरामचन्द्रस्य कथापीयूषगर्भं पाणिनीयशब्दानुशासनोदाहरणप्रधानं प्रसादगुणगुम्फितं रसालङ्कारचित्रयमकानुप्रासादिशब्दवैचित्र्यपिनद्धम् महाकाव्यशास्त्रं रावणवधाभिधम् इदं केन महाकविना निबद्धमिति सन्दिहन्ति कियन्तोऽधुनापि ।

परन्तु अस्माकं दृष्टौ भर्तृहरिरित्यपराभिधानो भट्टिनामैव महाकविरस्य महाकाव्यशास्त्रस्य निबद्धेति निश्चप्रचम् । यतो हि तन्नाम्नैवास्य महाकाव्यशास्त्रस्य भट्टिमहाकाव्यशास्त्रम् इति प्रसिद्धिरविच्छिन्नाऽद्यापि प्रचलति । यथाऽमरसिंहनाम्ना नामलिङ्गानुशासनस्य, भारविनाम्ना किरातार्जुनीयस्य, माघनाम्ना शिशुपालवधस्येति । भाजप्रबन्धपद्यमपि भट्टिनाम्नो महापुरुषस्य सत्तां समर्थयति । तथा हि—

भारद्वाजो भीष्मदेवो विनष्टो भट्टिर्नष्टो भीमसेनोऽपि नष्टः ।
भूकुन्दोऽहं भूपतिस्त्व च राजन् भानां पङ्क्तावन्तकः सम्प्रविष्टः ॥ इति ।

अस्य महाकवेर्देशसमयसम्बन्धेऽपि नास्ति किमप्यन्वेषणीयम् । महाकविरयं स्वयमेव द्वाविंशे सर्गे तस्य समाप्तौ वदति—

काव्यमिदं विहितं मया वलभ्यां श्रीधरसेननरेन्द्रपालितायाम् ।
कीर्तिरतो भवतान्नृपस्य तस्य क्षेमकरः क्षितिपो यतः प्रजानाम् ॥

वलभी नगरी गुर्जरदेशीयनृपाणां राजधानीति प्राचीनप्रसिद्धिः । श्रीधरसेननरेन्द्रोऽपि प्रो० मजुमदारमतानुसारेण चतुःशताब्दीशेषभागस्थ एव मन्दसौरसूर्यमन्दिरे वत्सभट्टिशब्दोल्लेखादिति ऐतिहासिका अपि समर्थयन्ति । श्रीधरसेननरेन्द्रनाम्नस्त्रित्वेऽपि प्रथम एव अयमिति निश्चितम् विशिष्टाऽनुल्लेखात् ।

पद्येनाऽनेन बहुविधा जनश्रुतिरपि समर्थिता भवति । तथाहि—अस्य महाकवेर्जननी प्रसवकालाऽनन्तरमेव दिवं जगाम । जनकोऽपि श्रीधरस्वामी विरक्तः संन्यासं जग्राह । अयं श्रीधरसेनो नृपेन्द्र एवेमं बाल्यकालाज्जुगोप । वैदुष्यप्राप्तौ स्वराज्य-शिक्षा-विभागाध्यक्षश्चकार । तत्रैव राजकुमारा अपि शिक्षां गृह्णन्ति स्मेति लोकप्रसिद्धिरेका ।

अन्या च कदाचिदध्यापनवेलायां कुल्यातटे धान्यक्षेत्रे च वर्तमानयोर्गुरुशिष्ययोर्मध्यतः करिशावका विनिर्गत इति षण्मासावकाशविघ्नपाते तेषामध्यापनार्थं महाकाव्यशास्त्रमिदं सोऽष्टाध्यायीपाठनधियोपनिबबन्धेति किंवदन्ती ।

अन्यच्चापि श्रीधरेति नाम्ना पितुरभिज्ञानसूचनम्, पालितशब्दोपादानतश्च स्वपालनध्वननम् । क्षेमकरः क्षितिपो यतः प्रजानाम् इति वाक्यन्तु महाकवेरस्य राज्यशिक्षासञ्चालकपदावाप्तिप्रभृति सर्वमेव ध्वनयति । इत्युपरि निर्दिष्टा जनश्रुतिः सर्वा समर्थिता भवति ।

अधस्तनापि तत एव समर्थिता भवति । प्राक्तने काले शिक्षालया विविक्ते स्थाने नगराद् बहिरेव भवन्ति स्म । अध्यापनं च स्वतन्त्रजीविकोपार्जनधिया कृषिकर्मादिशिक्षणेन सहैव चलति स्म। तत्र करिशावकादीनां पर्य्यटन-सम्भावनाऽस्त्येव । शिक्षाधिकारिणोऽस्य महाकवेः शिक्षाविघ्नापाकरणायाध्यायिपाठयोग्यग्रन्थनिर्माणमपि सम्भवत्येवेति उभे अपि किंवदन्त्यौ वयमेतत्पद्याधारं समर्थयाम. । भट्टिकाव्यशास्त्रस्य सर्वथाऽध्येयत्वमपि प्रदिशामो वैदुष्यातिशयाधायकत्वादित्यलम् ।

महाकविरयं पाणिनीयशब्दानुशासनपाठनधिया महाकाव्यशास्त्रमिदं प्रणीतवानिति तु स्वयमेव—ग्रन्थान्ते—

दीपतुल्यः प्रबन्धोऽयं शब्दलक्षणचक्षुषाम् ।
हस्तामर्शं इवान्धानां भवेद् व्याकरणादृते ॥ इति—

पद्यतो ध्वनयति । एतेन प्राचीनाऽध्ययनाध्यापनपद्धतिः कीदृशि विविक्ते प्रदेशे प्रचलति स्म । कीदृक् चाध्यापकाध्यायिनोः परस्पर-सम्बन्ध इति सर्वमैतिह्यमूह्यमाधुनिकैरित्यलम् ।

## भट्टिमहाकाव्यं काव्यशास्त्रमस्ति

भट्टिमहाकाव्य सम्बन्धे विशेषं जिज्ञासुभिः इदमवश्यं हृदयेऽवधार्यं यत्—

क्षेमेन्द्रदेवेन सुवृत्ततिलकग्रन्थस्य तृतीय विन्यासे सारस्वत-प्रसरस्य चत्वारो भेदा निरूपिताः—

१—शास्त्रम् २—काव्यम् ३—शास्त्रकाव्यम् ४—काव्यशास्त्रमिति । तेषां लक्षणान्यपि तत्रैव तेनोक्तानि—यथा—

शास्त्रं काव्यं शास्त्रकाव्यं काव्यशास्त्रं च भेदतः ।
चतुःप्रकारः प्रसरः सतां सारस्वतो मतः ॥

शास्त्रं काव्यविदः प्राहुः सर्वकाव्याङ्गलक्षणम् ।
काव्यं विशिष्ट-शब्दार्थ-साहित्यं सदलङ्कृति ॥
शास्त्रकाव्यं चतुर्वर्ग-प्रायं सर्वोपदेशकृत् ।
भट्टिभौमककाव्यादि काव्यशास्त्रं प्रचक्षते ॥

१—सर्वविधस्य काव्यस्य तदङ्गानां शब्दार्थरसालङ्कारगुणरीतिदोषादीनां लक्षणं यत्र तद्धि शास्त्रं, यथा—काव्यप्रकाश-साहित्यदर्पणादि ।

२—विशिष्टशब्दार्थानां साहित्यं यत्र यच्च सालङ्कारादि तद्धि काव्यम्—रघुवंश-माघ-नैषधादि ।

३—धर्मार्थकाममोक्षादि-चतुर्वर्गाणां लोकव्यवहारादीनां च शिक्षकं शास्त्र-काव्यमुच्यते—रामायण-महाभारतादि ।

४—काव्येन सहैव विशिष्टविषयस्य व्याकरणस्य राजनीत्यमरकोशाद्यावश्यको-पयोगिसार्थस्य शिक्षकं काव्यशास्त्रम् भट्टिकाव्यम् ( रावणवधकाव्यम् ) । भौमक-विरचितम् रावणार्जुनीयम् । एवं हि धातुपाठादिविषयमधिकृत्य बहूनि वासु-देवविजय-कविरहस्यादीनि ग्रन्थरत्नानि निर्मितानि । तान्यपि काव्यशास्त्राण्येव ।

अस्य भट्टिमहाकाव्यशास्त्रस्य लेखने शिवो भगवान् प्रेरक इत्यधस्तात् स्फुटी-भविष्यति—

तत्र संक्षेपतोऽस्य प्रणयननिदानमुपक्षिप्यते । कदाचित् कविरयं कुल्यातटे समु-पविष्टोऽपरतटे तस्याः क्षेत्रे धान्य-( शस्य- ) रोपणं कुर्वाणानन्तेवासिनोऽध्या-पयन्नासीत् । तदानीमेव कश्चिद् यक्षो हस्तिरूपं धृत्वा कुल्यात उन्ममज्ज । अध्यापका-ध्यायिनोरध्ययनवेलायां मध्ये हस्तिनो व्यवधाने षण्मासावकाशपातात् पाठावरोधो भवतीति चिन्तापरवशं गुरुं मनुष्य-स्वरूपे भवन् यक्षोऽवदत् । भगवन् ! ज्ञानपूर्वक-मेवाहं पाठानध्यायमुत्थापितवान् यद्भवानप्रतिमं काव्यशास्त्रं प्रणीय तथ्यपूर्ण-रामकथाधारं लक्ष्यलक्षणात्मकमुत्सर्गापवादशालि पाणिनीयाष्टकमिदं तत्र दर्शयेत् ।

वाल्मीकिनापि परित्यक्तमितिवृत्तं छन्दोबद्ध तत्र निबद्धं काव्यशास्त्रसंज्ञया भवन्नाम्नैव प्रख्यातं स्यादिति वदंस्तिरोबभूव ।

इत्येवमस्य काव्यशास्त्रस्य संक्षिप्तेतिवृत्तम् । तत्कालादेव सर्वेऽपि व्याकरणा-ध्येतारः पाणिनीयाष्टककल्पं प्रकीर्णाऽधिकार-प्रसन्न-तिङन्तकाण्डेति काण्डचतुष्ट-यात्मकं प्रसादगुणगुम्फित छन्दोऽलङ्कार-ध्वनिकोशपूर्णं भट्टिमहाकाव्यमधीत्य महावैयाकरणा महाकवयश्च भवन्ति स्म ।

अतोऽस्य महाकाव्यस्य सर्वत्रैव भारते वङ्गदेशादासौराष्ट्रं नेपालात् कन्या-

कुमारिकां यावत् प्रचारोऽस्ति। इहापि काश्याम् पूर्वं मध्यमपरीक्षायां सिद्धान्त-कौमुदीविकल्पे सर्वमपि भट्टिमहाकाव्यशास्त्रं पाठ्यमासीत्।

अस्तु यथापि स्यात् काव्यशास्त्रमिदं बहूपयोगि माङ्गलिकं रामकथाऽमृतप्लावितं पाणिनीयव्याकरणशिक्षया सहैव साहित्यादिराजनीतिशिक्षकं तथैव मयापि काव्यमर्मविमर्शिकयाऽलंकृतमिति संक्षेपः।

योऽपाययत् पाणिनिशब्दवारिधेः पदाऽमृतं रामकथाऽऽप्लुतं कविः।
सोऽयं महाशाब्दिकभट्टिकाव्यकृत् सदाभिवन्द्यः कविभिश्च शाब्दिकैः॥

व्याकृत्या कोशवृत्ताभ्यामलङ्कृत्या रसेन च।
पञ्चकेनान्वितं भव्यं भट्टिकाव्यं विराजते॥
व्याकृतेश्चषके पेयं रामराजकथाऽमृतम्।
राजनीति-समाजादि-शिक्षा-सम्भृतमुत्तमम्॥

इति हि सूक्ष्मविमर्शनमस्य महाकाव्यस्य सूत्रं वेदितव्यम्।

महाकाव्यशास्त्रेऽस्मिन् सर्वाभ्यर्हितः प्रसादो गुणोऽस्ति। वैदर्भी च रीतिः। वाल्मीकीयरामायणवदेव रावण-वधोत्तरमयोध्यायां रामस्य परावर्तनं विवृतं विद्यते। द्वाविंशतिः सर्गाः सन्ति। मध्ये-मध्ये लक्ष्यदृष्ट्या द्वितीयसर्गे शरद्वर्णनमेकादशे च प्रभातवर्णनं सर्वकाव्यातिशायि वर्तते। दशमसर्गतस्त्रयोदशसर्गावधि प्रसन्नकाण्डे यमकादिभाषासमालङ्कारान्तं साधु काव्यच्छटोच्छ्वलनं लक्ष्यते। द्वादशे निरुपमं राजनीतिनिरूपणं परिशीलनीयं मर्मज्ञैः।

व्याकरणदृष्ट्यादितः पञ्चमसर्गस्य षण्णवतिपद्यान्तं प्रकीर्णकाण्डं, ततो नवम-सर्गावधि चाधिकारकाण्ड, प्रसन्नकाण्डन्तूक्तमेव १०-१३ यावत्। चतुर्दशसर्गतो द्वाविंशतिसर्गपर्यन्तं तिङन्तकाण्डं विजृम्भते। तथाहि—

राजते भट्टिकाव्यं चतुष्काण्डभागादिमस्तु प्रकीर्णः सुबन्तान्वितः।
पञ्चमे सर्ग आस्ते रसाङ्कावधि पद्यमेवं प्रवृत्तोऽधिकारस्ततः॥
सोऽङ्कसर्गावधिस्तु प्रसन्नस्ततो यम्पठन् विन्दते काव्यशक्ति सुधीः।
यस्तिङन्तश्चतुर्दिङ्मितादन्तगो लिड्विलासादिनाम्ना प्रसिद्धोऽपि सः॥

इत्येवं काण्डचतुष्टयस्यापि विशेषविवरणन्तु मदीयसंवादात्मकभट्टिकाव्ये द्रष्टव्यम्। इह तु सर्गचतुष्टयस्यैव मुद्रितस्य परीक्षार्थिच्छात्रोपयोगि विवरणं सर्वोपयोगि च पद्यैरिह गद्यैरन्ते मनाङ् निर्दिश्यते क्रमशः।

काव्यप्रिया व्याकरणप्रिया ये छात्राः परीक्षोत्तरणे प्रवृत्ताः।
बुद्धिप्रकर्षाय विविच्य तेषां पुरोऽर्पये पद्यमयं प्रघट्टम्॥

स पाणिनेर्भक्तवरो मनस्वी भट्टिः कविः प्राकृत काव्यमेतत् ।
तदष्टकाधारमुदारचेताः पाठ्यं यदास्ते किल मध्यमायाम् ॥
अगन्तशब्दाः प्रथमेऽत्र सर्गके प्रकीर्णकाण्डं शरसर्ग (५) टाप्पुरः ।
वृत्तं समं सन्धिसमाससम्भृतं लुङ्लिट्सलङ्लड्लृडिहास्ति लोडपि ॥
आद्येऽस्ति पद्ये रुचिरेति वृत्तकं सर्वत्र सर्गेऽप्युपजातिरेधते ।
पुत्रेष्टियागेन चतुःसुतोद्भवो ज्ञेयस्ततो गाधिसुतागमोऽन्ततः ॥
सर्गे द्वितीयेऽपि हलन्तशब्दाः शरत्समृद्ध्या लिङ्गुपैति पूर्वम् ।
मारीचरामप्रबलप्रवादो लड्लुङ्लङां [1]लृट् च सहैव लोटा ॥
तृतीयसर्गे विधिलिङ्लुटौ द्वौ रामाऽभिषेकेऽप्यथ विघ्नपातः ।
आद्याश्च लो [2]राघवनीतिवार्ता निवर्तनार्थं च कनीयसोऽस्ति ॥
चतुर्थसर्गेऽपि कृदन्तशब्दाः स्त्रीलिङ्गशब्दा मुनिरामवार्ता ।
सहापि लो लिङ्रहिताः सलुट्का अनुष्टुभा शूर्पणखाभिसारः ॥

इत्येवं सम्प्रति चतुर्थसर्गान्तस्यैव मुद्रितस्यास्य महाकाव्यस्येतिवृत्तं संक्षिप्तमभ्यस्य काव्यमर्मविमर्शिकया टीकया च सर्वं काव्यरहस्यं ज्ञात्वा परीक्षामुत्तरन्तश्छात्राः प्रमोदन्तामिति दिक् ।

अस्य महाकाव्यस्य सन्ति बह्वष्टीकास्तत्र कियतीनामुपलब्धनाम्नामिह-निर्देशः क्रियते—

१—जयमङ्गला ( जयमङ्गलकविकृता ) २ भाषाविवृतिः ( पुरुषोत्तमदेव-कृता ) ३ भट्टिबोधिनी ( नारायणभट्टकृता ) ४ सुबोधिनी ( कुमुदानन्दकृता ) ५ भट्टिचन्द्रिका ( विद्याविनोदाचार्यकृता ) ६ सर्वपथीनटीका ( मल्लिनाथ सूरिकृता) ७ जयन्ती ( कन्दर्पचक्रवर्तिकृता ) ८ कलापदीपिका (पुण्डरीकाक्षकृता) ९ मुग्ध-बोधिनी ( भरतमल्लिककृता ) १० मुग्धबोधिनी ( रामानन्दकृता ) ११ कलापदीपिका ( विद्यासागर-विद्यानिधिकृता ) १२ संक्षिप्तसारविवरणी ( विद्या-नन्दकृता ) १३ सुपद्मविवरणी ( विद्यानिधिकृता ) । इतोऽप्यन्यासां बहूनां टीका-नान्तु यवनराज्यकाले विलोपोऽप्यभूदेव ।

इत्थं सतीष्वपि बहुषु टीकासु अस्या मर्मविमर्शिकायाष्टीकाया वैशिष्ट्यमिद-मस्ति यदत्र प्रथमम् १ अन्वयः, २ ततो राष्ट्रभाषायामनुवादः, ३ ततो व्याख्याऽ

---

टिप्पणी—१. २–४० पद्ये शत्रन्तलृट्प्रयोगः ।
२. ३–१५ विधिलिङ् मध्यमबहुत्वे, ५४–५५ उत्तमैकवचने च

लङ्कारनिर्देशश्च, ४ कोश, ५ समास, ६ तद्धितशब्दसिद्धि, ७ तिङन्तसिद्धि, ८ कृदन्तसिद्धि, ९ वाच्यपरिवर्तनम्, १० शिक्षा, ११ प्रतिश्लोकञ्च श्लोकोपक्रमे प्रसङ्गनिर्देश, १२ टिप्पण्या च सन्धिविवरणमन्यच्चापि वैशिष्टचम् यत्किमपि कुत्रचिदस्ति तत्प्रत्तमस्ति ।

इत्येव टीकयानया ज्ञातमर्मसारा सम्प्रघुष्टाऽध्यायीका मत्प्रदर्शित-सूत्र-वृत्ति निर्माण-प्रकारेण च ज्ञाताष्टाध्यायी-सूत्रार्थ सारा. सुबुद्धाश्छात्रा. स्वयमेवेद महाकाव्य परिशीलयितुमर्हन्तीति नास्ति सन्देहलेश । भट्टिकाव्यद्वारा व्याकरणाध्ययनेन लक्ष्यसाधुत्वेन व्याकरणे पाटवन्तु श्रायास्यत्येव तेनैव सह "एक शब्द सम्यग्ज्ञात सुष्टु प्रयुक्त स्वर्गे लोके कामधुग्भवति ।" इत्यादि पतञ्जल्युक्तफलमप्युपलभ्यते । इत्थमधीयानानामध्यायिनाम् आधुनिक-परीक्षोत्तरणञ्च तेषा वामहस्तकृत्यमेवास्तीति स्वल्पमेवोक्त्वा विरमाम । अस्य भट्टिकाव्यशास्त्रस्य सम्पादनकृत्य श्री प० गोपालदत्त पाण्डेय महोदया भूयसा मनोयोगेन महता परिश्रमेण च व्यधुरिति पौन:पुन्येन भृश साधुवादप्रदानेऽपि न मेऽन्तरात्मा सन्तोषमेतीति अधमर्ण एवाह तेषाम् । अन्ते चास्यावश्यकमभिधीयते ।

हस्ते धृत्वा पाणिनीयाष्टक तच्छात्रै सर्वै पठचता भट्टिकाव्यम् ।
यैषा रीति काव्यमात्रस्य शिक्षा काव्यस्यास्य त्याजनीया जघन्या ॥

स स्वतन्त्र कवि शब्दशास्त्रानुग
रामवृत्ताऽमृतप्लावित साऽमरम् ।
यच्चकारानुप्रासप्रसादादिमी
रावणान्तामिध काव्यमत्यद्भुतम् ॥
कालतस्तद्विधर्मक्षितीशार्दिते
पारतन्त्र्यप्रधाने युगेऽन्तर्हितम् ।
तस्य काव्यस्य मर्मप्रकाशोऽधुना
भारते स्यात् स्वतन्त्रे शिवाऽनुग्रहात् ॥

शब्दशास्त्रस्य पाठेऽपि पाठ्य भवेद्, भट्टिकाव्य क्रमेणेति मे सम्मतम् ।
विभ्रता शाब्दिकत्व कवित्व तथा, राजनीतिज्ञता ते परीक्षार्थिन ॥

इति शिवम्

डी० ५६।३१ सिगरा वाराणसी
सौर—१२।३।२०३३ वै०

**डॉ० श्रीगोपालशास्त्री (दर्शनकेशरी)**
( काशीपण्डितसभाध्यक्षः )

# गद्ये कथासारः

## प्रथमसर्गे—

सनातनस्य विष्णोर्भगवतोऽवतारजनकतया दशरथस्य राज्ञो गुणवर्णनम्। तदीयराजधान्या अयोध्याया वर्णनानन्तरम् कौशल्या-केकयी-सुमित्रोद्वाहविधिः। ततो वाराङ्गनाभिरानीतस्य विभाण्डकसुतस्य नृपपुत्रेष्टियाग-सम्पादनम्। ततो रामभरतलक्ष्मणशत्रुघ्नोत्पत्तिः। तेषां शिक्षाधिगमानन्तरं राक्षसोद्विग्नस्य विश्वामित्रस्य रामयाचनार्थं दशरथपार्श्वागमः। नृपमुनि-संवादानन्तरमनिच्छतोऽपि नृपस्य ऋषिशापभीत्या रामलक्ष्मणयोस्तस्मै समर्पणमिति सर्गसंक्षेपः।

## द्वितीयसर्गे—

वनं प्रस्थितस्य रामस्य पुरो युद्धप्रस्थानोचितशरद्वर्णनमूनविंशतिपद्यावधि। ततो विश्वामित्रद्वारा रामायास्त्रविद्या-प्रदानं रामकर्तृकस्ताडकावधश्च। सिद्धाश्रमोपस्थितौ यागारम्भे तद्विघातार्थं मारीचादिराक्षसोपस्थितिः। तत्र राम-मारीचसंवादः। राक्षसान्निहत्य मारीचविद्रावणानन्तरं रामस्य मुनिप्रशंसितस्य मैथिलयज्ञभूमिगमनम्। तत्र रामकर्तृकधनुर्भङ्गानन्तरम् मैथिलराजदूताहूतनृप-दशरथोपस्थितौ चतुर्णामपि भ्रातॄणां सीतामाण्डव्यूर्मिलाश्रुतकीर्तिसंज्ञकचतुष्कुमारीपाणिपीडनविधिः। ततो दशरथस्य राज्ञोऽयोध्याप्रस्थाने मध्येमार्गं परशुरामागमः। वृद्धनृपानुनयानङ्गीकर्तुस्तस्य रामकर्तृकः पराजयः। ततो विजयहर्षातिरेकाद् द्रुतं रामसैन्यस्यायोध्याप्रवेश इति सर्गसंक्षेपः।

## तृतीयसर्गे—

नृपतिना महाराजदशरथेन प्रारब्धं प्रजाप्रियस्य रामस्य सर्वजनतोपकारि पूर्वचिन्तितं राज्याभिषेकं कैकयी रामस्य वनप्रयाणं भरतस्य राज्याभिषेकं वृण्वाना विजघान। राजा हि पूर्वप्रदत्तवरद्वयपाशबद्धो रामस्य वन प्रयाणमादिदेश। पौरजनैरुपरुध्यमानोऽपि रामः पित्राज्ञापालन पुत्रकर्तं

व्यमित्युपदिशँस्तान् वनं प्रवव्राज । तद्वियोगे राज्ञि स्वर्गते मातामहावासाद् दूताहूतो भरतो राज्ञ और्ध्वदेहिकं विधिमनुतष्ठौ । ततः प्रजाभिरुपकल्पितमपि निजराज्याभिषेकं विहाय स रामं प्रत्यावर्तयितुं वनं जगाम । मध्येमार्गं भरद्वाजमुनेर्विविधातिथ्यमङ्गीकृत्य चित्रकूटस्थितं राममेव प्रतस्थे । तत्र शोकवृत्तश्रावणानन्तरं रामभरतयोः संवादः । अन्ते च तदीय-युक्त्या मुद्रितमुखस्यापि रामस्याज्ञापालनधियैव भरतस्तच्चरणपादुकामादायायोध्यां प्रतिनिववृते । इति तृतीय-सर्ग-संक्षेपः ।

## चतुर्थसर्गे—

भरतनिवृत्तौ पौरागमनशङ्कया रामस्यात्रेस्तपोवनप्रवेशस्ततोऽपि दण्डकारण्यवासः । विराधवधानन्तरम् शरभङ्गमुनिनिर्दिष्टसुतीक्ष्णाश्रमगमनम् । तत्र कृतोटजनिवासस्य रामस्य विविधदिनचर्य्यावर्णनेन सहैव मुनिगणरक्षावर्णनम् । तत्रैव शूर्पणखाभिसारस्ततो लक्ष्मणकर्तृकस्तन्नासिकाकर्णच्छेदः । ततोऽतिक्रुद्धया तया रामलक्ष्मणौ निन्दन्त्या खरदूषणोद्दीपनम् । तेषाञ्च रामाग्नौ शलभीभावोऽन्यराक्षसैः सह, अन्ते च त्रिशिरोवध इति सर्गसंक्षेपः ।



॥ श्री. ॥

# अथ भट्टि-महाकाव्यम्

## ( रावण-वध-महाकाव्य-शास्त्रम् )

### काव्य-मर्मविमर्शिकाख्यटीकोपेतम्



प्रतिपदमृजुबोधं राजनीतेर्दधानं
सरल मसृण-मञ्जु व्याकृतिज्ञानगम्यम् ।
रघुवर-वर-वृत्तव्याजतो लोकशिक्षां
ददतखिलपठित्रे राजतां भट्टिकाव्यम् ॥

महावैयाकरणो महाकविश्चार्यं स्वतन्त्रप्रज्ञो भर्तृहरि. श्रीरामचरितामृत-रस-सम्भृतं लक्ष्यलक्षणसगृहीत रावणवधाभिध महाकाव्य विनिर्मित्सुरादौ 'आशीर्नमस्क्रियावस्तुनिर्देशो वाऽपि तन्मुखम्' इति वस्तुनिर्देशात्मकं भगवद्रामचन्द्राविर्भावमङ्गलमवतारयति 'अभूदिति'—

**[1]अभन् नृपो विबुध-सखः परन्तपः, श्रुताऽन्वितो दश-रथ इत्युदाहृतः ।**
**गुणैर् वरं भुवन-हित-च्छलेन यं, सनातनो जनकमुपागमत् स्वयम् ॥१॥**

---

(१) टिप्पणी - पूर्वं व्याकरणशिक्षा भट्टिकाव्यद्वारा अपि भवति स्म इति। तथैव सरलया पद्धत्या भू-धातु । शब्देषु अदन्त शब्दाना प्रथमान्तरूपाणि । 'अकारो वासुदेवः स्याद्' इति एकाक्षरीकोशात् 'प्रत्यभिज्ञाशास्त्रानुसारेण अकारस्य अनुत्तर-शिवाभिधानाच्च अकारोच्चारणं मङ्गलम् । अभूच्छब्दोऽपि सत्तार्थकतया मङ्गलम् । सन्धयोऽपि सरला एव सूचिता । पद्यानि चेह सर्वाण्यपि प्रसादगुणगुम्फितान्येव

**अन्वयः**—विबुधसखः परन्तपः श्रुतान्वितः दशरथ इति उदाहृतः नृपः अभूत् । स्वयं सनातनः गुणैः वरं यं भुवनहितच्छलेन जनकम् उपागमत् । रुचिराछन्दः—'जभौ सजौ गिति रुचिरा चतुर्ग्रहैः' । 'अकारो वासुदेवः स्याद्' इति एकाक्षरकोशाद् देवतावाचकस्य अकारस्योच्चारणान्न जगणदोषः ।

**हिन्दी**—देवताओंका मित्र, शत्रुओंका सन्तापक, शास्त्रज्ञानसे युक्त 'दशरथ' नामका एक प्रसिद्ध राजा हुआ । स्वयंभू सनातन भगवान् संसारके हित करनेके व्याजसे उस गुण-श्रेष्ठ राजाको पिता बनाकर आविर्भूत हुए ।

**व्याख्या**—विबुधसखः देवसुहृत् विद्वन्मित्रं वा, परन्तपः रिपुहन्ता, श्रुतान्वितः शास्त्रसम्पन्नः, दशरथ इति नाम्ना उदाहृतः प्रसिद्धः नृपः राजा अभूत्= आसीत् । स्वयम् स्वात्मरूपतः सनातनः अजन्मा नित्यो देवः गुणैः दयादाक्षिण्यादिभिः वरं श्रेष्ठं यं ( दशरथम् ) भुवनहितच्छलेन संसारकल्याणच्छद्मना, जनकं पितरम्, उपागमत् उपागात् । अत्र सनातनस्य जन्मासम्भव इति विरोधोऽपि स्वातन्त्र्यात्सङ्कोचं बिभ्रतः परमशिवस्य सम्भवत्येवेति आगमात्समाधेयः । अतोऽत्र विरोधाभासोऽलङ्कारः । 'आभासत्वे विरोधस्य विरोधाभास उच्यते' इति । उपागमे भुवनहितच्छलस्य हेतुकथनात् काव्यलिङ्गमपि । ( पञ्चमसर्गस्य षण्णवतितमपद्यान्तं प्रकीर्णकाण्डम् ) ।

---

सन्ति । अतश्च व्याकरणशिक्षयैव काव्यमिदमध्येतव्यम्, न तु केवल-काव्यबुद्ध्येति मया तथैवास्य मर्मविमर्शिका टीकेयं निबद्धा । सन्धयोऽपि यथावसरं टिप्पण्यामेव द्रष्टव्याः । तथाहि – अभूत् + नृपः 'यरोऽनुनासिकेऽनुनासिको वा ८।४।४५' इति तस्य नत्वे अभून्नृपः । नृपः विबुधसखः—इत्यत्र विसर्गासिद्धया रोः 'हशि च ६।१।११४' इत्युत्वे, गुणे, नृपो विबुधसखः । दशरथ इति—इत्यत्र तु विसर्गा-प्रवृत्या एकदेशविकृतमनन्यवद् इति रेफस्यैव रुत्वबुद्ध्या 'भोभगोअघोअपूर्वस्य योऽशि ८।३।१७' इति यत्वे, 'लोपः शाकल्यस्य ८।३।१९ इति' लोपः । तस्याऽसिद्धया न गुणः । इति उदाहृतः । यण्सन्धिः । एवं छात्रैः सर्वत्र सन्धिः स्वयं कार्यः ।

कोश —अमरा निर्जरा देवास्त्रिदशा विबुधा सुरा ।
राजा राट् पार्थिव क्ष्माभृन्नृपभूपमहीक्षित ।
अथ मित्रं सखा सुहृत् ।
अमित्रारिपरारातिप्रत्यर्थिपरिपन्थिन ।
शाश्वतस्तु ध्रुवो नित्य सदातनसनातना ।
त्रिष्वथो जगती लोको विष्टप भुवन जगत् ।
तातस्तु जनक पिता ।

समास —विबुधाना सखा इति लौकिकविग्रहे विबुध + आम्,सखि + सु इति अलौकिकविग्रहे 'षष्ठी २।२।८' इति समासे, 'कृत्तद्धितसमासाश्च १।२।४६' इति प्रातिपदिकसज्ञाया 'सुपो धातुप्रातिपदिकयो. २।४।७१' इति सुपो लुकि, 'प्रथमानिर्दिष्टं समास उपसर्जनम् १।२।४३' इति सूत्रेण 'षष्ठी' इति समाससूत्रे प्रथमानिर्दिष्टस्य षष्ठ्यन्तविबुधशब्दस्य उपसर्जनसज्ञायाम् 'उपसर्जनम् पूर्वम् २।२।३०' इति उपसर्जनस्य विबुधशब्दस्य पूर्वनिपाते, विबुधसखि-शब्दात् 'राजाह सखिभ्यष्टच् ५।४।९१' इति टचि अनुबन्धलोपे विबुधसखि+अ इति जाते, 'यचि भम् १।४।१८' इति भसज्ञाया 'यस्येति च ६।४।१४८' इति भस्येकारस्य लोपे ख् इत्यस्य स्वरसयोगे विबुधसख इत्यस्य तद्धितान्तस्य प्रातिपदिकतया सौ रुत्वविसर्गे विबुधसखः। अन्यसमाससिद्धिरपि विबुधसखशब्दवदेव ज्ञेया। यथा—श्रुतै. अन्वित: इति लौकिकविग्रहे श्रुत + भिस्, अन्वित + सु इत्यलौकिकविग्रहे 'तृतीया २।१।३०' इति योगविभागेन समासे पूर्ववत् सुब्लुगादि पूर्वनिपातान्तकार्ये सन्धिकार्ये च श्रुतान्वित'। दशसु (दिक्षु) रथो यस्येति लौकिकविग्रहे दशन् + सुप्, रथ + सु इत्यलौकिकविग्रहे 'अनेकमन्यपदार्थे २।२।२४' इति बहुव्रीहौ पूर्ववत् समासत्वात् सुब्लुगादिकार्ये 'सप्तमीविशेषणे बहुव्रीहौ २।२।३५' इति पूर्वनिपाते 'नलोप: प्रातिपदिकान्तस्य ८।२।७' इति नलोपे दशरथशब्दसिद्धि'। एवमेवाग्रे समाससिद्धिरूह्या। केवल समासविग्रह एव दर्शितो भविष्यति। यथा—भुवनेभ्यो हितम् भुवनहितम्, तस्य छलम् भुवनहितच्छलम्, तेन भुवनहितच्छलेन। अत्र 'छे च ६।१।७३' इति तुकि जश्त्वश्चुत्वचर्त्वकार्यविशेषो ज्ञेय:।

कृदन्तः—परान् तापयतीति लौकिकविग्रहे पर+शस् तापि इत्यलौकिक-विग्रहे, 'द्विषत्परयोस्तापेः ३।२।३९' इति कर्मपदोपपदात् तापेः खचि अनुबन्ध-लोपे पर+शस्, तापि+अ इत्यत्र 'उपपदमतिङ् २।२।१९'इति सूत्रेण 'गतिकार-कोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति वचनात् सुबुत्पत्तेः प्रागेव समासे समासत्वात् कृदन्तत्वाच्चोभयथा प्रातिपदिकतया 'सुपो धातुप्रातिपदिकयोः २।४।७१' इति शसो लुकि पर तापि+अ इति जाते'खचि ह्रस्वः ६।४।९४' इति ह्रस्वे 'णेरनिटि ६।४।५१' इति णिलोपे' 'अरुर्द्विषदजन्तस्य मुम् ६।३।६७' इति पूर्वपदस्य मुमागमे अनुबन्धलोपे परम्+तप इत्यत्रानुस्वारे परसवर्णे च कृते परन्तपशब्दात् सौ रुत्वविसर्गे परन्तपः (इत्थं हि सोपपदकृदन्तपदसिद्धिः कार्या)। यथा—नॄन् पातीति लौकिके विग्रहे नृ+शस् पा इत्यलौकिके विग्रहे 'तत्रोपपदं सप्तमीस्थम् ३।१।९२' इति नॄन् इत्यस्योपपदसंज्ञायाम् 'आतोऽनुपसर्गे कः ३।२।३' इति कर्मोपपदात् पा रक्षणे इतिधातोः कप्रत्यये अनुबन्धलोपे 'आतो लोप इटि च ६।४।६४' इति धात्वाकारलोपे, स्वरयोगे, नृ शस् प—इत्यत्र पूर्ववत् उपपदसमासादिकृत्ये नृपशब्दसिद्धिर्ज्ञेया।

तद्धितः—सना भवः सनातनः इति विग्रहे सनेत्यव्ययात् 'सायंचिरंप्राह्णे-प्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ४।३।२३' इति ट्यु प्रत्यये अनुबन्धलोपे यु इत्यतः पूर्वम् तुडागमे तस्याप्यनुबन्धलोपे 'युवोरनाकौ ७।१।१' इति योः अनादेशे सनातन इत्यस्य तद्धितान्ततया प्रातिपदिकत्वात् सौ रूपम्।

तिङन्तः—अभूत्—इत्यत्र 'भू-सत्तायाम्' इति भूधातोर्लुङि तत्स्थाने 'तिप्तस्-झि० ३।४।७८' इति तिपि अनुबन्धलोपे 'इतश्च ३।४।१००' इति इकारलोपे, 'च्लिलुङि ३।१।४३' इति च्लौ, तस्य 'च्लेःसिच् ३।१।४४'इति सिजादेशे 'गाति-स्थाघुपाभूभ्यः सिचः परस्मैपदेषु २।४।७७' इति सिचो लुकि, 'तिङ्शित् सार्वधातु-कम्'३।४।११३ इति सार्वधातुकसंज्ञायां 'सार्वधातुकार्धधातुकयोः ७।३।८४' इति प्राप्तस्य गुणस्य 'भू-सुवोस्तिङि ७।३।८८' इति निषेधे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः ६।४।७१'इति धातोःअडागमे, अनुबन्धलोपे अभूत्। एवं हि लुङि सर्वापि सिद्धिः। 'गम्लृ-गतौ' इति लृदनुबन्धात् गम्धातोः लुङि, तिपि, पूर्ववत् सर्वकार्ये 'पुषादि-द्युताद्यॢदितः परस्मैपदेषु ३।१।५५' इति च्लेः अङादेशकार्यविशेषः। पूर्वमत्र पद्य-त्रयं यावत् लुङ एव प्रयोगाः सन्ति। इति विशेषकार्यमेवोह्यम्।

**वाच्यपरिवृत्तिः**—कर्तृवाच्ये प्रयोगाः सन्तीति भाव-कर्मवाच्ये प्रथमान्ताः तृतीयान्ताः कार्याः । नृपेण दशरथेन सनातनेन इत्यादि । अभूत् इत्यस्य अभावि । द्वितीयान्ताः प्रथमान्ताः स्युः । वर्गः यः जनकः इति । स्वयम् इत्यस्य अव्ययत्वात् न तथात्वम् । उपागमत् इत्यस्य उपागमि[1] । एवमेव सर्वत्र पद्ये वाच्यपरिवृत्तिः कार्या । तथाहि—

'उक्ते कर्तरि प्रथमा स्यात्तृतीया स्यादनुक्तके ।
उक्ते कर्मणि प्रथमा स्याद् द्वितीया स्यादनुक्तके' ।। इति ।

**शिक्षा**—'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्' ॥

इति गीतोक्तवचसा यथा भगवान् देशधर्मरक्षार्थमवतरति, तथा मानवा अपि देशधर्म-रक्षार्थं सन्नद्धास्तिष्ठन्तु—इति शिक्षयति पद्यमिदम् ॥१॥

पद्यत्रयेण दशरथनृपकर्तव्यमाख्याति—

**[2]सोऽध्यैष्ट वेदांस् त्रि-दशानयष्ट, पितॄनपारीत् सममंस्त बन्धून् ।**
**व्यजेष्ट षड्-वर्गमरंस्त नीतौ, स-मूल-घातं न्यवधीदरींश् च ॥२॥**

**अन्वयः**—सः वेदान् अध्यैष्ट त्रिदशान् अयष्ट पितॄन् अपारीत् बन्धून् सममंस्त षड्वर्गं व्यजेष्ट नीतौ अरंस्त अरीन् च समूलघातं न्यवधीत् । इतः उपजातिच्छन्दः आ पञ्चविंशपद्यात् । यत्र कुत्रचित् मध्ये केवले इन्द्रवज्रो-पेन्द्रवज्रे अपि स्तः । स्यादिन्द्रवज्रा यदि तौ जगौ गः । उपेन्द्रवज्रा जतजास्ततो

---

(१) 'नोदात्तोपदेशस्य मान्तस्यानाचमेः ७।३।३४' इति वृद्धिनिषेधः ।

(२) **टिप्पणी**—सः अध्यैष्ट इत्यत्र 'पूर्वत्रासिद्धम् ८।२।१' इति विसर्गासिद्ध्या रकारोपस्थितौ 'एकदेशविकृतमनन्यवत्' इति रुत्वं मत्वा 'अतो रोरप्लुतादप्लुते ६।१।११३' इति रोः उत्वे 'आद्गुणः ६।१।८७' इति गुणे 'एङः पदान्तादति ६।१।१०९' इति पूर्वरूपे सोऽध्यैष्ट । अरीन्+च इत्यत्र 'नश्छव्यप्रशान् ८।३।७' इति नस्य रुत्वे 'अत्रानुनासिकः पूर्वस्य तु वा ८।३।२' इति पूर्वस्वरस्यानुना-सिकत्वे उकारस्येत्संज्ञया लोपे रेफस्य 'खरवसानयोर्विसर्जनीयः ८।३।१५' इति विसर्गे, तस्य 'विसर्जनीयस्य सः ८।३।३४' इति विसर्गस्य सकारे 'स्तोःश्चुना श्चुः ८।४।४०' इति सस्य शकारे अरींश्च ।

गौ। अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः। इत्थं किलाऽन्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम। इति।

हिन्दी—महाराज दशरथने वेदोंका अध्ययन किया, देवताओंकी पूजा की, पितरोंकी तृप्ति की, बन्धुओंका सम्मान किया। काम क्रोध लोभ मोह मद मात्सर्य-अन्तःस्थित इन षड्वर्ग शत्रुओंको जीता, राजनीतिके अनुकूल व्यवहार किया और बाहरी शत्रुओंका समूल नाश किया।

व्याख्या—स दशरथः वेदान् श्रुतीः अध्यैष्ट अध्यगीष्ट, त्रिदशान् देवान् अयष्ट अयाक्षीत् (अग्निष्टोमादियागैः), पितॄन् अग्निष्वात्तादीन् अपारीत् अताप्सीत्, बन्धून् स्वजनान् सममंस्त सदकार्षीत्, षड्वर्गम् कामक्रोधलोभमोहमदमात्सर्य्यरूपं निद्रातन्द्राभयक्रोधालस्यदीर्घसूत्रतारूपं वा व्यजेष्ट अजैषीत्, नीतौ सामदामदण्डभेदात्मकराजनीतौ अरंस्त व्यवाहार्षीत् (विश्रब्धं व्यवाहार्षीत्) अरीन् रिपून् च पुनः समूलघातम् न्यवधीत् मूलेन हत्वा अहिंसीत्। अध्यैष्टादिक्रिया-यौगपद्येन समुच्चयाद्दीपकालङ्कारः।

कोश :- श्रुतिः स्त्री वेद आम्नायः।
अमरा निर्जरा देवा इत्याद्युक्तम् (१ श्लो०)।
रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः। इति।

कृदन्तसिद्धिः—विदन्ति धर्माधर्मौ यैः इति वेदाः तान् वेदान्। 'अकर्तरि च कारके संज्ञायाम् ३।३।१९' इति विद ज्ञाने इति धातोः करणे घञि गुणे सिद्धिः। मूलेन सह वर्तते इति समूलम् इति लौकिकविग्रहे मूल+टा सह इति अलौकिकविग्रहे 'तेन सहेति तुल्ययोगे २।२।२८' इति बहुव्रीहिसमासे समासत्वात् प्रातिपदिकतया सुपो लुकि सह इत्यस्य 'वोपसर्जनस्य ६।३।८२' इति सादेशे समूलशब्दसिद्धिः। ततः समूलं हत्वा इति समूलघातम् इति विग्रहे 'समूला-कृतजीवेषु हन्कृञ्ग्रहः ३।४।३६' इति समूलोपपदात् 'हन-हिंसागत्योः' इति हन् धातोः णमुल्प्रत्यये अनुबन्धलोपे 'हो हन्तेर्ञ्णिन्नेषु ७।३।५४' इति हस्य कुत्वेन घकारे 'हनस्तोऽचिण्णलोः ७।३।३२' इति नकारस्य तकारे 'अत उपधायाः ७।२।११६' इत्युपधावृद्धौ समूलं घातम् इति जाते, 'कृन्मेजन्तः १।१।३९' इति घातम् इत्यस्य अव्ययत्वात् 'अमैवाव्ययेन २।२।२०' इति समासे, समासत्वात् प्रातिपदिकतया सुपो लुकि समूलघातम् इति, कृदन्तत्वात् प्रातिपदिकतया सौ तस्य च 'अव्ययादाप्सुपः २।४।८२' इति सुपो लुकि रूपम्।

तिङन्त-सिद्धिः —'कषादिषु यथाविध्यनुप्रयोग ३।४।४६' इति हन् धातोः अनुप्रयोगे लुङि तिपि अनुबन्ध-लोपे हन् + ति इत्यत्र 'हनो वध लिङि २।४।४२' 'लुङि च २।४।४३' इति हनोऽदन्ते वधादेशे,'च्लि लुङि ३।१।४३' इति च्लौ,'च्ले सिच् ३।१।४४' इति सिजादेशे वधादेशस्य अदन्तत्वाद् अनेकाच्त्वेन इण्निषेधाभावे 'आर्द्धधातुकस्येड्वलादे ७।२।३५' इति इडागमे, अनुबन्धलोपे 'अतो लोप ६।४।४८' इति अलोपे, तस्य स्थानिवद्भावेन 'अतो हलादेर्लघोः ७।२।७' इति वृद्ध्यभावे, 'इतश्च ३।४।१००'इति इकारलोपे' अस्ति सिचोऽपृक्ते ७।४।१७' इति अपृक्तस्येडागमे 'इट ईटि ८।२ २८' इति सलोपे, 'सिज्लोप एकादेशे सिद्धो वाच्य.' इति साहाय्येन 'अक सवर्णे दीर्घ ६।१।१०१' इति दीर्घे 'लुङ्लङ्लृङ्क्ष्वडुदात्त. ६।४।७१' इति अडागमे, अनुबन्धलोपे, उपसर्गयोगे यणि न्यवधीत् ।

एवं हि पॄ पालनपूरणयो इति पॄ धातो लुङि,लस्य स्थाने तिपि अनुबन्धलोपे सार्वधातुकत्वात् 'च्लि लुङि ३।१।४३' इति च्लौ तस्य सिचि अनुबन्धलोपे आर्द्धधातुक शेषः ३।४।११४' इति सिच आर्द्धधातुकतया 'आर्द्धधातुकस्येड्वलादे. ७।२।३५' इति सिच इडागमे,'सिचि वृद्धि. परस्मैपदेषु ७।२।१'इति वृद्धौ पारिस् + ति इति जाते 'इतश्च ३४।१०९' इति इकारलोपे 'अस्तिसिचोऽपृक्ते ६।४।९६' इति अपृक्तस्येडागमे 'इट ईटि ८।२।२८' इति सिचो लोपे, 'सिज्लोप एकादेशे सिद्धो वाच्य' इति परिभाषया सिज्लोपस्य सिद्धतया सवर्णदीर्घे अडागमे अनुबन्धलोपे अपारीत् । अधिपूर्वकात् 'इङ्-अध्ययने' इति इङ् धातोरनुबन्धलोपे लुङि, तत्स्थाने त प्रत्यये, तस्य सार्वधातुकतया च्लौ तस्य सिचि अनुबन्धलोपे 'सार्वधातुकार्द्धधातुकयो· ७।३।८४' इति गुणे 'आडजादीनाम् ६।४।७२' इति आडागमे 'आटश्च ६।१।९०' इति वृद्ध्येकादेशे 'आदेशप्रत्यययोः ८।३।५९' इति षत्वे 'ष्टुना ष्टुः ८ ४।४१' इति तस्य टकारे, उपसर्गस्य यणि अध्यैष्ट । 'यज देवपूजासगतिकरणदानेषु' इति यज धातो. लुङि, तप्रत्यये च्लौ, तस्य सिचि अनुबन्धलोपे, 'झलो झलि ८।२।२६' इति सलोपे 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशा षः ८।२।३६' इति जस्य षकारे 'ष्टुना ष्टुः ८।४।४१' इति ष्टुत्वे अडागमे अयष्ट । एवम् विपूर्वकात् 'जि-जये' इति जि धातोः 'विपराभ्या जेः १।३।१९' इति आत्मनेपदे लुङि त प्रत्यये, च्लौ, तस्य सिचि अनुबन्धलोपे, सिच आर्द्धधातुकतया 'सार्वधातुकार्द्धधातुकयो. ७।३।८४' इति गुणे, षत्वे ष्टुत्वे अडागमे उपसर्गस्य

यणि व्यजेष्ट। 'मन-ज्ञाने'—इति दैवादिकस्य मन् धातोः लुङि आत्मनेपदे तप्रत्यये, च्लौ तस्य सिचि अनुबन्धलोपे 'नश्चापदान्तस्य झलि ८।३।२४' इति नस्यानुस्वारे अडागमे अमंस्त। एवम् अरंस्त। सममंस्त इत्यत्र समुपसर्गयोगो ज्ञेयः ( आत्मनेपदसिद्धिरेवं सर्वत्र लुङि )।

वाच्यपरिवर्तनम्—तेन वेदा अध्यगायिषत, अध्यायिषत, अध्यैषत। त्रिदशा अयक्षत। पितरः अपारिषत। बन्धवः सममंसत। षड्वर्गः व्यजायि। नीतौ अरामि। अरयः समूलघातम् न्यघानिषत न्यवधिषत न्यहसत।

शिक्षा—सर्वस्यापि मानवस्य ऋषिदेवपितृसमाजर्णस्य आवश्यकस्य ऋण-चतुष्टयस्यापाकरणं परमं कर्तव्यम् इति शिक्षयति पद्यम् इदम् ॥२॥

**[1]वसूनि तोयं घन-वद् व्यकारीत् सहाऽऽसनं गोत्र-भिदाऽध्यवात्सीत्।**
**न त्र्यम्बकादन्यमुपास्थिताऽसौ, यशांसि सर्वेषु-भृतां निरास्यत् ॥३॥**

अन्वयः—असौ वसूनि तोयं घनवद् व्यकारीत् ( प्रजासु इति शेषः ), गोत्र-भिदा सह आसनम् अध्यवात्सीत्, त्र्यम्बकाद् अन्यम् न उपास्थित, सर्वेषुभृताम् यशांसि निरास्यत्।

हिन्दी—महाराज दशरथने मेघोंके जल बरसानेके समान प्रजामें धनकी वृष्टिकी अर्थात् मुक्तहस्तसे दान अनुदान दिया, इन्द्रके साथ एक आसन पर उपवेशन किया, शिवजीके अतिरिक्त किसी दूसरे देवकी पूजा नहीं की और सभी धनुर्धारियोंके यशको परास्त किया।

व्याख्या—असौ दशरथः, वसूनि धनानि, तोयम् अम्भः घनवत् जीमूतवत् व्यकारीत् व्यकिरत्, गोत्रभिदा वज्रिणा सह सार्द्धम्, आसनम् पीठम् (सिंहासनम्) अध्यवात्सीत् अलमकार्षीत्, त्र्यम्बकात् त्रिपुरान्तकाद् अन्यम् अपरम् न उपास्थित नहि अयाक्षीत्। सर्वेषुभृताम् सकलधनुर्धारिणाम् यशांसि कीर्तीः निरास्यत् तिरोऽकार्षीत्। घनस्य तोयवितरणमिव राज्ञो धनवितरणमिति सादृश्यादुपमा-

---

(१) टिप्पणी—सन्धिः—सर्व+इषुभृताम् इत्यत्र 'आद्गुणः६।१।८७'इति गुणे कर्तव्ये 'स्थानेऽन्तरतमः १।१।५०' इति स्थानसाम्यात् एकारैकादेशः। घनवद्, त्र्यम्बकाद् इत्युभयत्र 'झलां जशोऽन्ते ८।२।३९' इति जश्।

लङ्कारः । 'उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः'—इति । प्रसादो गुणः ।

कोशः—द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु ।
अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम् ।
घनजीमूतमुदिरजलमुग्धूमयोनयः ।
सुत्रामा गोत्रभिद् वज्री वासवो वृत्रहा वृषा ।
यशः कीर्तिः समज्ञा च ।
हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः—इत्याद्यमरः ।
देव-दीपं तु लोचनम् अम्बकं च । ( इति त्रिकाण्डशेषः )

समासः—त्रीणि अम्बकानि यस्य स त्र्यम्बकः—बहुव्रीहिः । सर्वे च ते इषुभृतः सर्वेषुभृतः, तेषाम् । 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन २।१।४९' इति कर्मधारयः समासः । 'उपान्वध्याङ्वसः १।४।४८' इति अधिकरणस्य कर्मसंज्ञायाम् 'कर्मणि द्वितीया २।३।२' इति आसनम् इत्यत्र द्वितीया । 'अन्यारादितर० २।३।२९' इति त्र्यम्बकादित्यत्र पञ्चमी ।

तद्धित-सिद्धिः—घनेन तुल्यम् घनवत् 'तेन तुल्यं क्रिया चेद्वतिः ५।१।११५' इति वति, अनुबन्धलोपे घनवत् इत्यस्य 'तद्धितश्चासर्वविभक्तिः १।१।३८' इति अव्ययत्वात् सर्वत्र सुब्लुक् ।

तिङन्त-सिद्धिः—व्यकारीत् विपूर्वकात् '-कॄविक्षेपे' इति तौदादिकधातोः लुङि अपारीत् (२ श्लो०) इतिवत् सिद्धिः । अधिपूर्वकात् 'वस-निवासे' इति-भ्वादिधातोः लुङि तिपि च्लौ, तस्य सिचि 'वदव्रजहलन्तस्याचः ७।२।३' इति वृद्धौ 'इतश्च ३।१।१००' इति इकारलोपे 'अस्तिसिचोऽपृक्ते ७।३।९६' इति अपृक्तस्य ईडागमे 'सः स्यार्धधातुके ७।४।४९ इति सस्य तकारे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः ६।४।७१' इति अडागमे उपसर्गस्य यणि अध्यवात्सीत् । उपपूर्वकाद् भौवादिकात् 'ष्ठा-गतिनिवृत्तौ' इति ष्ठा धातोः 'भूवादयो धातवः १।३।१' इति धातुसंज्ञायाम् 'धात्वादेः षः सः, ६।१।६४ इति षस्य सकारे 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति ठस्य थकारे जाते स्था इत्यतो लुङि 'उपान्मन्त्रकरणे

१।३।२५' अथवा 'उपाद् देवपूजासङ्गतिकरणमैत्रीकरणपथिषु इति वाच्यम्' इति वार्तिकबलाद् आत्मनेपदे तङि त प्रत्यये च्लौ तस्य सिचि अनुबन्धलोपे 'स्थाघ्वोरिच्च १।२।१७' इति धातोः इत्वे सिचः कित्वे 'ह्रस्वादङ्गात् ८।२।२७' इति सलोपे अडागमे, उपोपसर्गेण सह दीर्घे उपास्थित। निर् इत्युपसर्गपूर्वात् 'असु-क्षेपणे' इति दिवादिस्थ-असु धातोः अनुबन्ध-लोपे 'उपसर्गादस्यत्यूह्योर्वेति वाच्यम्' इति वार्तिकात् तङोऽभावे तिपि च्लौ, तस्य 'अस्यति वक्ति-ख्यातिभ्योऽङ् ३।१।४२' इत्यङि 'अस्यतेस्थुक् ७।४।१७' इति थुगागमे अनुबन्धलोपे 'आडजादीनाम्' इति आडागमे इतश्च ३।१।१००' इति इकारलोपे निरास्थत्।

वाच्यपरि०—अमुना वसूनि व्यकारिषत। आसनम् अध्यवासि। अन्यः न उपास्थायि। यशांसि निरासिषत।

शिक्षा—धनेन किं यो न ददाति नाश्नुते० यज्जीव्यते क्षणमपि प्रथितं मनुष्यैः—इत्यादि मानवकर्तव्यं शिक्षयति पद्यम् ॥३॥

**[1]पुण्यो महा-ब्रह्म समूह-जुष्टः, संतर्पणो नाक-सदां वरेण्यः।**
**जज्वाल लोक-स्थितये स राजा, यथाऽध्वरे वह्निरभिप्रणीतः ॥४॥**

अन्वयः—पुण्यः महाब्रह्मसमूहजुष्टः नाकसदां सन्तर्पणः वरेण्यः स राजा लोकस्थितये अध्वरे अभिप्रणीतः वह्निः यथा जज्वाल।

हिन्दी—पुण्यशाली, बिशाल ब्राह्मण- (शिक्षक-) समूहसे सेवित, यज्ञ-यागादिकोंसे देवताओंको तृप्त करनेवाला वह सर्वश्रेष्ठ राजा संसारकी स्थितिके लिये यज्ञमें मन्त्रों द्वारा प्रतिष्ठापित अग्निके समान देदीप्यमान था।

व्याख्या—पुण्यः पवित्रात्मा महाब्रह्मसमूहजुष्टः विप्रबृहत्सङ्घसेवितः नाकसदां त्रिदशानाम् सन्तर्पणः तृप्तिकृत् वरेण्यः मुख्यः स पूर्वोक्तः राजा नृपः (दशरथ इत्यर्थः), लोकस्थितये भुवनरक्षणाय, अध्वरे यागे, अभिप्रणीतः मन्त्र-

(१) टिप्पणी—पुण्यः महा०। हशि चेत्यादिके कार्ये पुण्यो महेति। जुष्टः सन्त० इत्यत्र 'वा शरि ८।३।३६' इति वैकल्पिको विसर्गः। सः राजेत्यत्र विसर्गाच्सिद्धया सोः 'एतत्तदोः सुलोपो० ६।१।१३२' इति लोपः। वह्निः अभि— निमित्तापाये नैमित्तिकस्याप्यपाय इति विसर्गाप्राप्ते रेफ एव तिष्ठति।

प्रतिष्ठापितः वह्निः अग्निः यथा इव जज्वाल दिदीपे। उपमालङ्कारः। लक्षणन्तु ३ श्लोके उक्तम्। अत्र महाब्रह्मसमूहजुष्ट इति पदे महत्-शब्दस्य समूहशब्देन अन्वयः न तु ब्रह्मशब्देन। यतो हि 'शङ्खे तैले तथा माँसे वैद्ये ज्यौतिषिके द्विजे। निद्रायां पथि यात्रायां महच्छब्दो न दीयते'--इति निषेधात्। यतो हि महाब्राह्मण इति कुत्सितब्राह्मणो लोके गण्यते। यो हि मृतकश्राद्धे एकादशाहे भुङ्क्ते। तद्दिने प्रदत्तशय्यादानादिकं गृह्णाति।

कोशः—वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः।
त्रिदिवेशा दिवौकसः। आदितेया दिविषदो लेखा अदितिनन्दनाः।
स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः।
मुख्य-वर्य्यवरेण्याश्च।
यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः।
अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः।

समासः—ब्रह्मणां समूहः ब्रह्मसमूहः, महान् चासौ ब्रह्मसमूहः महाब्रह्मसमूहः, महाब्रह्मसमूहैः जुष्टः महाब्रह्मसमूहजुष्टः। अत्र प्रथमम् ब्रह्मन्+आम् समूह+सु इत्यलौकिकविग्रहे 'षष्ठी २।२।८ इति समासे समासत्वात् प्रातिपदिकतया सुपो लुकि 'नलोपः प्रातिपदिकान्तस्य २।२।७' इति नलोपे ब्रह्मसमूहशब्देन महत् शब्दस्य समासे महत्+सु ब्रह्मसमूह+सु इत्यलौकिकविग्रहे 'सन्महत्परमोत्कृष्टाः पूज्यमानैः २।१।१' इति समासे, सुपो लुकि 'आन्महतः समानाधिकरणजातीययोः ६।३।४६' इति तकारस्याकारे अकः सवर्णदीर्घे, महाब्रह्मसमूह+भिस् जुष्ट+सु इत्यलौकिकविग्रहे 'तृतीया २।१।३०' इति योगविभागसूत्रेण समासे विभक्तिलुकि महाब्रह्मसमूहजुष्ट इति। लोकस्य स्थितिः इति पूर्ववत् षष्ठीतत्पुरुषः। न अकम् यस्मिन् स नाकः। न+सु अक+सु इत्यलौकिकविग्रहे 'अनेकमन्यपदार्थे २।२।२४' इति बहुव्रीहिसमासे विभक्तेर्लुकि न अक इत्यत्र 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या६।३।७५' इति प्रकृतिभावात् 'नलोपो नञः ६।३।७३' इतिनलोपनिषेधे नाक—शब्दः सिध्यति। न कम् अकम् इत्यत्र तु नञ् समासे नलोपो भवत्येव। क शब्दः सुखवाचकः, तद्विरुद्धः अकशब्दः दुःखवाचकः। नाकशब्दो हि अतिशयसुखाधार वाचकः। अत एव स्वर्गार्थकः। नाके सीदन्ति इति नाकसदः इति वि[illegible]

"तत्रोपपदं सप्तमीस्थम् ३।१।९२' इति नाके इत्यस्योपपदसंज्ञायाम् 'षद्लृ विशरण-गत्यवसादनेषु' इति तुदादिस्थात् षद्लृ धातोः लुप्तानुबन्धात् कृतसकारात् 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ३।२।६१' इति क्विबपि सर्वापहारिलोपे नाकसद् शब्दसिद्धिः। तेषाम् सन्तर्पण इति कृदन्तयोगे 'कर्तृकर्मणोः कृति २।३।६५' इति षष्ठी। सन्तर्पयतीति विग्रहे 'तृप-तृप्तौ' इति चौरादिकतृप् धातोः कृत्यल्युटो बहुलम् ३।३।११३' इति कर्तरि 'ल्युट् च ३।३।११५' इति ल्युटि अनुबन्धलोपे 'युवोरनाकौ ७।१।१' इति योरनादेशे 'पुगन्तलघूपधस्य च ७।३।८६' इति गुणे सन्तर्पणेति प्रातिपदिकात् सौ रूपम्।

तिङन्त-सिद्धिः—'ज्वल-दीप्तौ' इति भ्वादिस्य—ज्वल धातोःलिटि तत्स्थाने तिपि 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ३ ४।८२' इति णलि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य ६।१।८' इति द्वित्वे 'पूर्वोऽभ्यासः ६।१।४ इति अभ्यास-संज्ञायां 'हलादिः शेषः ७।४।६०' इति आदिहलश्शेषे 'अत उपधायाः ७।२।११६' इति वृद्धौ जज्वालेति।

वाच्यपरिवर्तनम्—पुण्येन महाब्रह्मसमूहजुष्टेन नाकसदां सन्तर्पणेन वरेण्येन तेन राज्ञा यथा अभिप्रणीतेन वह्निना जज्वले।

शिक्षा—ब्राह्मणाः (शिक्षकाः) यं प्रशंसन्ति, यश्च देवान् प्रीणाति, यश्च लोकमर्य्यादां रक्षति, स एव शासने दीप्यते—इति शिक्षयति पद्यमिदम् ॥४॥

सम्प्रति राजधानीं वर्णयति चतुर्भिः —

**[१] स पुण्य-कीर्तिः शत-मन्यु-कल्पो, महेन्द्र-लोक-प्रतिमां समृद्ध्या।**
**अध्यास्त सर्वर्तु-सुखामयोध्या- मध्यासितां ब्रह्मभिरिद्ध-बोधैः ॥५॥**

अन्वयः—पुण्यकीर्तिः शतमन्युकल्पः स समृद्ध्या महेन्द्रलोकप्रतिमाम् इद्धबोधैः ब्रह्मभिः अध्यासितां सर्वर्तुसुखाम् अयोध्याम् अध्यास्त।

---

(१) टिप्पणी:—सर्वं ऋतु० अत्र आद्गुणः ६।१।८७ इति गुणे कर्तव्ये 'उरण् रपरः १।१।५१' इति रपरे सर्वर्तु इत्यादि।

हिन्दी—प्रखर-प्रतिभासम्पन्न शिक्षकोसे सेवित, पवित्र कीर्तिवाला, इन्द्र-तुल्य वह राजा दशरथ समृद्धिके कारण इन्द्रपुरीके समान, शोभायमान अयोध्या-नगरी मे रहता था।

व्याख्या—पुण्यकीर्ति पवित्रयशा, शतमन्युकल्प शक्रसदृशः, समृद्ध्या ऐश्वर्य्येण महेन्द्रलोकप्रतिमाम् अमरावतीसदृशीम्, इद्धबोधै प्रदीप्तप्रज्ञैः, ब्रह्मभि· ब्राह्मणै अध्यासिताम् अध्युषिताम् सर्वर्तुसुखाम् सकलकालानन्दाम् अयोध्याम् अवधराजधानी तन्नामिका नगरीम् अध्यास्त अध्यवात्सीत्। आर्थी लुप्तोपमाऽ-लङ्कार, धकारानुप्रासोऽपि।

कोश·—मन्युर्दैन्ये क्रतौ क्रुधि—इत्यमर·।

समासः—पुण्या कीर्ति यस्य स इति लौकिके, पुण्या + सु कीर्ति + सु इत्य-लौकिके विग्रहे 'अनकमन्यपदार्थे २।२।२४' इति समासे विभक्तेर्लुकि पुण्या-कीर्ति· इत्यत्र 'सप्तमी विशेषणे बहुव्रीहौ २।२।३५' इति पुण्याशब्दस्य पूर्वनिपाते 'स्त्रियाः पुवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६।३।३४ इति पूर्वपदस्य पुवद्भावे समासप्रातिपदिकात् सौ रूपम्। महेन्द्रस्य लोक महेन्द्रलोक. तत्पुरुष। महेन्द्रलोकेन प्रतिमा महेन्द्रलोकप्रतिमा। पूर्ववत्समास.। समीचीना ऋद्धि समृद्धिः—इत्यत्र समित्युपसर्गेण 'कुगतिप्रादय २।२।१८' इति समासः। सर्वे च ते ऋतव. सर्वर्तव, तेषु सुखा सर्वर्तुसुखा, ताम्। अत्र कर्मधारय-पूर्वस्तत्पुरुष। पूर्वकालैक० इत्यादिना' कर्मधारय 'सप्तमी शौण्डै २।१।४०' इति तत्पुरुष.। इद्ध बोधो येषा ते इद्धबोधा, तै इद्धबोधै.। बहुव्रीहि।

कृदन्त-सिद्धिः—सुखयति इति विग्रहे सुख तत्क्रियायाम् इति चुरादिस्थसुख[1] धातो· अच्-प्रत्यये, ततः टापि सुखा इति। अथवा 'इगुपधज्ञाप्रीकिर कः ३।१।१३५' इति के टापि।

तद्धित.—ईषद् असमास. शतमन्युः शतमन्युकल्प. 'ईषदसमाप्तौ कल्पब्दे-श्यदेशीयरः ५।३।६७ इतिकल्पप् प्रत्यये अनुबन्धलोपे राजविशेषणम्।

तिङन्त,—अधिपूर्वकात् आस उपवेशने इति अदादिस्थाद् आसधातोः लुप्ताकारात् लङि त प्रत्यये, सार्वधातुकत्वात् शपि, तस्य 'अदिप्रभृतिभ्यः

---

(१) अलोपस्य स्थानिवत्त्वेनोपधात्वाभावान्न गुणः।

शपः २।४।७२' इति शपो लुकि 'आडजादीनाम् ६।४:७२' इति आडागमे उपसर्गस्य यणि अध्यास्त। अधियोगे 'अधिशीङ्स्थासां कर्म १।४।४६' इति आधारस्य कर्मतया 'कर्मणि द्वितीया २।३।२' इति अयोध्याशब्दे द्वितीया।

**वाच्यपरि०**—पुण्यकीर्तिना शतमन्युकल्पेन तेन महेन्द्रलोकप्रतिमा सर्वर्तुसुखा अध्यासिता अयोध्या अध्यास्यत।

**शिक्षा**—नगराणि समृद्धिशालीनि विद्वद्वृन्दयुतानि सर्वर्तुसुखानि स्युः इति शिक्षयति पद्यम्। ॥५॥

कविः काव्यदिशा नगरीं स्तौति –

**[1]निर्माण-दक्षस्य समीहितेषु, सीमेव पद्माऽऽसन-कौशलस्य।**
**ऊर्ध्व-स्फुरद् रत्न-गभस्तिभिर् या, स्थिताऽवहस्येव पुरं मघोनः॥६॥**

**अन्वयः**—या निर्माणदक्षस्य पद्मासनकौशलस्य समीहितेषु सीमा इव ऊर्ध्वस्फुरद्रत्नगभस्तिभिः मघोनः पुरम् अवहस्य स्थिता इव (अस्ति, ताम् अध्यास्त इति पूर्वेणान्वयः)।

**हिन्दी**—सृष्टिरचना करनेमें निपुण प्रजापतिके चातुर्यकी प्रतीक स्वरूप अभीष्ट निर्मित वस्तुओंकी सीमास्थानी वह अयोध्या, जो कि ऊपर (आकाशकी ओर) निकलने वाली रत्नोंकी किरणोंसे मानो इन्द्रपुरी को (अमरावती) भी मातकर बैठी हो, ऐसी सुन्दर नगरी थी।

**व्याख्याः**—या अयोध्या निर्माण-दक्षस्य सृष्टिपटोः पद्मासन-कौशलस्य विरिञ्चिचातुर्य्यस्य समीहितेषु अभीष्टेषु सीमा परमावधिः इव अस्ति। या च ऊर्ध्वस्फुरद्रत्नगभस्तिभिः उपरिनिर्यत्किरणैः (हासरूपैः) मघोनः मरुत्वतः पुरम् नगरीम् (अमरावतीमिति यावत्) अवहस्य अवज्ञाय स्थिता विद्यमाना इव भाति (ताम् अयोध्याम् अध्यास्त इति पूर्वतोऽन्वयः) ॥६॥ उत्प्रेक्षालङ्कारः।

**कोशः**—धाताऽब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः।
किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः।
पूः स्त्री पुरी-नगर्यौ वा पत्तनं पुटभेदनम्।
इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः।

---

(१) **टिप्पणी**—सीमा इव 'आद् गुणः ६।१।८७' (अचि पूर्वपरयोः एकः संहितायाम्) इति गुणः। स्थिता अवहस्य सवर्णदीर्घः।

**समासः**—निर्माणे दक्षः निर्माणदक्षः, तस्येति तत्पुरुषः । पद्मम् आसनम् यस्य स पद्मासनः, तस्य कौशलम् पद्मासनकौशलम् । अत्र 'पूरणगुणसुहितार्थ० २।२।११' इति समासनिषेधो न । तत्र विशिष्टगुणानां रूपरसादीनाम् तद्विशेषाणां शुक्लनीलादीनामेव ग्रहणात् । संज्ञाप्रमाणत्वाद् इत्यादिनिर्देशेन तस्या नित्यत्वाच्चेत्यलम् । ऊर्ध्वं स्फुरन्तः ऊर्ध्वस्फुरन्तः'सह सुपा २।१।४' इति समासः । रत्नानां गभस्तयः रत्नगभस्तयः । ऊर्ध्वस्फुरन्तश्च ते रत्न-गभस्तयः ऊर्ध्वस्फुरद्रत्नगभस्तयः, तैः । 'विशेषणं विशेष्येण बहुलम् २।१।५७'इति समासे विभक्तेर्लुकि 'तत्पुरुषः समानाधिकरणः कर्मधारयः १।२।४२ इति कर्मधारयसंज्ञा ।

तद्धितः—कुशलस्य भावः कौशलम् । 'हायनान्तयुवादिभ्योऽण् ५।१।१३०' इत्यणि 'तद्धितेष्वचामादेः ७।२।११७' इत्यादिवृद्धौ कौशलशब्दस्य सिद्धिः ।

वाच्यपरि०—सीम्ना इव यया स्थितया भूयते ।

शिक्षा—मानवैः भौतिकाभ्युदयः कार्यः—इति शिक्षयति पद्यमिदम् ॥६॥

तामेव नगरीं विशिनष्टि ।

**सद् रत्न-मुक्ता-फल-वज्र-भाञ्जि, विचित्र-धातूनि स-काननानि ।**
**स्त्रीभिर् युतान्यप्सरसामिवौघैर्, मेरोः शिरांसीव गृहाणि यस्याम् ॥७॥**

**अन्वयः**—यस्याम् सद्रत्नमुक्ताफलवज्रभाञ्जि विचित्र-धातूनि सकाननानि अप्सरसाम् ओघः इव स्त्रीभिः युतानि मेरोः शिरांसि इव गृहाणि ( आसन्, ताम् अध्यास्त इति पूर्वेणान्वयः ।)

**हिन्दी**—मणि माणक हीरा-पन्ना आदि विभिन्न रत्नोंसे भरे हुए, विचित्र धातुओंसे सुशोभित अप्सराओंके समान सुन्दर स्त्रियोंसे युक्त अयोध्या नगरीमें मेरु पर्वतके शिखर सदृश बड़े-बड़े सोद्यान भवन थे ।

**व्याख्या**—यस्याम् अयोध्यायाम् मनोहरमौक्तिकहीरकादिविशिष्टानि विविधमनःशिलादिधातुधारीणि उपवनवन्ति, अप्सरसाम् स्ववेंश्यानाम् ओघैः समूहैः इव स्त्रीभिः नारीभिः युतानि युक्तानि मेरोः स्वर्णपर्वतस्य शिरांसि शृङ्गाणि इव गृहाणि सद्मानि ( आसन्, ताम् अध्यास्त इति पूर्वान्वयि पद्यम् ) अत्रोपमालंकारः ।

**कोश:**—वज्रोऽस्त्री हीरके पवौ ।

स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः ।

अटव्यरण्यं गहनं विपिनं काननं वनम् ।

गृहं गेहोदवसितं वेश्म सद्म निकेतनम्—इत्याद्यमरः ।

**समासः**—सन्ति च तानि रत्नानि सद्रत्नानि 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः २।१।६१' इति समासः । सद्रत्नानि च मुक्ताफलानि च वज्राणि च सद्रत्नमुक्ताफलवज्राणि, 'चार्थे द्वन्द्वः २।२।२९' इति द्वन्द्वसमासः । अत्र सद्रत्नशब्देन मरकतपद्मरागवैदूर्यादि रत्नानि गृह्यन्ते । गोबलीवर्दन्यायेन प्राधान्याद्वा मुक्ताफलादीनां पुनरभिधानं ज्ञेयम् । तानि भजन्ते यानि (गृहाणि) इति सद्रत्नमुक्ताफलवज्रभाञ्जि । अत्र सद्रत्नमुक्ताफलवज्र + शस् इति कर्मोपपदात् भज सेवायाम् इति भौवादिक भ-ज् धातोः 'भजो ण्विः ३।२।६२' इति ण्वि प्रत्यये सर्वापहारिलोपे 'उपपदमतिङ् २।२।१९' इति समासे 'सुपो धातुप्रातिपदिकयोः २ ४।७१' इति शसो लुकि 'अत उपधायाः ७।२।११६' इति वृद्धौ कृदन्ततया प्रातिपदिकस्य सद्रत्न०भाजः जसि रूपम् । विचित्राः धातवः येषु तानि । बहुव्रीहिः । काननैः सह वर्तन्ते इति विग्रहे 'तेन सहेति तुल्ययोगे २।२।२८' इति समासे विभक्तेर्लुकि 'प्रथमानिर्दिष्टं समास उपसर्जनम् १।३।४३' इति सहस्य उपसर्जनसंज्ञायाम् 'उपसर्जनम् पूर्वम् २।२।३०' इति पूर्वनिपाते 'वोपसर्जनस्य ६।३।८२' इति सादेशे सकाननेत्यस्य समासतया प्रातिपदिकत्वात् जसि रूपम् ।

**वाच्य०**—सद्रत्न०भाग्भिः विचित्रधातुभिः सकाननैः युतैः शिरोभिः गृहैः अभूयत ॥७॥

पुनर्नगरीं वर्णयति—

**[१]अन्तर्-निविष्टोज्ज्वल-रत्न-भासो, गवाक्ष-जालैरभिनिष्पतन्त्यः ।**
**हिमाऽद्रि-टङ्कादिव भान्ति यस्यां गङ्गाऽम्बु-पात प्रतिमा गृहेभ्यः ॥८॥**

**अन्वयः**—यस्याम् हिमाद्रिटङ्काद् इव गृहेभ्यः गवाक्षजालैः अभिनिष्पतन्त्यः अन्तर्निविष्टोज्ज्वलरत्नभासः गङ्गाम्बुपातप्रतिमाः भान्ति ।

---

(१) टिप्पणी—प्रतिमाः गृहेभ्यः । अत्र रोर्यत्वे लोपो ज्ञेयः । प्रथमश्लोके उक्तः ।

**हिन्दी**—भवनोंमें रखे हुए रत्नोंका प्रकाश गवाक्ष द्वारा बाहर आते समय ऐसा प्रतीत हो रहा है जैसा हिमालयके शिखरसे गङ्गा-जलका प्रपात हो रहा हो।

**व्याख्या**—यस्याम् अयोध्यायाम्, हिमाद्रिटङ्कात् तुहिनाचलशृङ्गात् इव यथा, (उन्नतत्वद्योतनार्थमिदं जातित्वादेकवचनम्) गृहेभ्यः भवनेभ्यः गवाक्षजालैः वातायनसङ्घैः अभिनिष्पतन्त्यः निःसरन्त्यः अन्तर्निविष्टोज्ज्वलरत्नभासः अभ्यन्तरस्थस्वच्छमणिदीप्तयः गङ्गाम्बुपातप्रतिमाः भागीरथीजलप्रपातसदृशाः भान्ति राजन्ते। उपमालंकारः।

**कोशः**—टङ्कः पाषाणदारणः—इति कोशाद् यद्यपि टङ्कः पाषाणदारणस्य नाम, तथापि अत्र तत्सादृश्यात् पर्वतशृङ्गशब्देनोच्यते, टङ्कवत् तीक्ष्णकोणत्वात्। वातायनं गवाक्षोऽथ। 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः—इत्याद्यमरः।

**समासः**—हिमानाम् अद्रिः हिमाद्रिः, हिमाद्रेः टङ्कः हिमाद्रिटङ्कः, तस्मात्। उभयत्रापि तत्पुरुषः। गवाक्षाणां जालानि गवाक्षजालानि, तैः। अन्तः निविष्टानि अन्तर्निविष्टानि, 'सप्तमीति' योगविभागात्समासः। उज्ज्वलानि च तानि रत्नानि उज्ज्वलरत्नानि। अन्तर्निविष्टानि च तानि उज्ज्वलरत्नानि अन्तर्निविष्टोज्ज्वलरत्नानि। उभयत्रापि 'विशेषणं विशेष्येण बहुलम् २।१।५७' इति कर्मधारयः, तेषां भासः। गङ्गायाः अम्बूनि, तेषां पाताः गङ्गाम्बुपाताः, सर्वत्रैव षष्ठीतत्पुरुषः, तैः प्रतिमाः सादृश्यं यासां ताः गङ्गाम्बुपातप्रतिमाः।

**तिङन्त-सिद्धिः**—भा दीप्तौ इति अदादिस्थ-भा-धातोः लटि झौ अन्तादेशे शपि, तस्य 'अदिप्रभृतिभ्यः शपः २।४।७२' इति लुकि, सवर्णदीर्घे भान्ति।

**वाच्यपरि०**—अन्तर्नि०भाभिः अभिनिष्पतन्तीभिः गङ्गा०भाभिः भायते॥८॥

समये गृहस्थाश्रमप्रवेशं राज्ञो वक्ति—

**[1]धर्म्यासु कामार्थ-यशस्करीषु, मतासु लोकेऽधिगतासु काले।**
**विद्यासु विद्वानिव सोऽभिरेमे, पत्नीषु राजा तिसृषूत्तमासु॥९॥**

(१)टिप्पणी—लोके + अधिगतासु इत्यत्र 'एङः पदान्तादति ६।१।१०७' इति पूर्वरूपैकादेशे लोकेऽधिगतासु इति। सः + अभिरेमे इत्यत्र सोऽभिरेमे इतिवत् सन्धिः।

**अन्वयः**—स राजा धर्म्यासु कामार्थयशस्करीषु लोके मतासु काले अधिगतासु तिसृषु उत्तमासु पत्नीषु विद्यासु विद्वान् इव अभिरेमे ।

**हिन्दी**—लोकमान्य, समय पर प्राप्त काम-अर्थ और यशको प्राप्त कराने वाली कौसल्या, कैकेयी तथा सुमित्रा नामकी उत्तम सहधर्मिणियोंके साथ राजा दशरथ उसी प्रकार रमण करता था जैसे विद्वान् आन्वीक्षिकी त्रयी एवं वार्तामें रमण करता है ( यहाँ आन्वीक्षिकीमें दण्डनीतिका अन्तर्भाव है ) ।

**व्याख्या**—सः पूर्वोक्तः राजा भूपः ( दशरथ इत्यर्थः ), धर्म्यासु धर्मोपेतासु कामार्थयशस्करीषु इच्छारैकीर्तिसाधिकासु लोके भुवने मतासु पूजितासु काले विवाहयोग्यसमये अधिगतासु प्राप्तासु तिसृषु त्रिसंख्यकासु उत्तमासु श्रेष्ठासु पत्नीषु भार्य्यासु ( कोसल्याकैकेयीसुमित्राख्यासु ), विद्यासु आन्वीक्षिकीत्रयी-वार्तारूपासु विद्वान् मनीषी इव यथा अभिरेमे विजहार । 'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती । विद्याश्चैताश्चतस्रस्तु लोकसंस्थितिहेतवः' ।। चतुर्थ्याः तिसृष्वेवान्तर्भावो ज्ञेयः । उपमालङ्कारः ।

**कोशः**—इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः ।
कामोऽभिलाषस्तर्षश्च ( इति ना० अ० ) ।
अर्थोऽभिधेयरैवस्तुप्रयोजन-निवृत्तिषु ।
विद्वान् मनीषी दोषज्ञो विपश्चिद्विबुधो बुधः—इत्यमरः ।

**समासः**—कामश्च अर्थश्च यशश्च कामार्थयशांसि, द्वन्द्वः । कामार्थयशांसि कर्तुं शीलं यासां ताः कामार्थयशस्कर्यः, तासु इति विग्रहे कामार्थयशस् + शस् इति कर्मोपपदात् डुकृञ् करणे इति तनादिस्थात् लुप्तानुबन्धात् कृ धातोः 'कृञो हेतुताच्छील्यानुलोम्येषु ३।२।२०' इति टप्रत्यये, अनुबन्धलोपे 'सार्वधातुकार्द्धधातुकयोः ७।३।८४' इति गुणे कामार्थयशस् + शस् + कर इति स्थितौ 'उपपदमतिङ् २।२।१९' इति समासे विभक्तेर्लुकि कामार्थयशस्कर-शब्दात् 'टिड्ढाणञ्० ४।१।१५' इति ङीपि, अनुबन्धलोपे 'यस्येति च ६।४।१४८' इति अकारलोपे कामार्थयशस्करीषु सप्तमीरूपम् ।

**तद्धितः**—धर्मादनपेताः धर्म्याः, तासु इति विग्रहे 'धर्मपथ्यर्थन्यायादनपेते ४।४।९२' इति यत्प्रत्यये 'यस्येति च ६।४।१४८' इत्यलोपे धर्म्यशब्दात्सप्तम्यां धर्म्यासु इति ।

सुबन्तः—'त्रिचतुरोः स्त्रियां तिसृचतसृ ७।२।९९' इति तिसृादेशे सप्तम्यां तिसृषु।'पत्युर्नो यज्ञसंयोगे ४।१।३३'इति पतिशब्दात् ङीपि इकारस्य नकारे पत्नी-शब्दात् सप्तम्याम्।

कृदन्तः—विदन्ति धर्माधर्मौ आभिः इति विद्याः, तासु इति विग्रहे विद ज्ञाने इति अदादिस्थात् विद् धातोः 'संज्ञायां समजनि० ३।३।९९' इति करणे क्यपि सप्तम्याम् विद्यासु। वेत्तीति विद्वान्, तस्मादेव विद् धातोः 'लटः शतृ० ३।२।१२४' इति शतृ प्रत्यये 'विदेः शतुर्वसुः ७।१।३६' इति शतुः वस्वा-देशे प्रातिपदिकत्वात् सौ 'उगिदचां सर्वनामस्थानेऽधातोः ७।१।७०' इति नुमि 'सान्तमहतः संयोगस्य ६।४।१०' इति दीर्घे, सुलोपे, संयोगान्तलोपे विद्वान्।

तिङन्तः—अभिपूर्वकात् रमु क्रीडायाम् इति भौवादिक-रम्-धातोः लिटि, तत्स्थाने त-प्रत्यये 'लिटस्तझयोरेशिरेच् ३।४।८१' इति तस्य एशादेशे 'लिटि धातोरनभ्यासस्य ६।१।८' इति द्वित्वे 'पूर्वोऽभ्यासः ६।१।४' इति अभ्यास-संज्ञायाम्'हलादिः शेषः७।४।६०' इति आदिहलः शेषे र+रम्+ए इत्यत्र'अत एक-हल्मध्येऽनादेशादेर्लिटि ६।४।१२०' इति अभ्यासलोपे अकारस्य एकारे अभिरेमे।

वाच्यपरि०—विदुषा विद्यासु इव तेन राज्ञा पत्नीषु अभिरेमे।

शिक्षा—स सन्धार्यः प्रयत्नेन स्वर्गमक्षय्यमिच्छता।
सुखं चेहेच्छता नूनं योऽधार्य्यो दुर्बलेन्द्रियैः॥

इति मानव आदेशोऽवश्यं सर्वैः परिपालनीय इत्यादिशति पद्यमेतत्॥९॥

बहुकाले गतेऽपि यदा सूनवो नाभूवन् तदा पुत्रेष्टियाग-कर्तारं मुनिम् ऋष्यशृङ्गाख्यं राजा आनाययति इत्युपक्षिपति--

**[1]पुत्रीयता तेन वराऽङ्गनाभि–रानायि विद्वान् क्रतुषु क्रियावान्।**
**विपक्त्रिम–ज्ञानगतिर् मनस्वी, मान्यो मुनिः स्वां पुरमृष्य शृङ्गः॥१०॥**

(१) टिप्पणी--यहाँ पौराणिक आख्यान है कि ऋष्यशृङ्ग मुनिको वेश्याओंने बड़ी युक्तिसे जाकर उनके आश्रमसे अयोध्यापुरीमें पहुँचाया। इसकी विस्तृत कथा वाल्मीकीय रामायण बालकाण्डमें है। यहाँ श्लोकमें वराङ्गना लिखा है, वह छन्दोभङ्गके भयसे है लेकिन अर्थ तो 'वाराङ्गना' शब्दका ही 'वेश्या' करना चाहिये। वारस्य अङ्गना वाराङ्गना न तु वराश्च ता अङ्गना इति।

**अन्वयः**—पुत्रीयता तेन क्रतुषु क्रियावान् विपक्त्रिमज्ञान-गतिः मनस्वी मान्यः विद्वान् ऋष्यशृङ्गः मुनिः वराङ्गनाभिः स्वां पुरम् आनायि ।

**हिन्दी**—पुत्र चाहनेवाले राजाने पुत्रेष्टि यज्ञ करनेमें कुशल परिपक्व ज्ञानमार्ग वाले कर्मठ विद्वान् मनस्वी ऋष्यशृङ्ग मुनिको वेश्याओंके द्वारा अपनी पुरीमें बुलवाया ।

**कोशः**—शृङ्गं प्राधान्य-सान्वोश्च—इत्यमरः ।

**व्याख्या**—पुत्रीयता पुत्रकाम्यता तेन दशरथेन राज्ञा, क्रतुषु पुत्रेष्टि-प्रभृतिषु यागेषु क्रियावान् विधिज्ञः विपक्त्रिमज्ञानगतिः परिपक्वबोधाध्वा मनस्वी मनीषी, मान्यः माननीयः ( मानार्हं इति ) विद्वान् कर्मठः ऋष्यशृङ्गः ऋष्यशृङ्गाभिधानः मुनिः मननशीलः पुरुषः, वराङ्गनाभिः वारविलासिनीभिः (अत्र 'अपि माषं मषं कुर्य्याच्छन्दोभङ्गभिया कविः' इति प्रसिद्धचा वाराङ्गनास्थाने वराङ्गनाशब्दप्रयोगो ज्ञेयः) स्वाम् स्वीयां पुरम् नगरीम्, आनायि आनायितः । वृत्त्यनुप्रासालङ्कारः । साभिप्रायविशेषणात्परिकरोऽपीति सङ्करः । प्रसादो नाम गुणः ॥१०॥

**समासः**—ज्ञानस्य गतिः—इति तत्पुरुषे विपक्त्रिमा ज्ञानगतिर्यस्य स विपक्त्रिमज्ञानगतिः—इति बहुव्रीहिः । 'स्त्रियाः पुवद्भाषित० ६।३।३४' इति पुंवद्भावः । ऋषिसंघे = ऋष्ये शृङ्गं प्राधान्यं यस्य स इति बहुव्रीहिः ।

**कृदन्त-सिद्धिः**—आत्मनः पुत्रम् इच्छति पुत्रीयति । पुत्रीयतीति पुत्रीयन्, तेन पुत्रीयता । अत्र पुत्रम् इति कर्मान्तात् सुबन्तात् 'सुप आत्मनः क्यच् ३।१।८' इति क्यचि, अनुबन्धलोपे च 'सनाद्यन्ता धातवः ३।१।३२' इति धातुसंज्ञायाम् 'सुपो धातुप्रातिपदिकयोः २।४।७१' इति सुपो लुकि पुत्र + य इति जाते 'क्यचि च ७।४।३३' इति ईकारे पुत्रीय-धातोः 'लटः शतृ० ३।२।१२४' इति शतृ-प्रत्यये तस्य सार्वधातुकतया शपि 'अतो गुणे ६।१।९७' इति पररूपे पुत्रीयत् इत्यस्य कृदन्ततया प्रातिपदिकत्वे टाविभक्तौ पुत्रीयतेति रूपम् । मान्यः = 'अर्हे कृत्यतृचश्च ३।३।१६७' इति अर्हार्थे 'ऋहलोर्ण्यत् ३।१।१२४' इति ण्यति अनुबन्धलोपे 'अत उपधायाः ७।२।११६' इति वृद्धौ मान्येत्यस्य कृदन्तत्वात् प्रतिपादिकतया सुः ।

तद्धितः—ऋषीणां समूहः इत्यर्थे 'पाशादिभ्यो यः ४।२।४९' इति पाशादेराकृतिगणत्वाद्य प्रत्यये, 'यस्येति चेति' इलोपे ऋष्यशब्दसिद्धिः। पाकेन निर्वृत्तम् इत्यर्थे विपूर्वकात् डुपचष् पाके इति भ्वादिस्थ—पच्-धातोः 'ड्वितः क्त्रिः ३।३।८८' इति क्त्रिप्रत्यये 'चोः कुः ८।२।३०' इति चस्य ककारे पक्त्रि शब्दात् 'क्त्रेर्मम् नित्यम् ४।४।२०' इति मपि अनुबन्धलोपे विपक्त्रिमशब्दात् टापि विपक्त्रिमेति सिध्यति। प्रशस्तं मनः अस्ति अस्येति मनस्वी इति विग्रहे 'अस्मायामेधास्रजो विनिः ५।२।१२१' इति विनिप्रत्यये 'तसौ मत्वर्थे १।४।१९' इति भत्वाद्रुत्वाभावे अनुबन्धलोपे मनस्विन् शब्दात्सौ रूपम्।

तिङन्त-सिद्धिः-आनायीति=ण्यन्तात् नी-धातोः भौवादिकात् नायीति रूपात् प्रधानकर्मणि लुङि, तत्रोक्तत्वात् प्रथमा विभक्तिः मुनिः इति। गौणकर्मणोऽनुक्तत्वात् तत्र द्वितीया पुरम् इति। प्रयोज्यकर्तरि वराङ्गनाभिरित्यत्र 'गतिबुद्धिप्रत्य० १।४।५२' इति द्वितीया तु 'नीवह्योर्न' इति निषिध्यते। आत्मनेपदे तप्रत्यये नायि+त इति स्थितौ 'च्लि लुङि ३।१।४३' इति च्लौ तस्य 'चिण् भावकर्मणोः ३।१।६६' इति चिणि अनुबन्धलोपे 'णेरनिटि ६।४।५१' इति णेर्लोपे अडागमे 'चिणो लुक् ६।४।१०४' इति तकारस्य लुकि अनायि। अत्र राजा प्रयोजकः,वराङ्गनाः प्रयोज्यकर्त्र्यः। मुनिः प्रधानं कर्म, पुरमिति गौणं कर्म। आङ् इत्युपसर्गयोगे आनायीति।

वाच्यपरि०— पुत्रीयन् स वाराङ्गनाभिः विद्वांस क्रियावन्तम् ऋष्यश्रृङ्गं मुनिम् स्वां पुरम् आनीनयत्।

शिक्षा—'स्वकार्य्यं साधयेद्धीमान् कार्यध्वंसो हि मूर्खता' इति वाराङ्गनाभिरपि मुनेरानयनमुचितमेव राज्ञ इति रीत्या नीत्या कार्य्यसिद्धिः कार्य्येति शिक्षयति पद्यम् ॥१०॥

राज्ञोऽभीष्टं मुनेः कर्तव्यं च प्रस्तौति—

**ऐहिष्ट तं कारयितुं कृताऽऽत्मा, क्रतुं नृपः पुत्र—फलं मुनीन्द्रम्।**
**ज्ञाताऽऽशयस् तस्य ततो व्यतानीत्, स कर्मठः कर्म सुताऽनुबन्धम् ॥११॥**

अन्वयः—कृतात्मा स नृपः तं मुनीन्द्रं पुत्रफलं कारयितुम् ऐहिष्ट। ततः तस्य ज्ञाताशयः कर्मठः स (मुनीन्द्रः) सुतानुबन्धं कर्म व्यतानीत्।

हिन्दी—यत्नकर्ता राजाने ऋष्यश्रृंग मुनिके समक्ष पुत्र फलवाला याग करानेकी इच्छा व्यक्त की। महामुनिने उसके आशयको जानकर पुत्र-फल देनेवाले कर्मका विस्तार किया।

व्याख्या—कृतात्मा विहितयत्नः स दशरथः नृपः राजा, तं ऋष्यश्रृङ्गं मुनीन्द्रं तपस्विश्रेष्ठं पुत्रफलं तनयप्रयोजनं क्रतुं यागं कारयितुम् अनुष्ठापयितुम् ऐहिष्ट ऐषीत्। ततः तदनन्तरं, तस्य दशरथस्य, ज्ञाताशयः विदिताभिप्रायः कर्मठः कर्मकुशलः (कर्मशूर इत्यर्थः) स प्रसिद्धः ऋष्यश्रृङ्गः सुतानुबन्धं पुत्रसम्पादकं कर्म अनुष्ठानं व्यतानीत् प्रारब्धवान्। क्रतुकारणे ईहा हेतुः। कर्मव्यताने आशयज्ञानं हेतुरिति वाक्यगतहेतु—काव्यलिङ्गम्।

कोशः—आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च।
आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी।
अभिप्रायश्छन्द आशयः।
कर्मशूरस्तु कर्मठः इत्याद्यमरः।

समासः—कृतः आत्मा येन स कृतात्मा, बहुव्रीहिः। मुनिषु इन्द्रः 'सप्तमीति' योगविभागात् समासः। कारयितुम् इत्यस्य योगे 'हृक्रोरन्यतरस्याम् १।४।५३' इति कर्मसंज्ञायां 'कर्मणि द्वितीया २।३।२' इति द्वितीया मुनीन्द्रमिति। पुत्रः फलं यस्य स पुत्रफलः, तम्। ज्ञातः आशयः येन इति बहुव्रीहिः। अत्र यद्यपि आशयशब्दः तच्छब्दोक्तदशरथशब्देन सविशेषणाद् अन्वितत्वादसमर्थवद् भाति 'सविशेषणानां वृत्तिर्न, वृत्तस्य च विशेषणयोगो न' इति नियमाक्रान्तत्वाच्च समासो नोचितः, तथापि 'प्रतियोगिपदादन्यद् यदन्यत् कारकादपि। वृत्तिशब्दैकदेशार्थे न तस्यान्वय इष्यते'—इति प्रतियोगिपदभिन्नेन अन्वयो निषिध्यते न तु प्रतियोगिना इत्यतः दशरथस्य अनुयोगिपदत्वात् तेनान्वितस्यापि प्रतियोगिन आशयशब्दस्य ज्ञातशब्देनान्वये सामर्थ्यात्समासः समुचित एवेति सुतानुबन्धपदेनाप्येवमेव ज्ञेयम्। सुतम् दशरथस्य सुतम् अनुबध्नाति इति विग्रहे कर्मोपपदात् अनूपसर्गोपपदाच्च बन्ध बन्धने इति क्र्यादिस्थात् बन्ध्-धातोः 'कर्मण्यण् ३।२।१' इत्यणि 'उपपदमतिङ् २।२।१९' इति समासे विभक्तेर्लुकि सवर्णदीर्घे सुतानुबन्धशब्दस्य कृदन्ततया प्रातिपदिकत्वम्। एवम् सुतानुबन्धीति पाठेऽपि 'सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८' इति णिनिर्ज्ञेयः।

तद्धितः—कर्मणि घटते इति कर्मठः इत्यर्थे 'कर्मणि घटोऽठच् ५।२।३५ इति सप्तम्यन्तात् कर्मन् शब्दात् अठच् प्रत्यये तद्धितान्ततया प्रातिपदिकत्वात् सुपो लुकि 'नस्तद्धिते ६।४।१४४' इति टिलोपे कर्मठशब्दस्य सौ रूपम् ।

तिङन्तः—ईह चेष्टायाम् इति भौवादिक धातोः आत्मनेपदे लुङि त प्रत्यये, च्लौ, तस्य सिचि, 'आर्द्धधातुस्येड्वलादेः ७।२।३५' इतीटि, आडागमे वृद्धौ षत्वे ष्टुत्वेन तस्य टकारे ऐहिष्ट । व्यतानीदित्यस्य तु 'अतो हलादेर्लघोः ७।२।७' इति वैकल्पिका वृद्धिः । अपरं कार्यं सामान्यम् अवधीद्वज्ज्ञेयम् ।

वाच्यपरि०—कृतात्मना नृपेण मुनीन्द्रः क्रतुं कारयितुम् ऐहि, ज्ञाताशयेन तेन कर्मठेन सुतानुबन्धं कर्म व्यतानि ।

शिक्षा—उद्योगः साहसं धैर्यं ज्ञानं शक्तिर्बलोदयः ।
षड्विधो यस्य चोत्साहः तस्य देवः सहायकृत् ॥

इत्युपदिशति पद्यमिदम् ॥११॥

अनुष्ठान-कर्म-विधिं निर्दिशति—

**[1]रक्षांसि वेदीं परितो निरास्थदङ्गान्ययाक्षीदभितः प्रधानम् ।**
**शेषाण्यहौषीत् सुत-सम्पदे च, वरं वरेण्यो नृपतेरमार्गीत् ॥१२॥**

अन्वयः—वरेण्यः ( मुनीन्द्रः ) वेदीं परितः रक्षांसि निरास्थत् । प्रधानम् अभितः अङ्गानि अयाक्षीत् । शेषाणि अहौषीत् । नृपतेः सुतसम्पदे वरम् अमार्गीत् ।

हिन्दी—मुनीन्द्रने वेदीके चारों ओरसे राक्षसोंको भगाया । प्रधानके आगे पीछे अंगोंकी इष्टि की तथा अवशिष्ट हविष्यका हवन किया और राजाकी सुतसम्पत्तिके लिये वरकी प्रार्थना की ।

व्याख्या—वरेण्यः श्रेष्ठः ( मुनीन्द्रः ) वेदीं परितः यजनवेद्याः समन्तात् भूतगणान् न्यषेधीत् निरास्थत् । प्रधानम् पुत्रेष्टिरूपं विष्णुयागम् अभितः रक्षांसि तत्पूर्वं तत्पश्चाच्च प्रयाजानुयाजादीनि अङ्गानि अयाक्षीत् इष्टवान् । शेषाणि

---

(१) टिप्पणी—वरेण्यः + नृपतेः । अत्र 'हशि च ६।१।११४' (श्लो० १ प्रथमे उक्तःसन्धिः) । एवं परितः + निरास्थत् । अभितः + प्रधानम् = 'कुप्वोः ≍क ≍पौ च ८।३।३७' इति अर्धविसर्गं उपध्मानीयः ।

अवशिष्टानि हव्यानि अहौषीत् हुतवान् । नृपतेः राज्ञः सुतसम्पदे पुत्रसम्पदे पुत्र-सम्पत्तये वरम् अभीष्टम् ( हे देवाः ! दशरथस्य सुता भूयासुः—इत्येवं रूपम् ) अमार्गीत् प्रार्थयत् । क्रियायौगपद्यात् समुच्चयालङ्कारः । एकस्य कर्तुः अनेक-क्रियायोगाद्दीपकमिति सङ्करः ।

समासः—सुतानां सम्पद् सुतसम्पद्, तस्यै, तत्पुरुषः । 'अभितःपरितः-समयानिकषाहाप्रतियोगेऽपि' इति वेदीशब्दे द्वितीया । एवं प्रधानम् इत्यत्रापि ।

तिङन्त-सिद्धिः—निरास्थत् (श्लो० ३)। ( यजदेवपूजासंगतिकरण-दानेषु इति श्लो० २ ) उभयपदित्वादत्र लुङि तिपि अनुबन्धलोपे, 'इतश्च ३।४।१००' इति इकारलोपे, च्लौ तस्य सिचि, अनुबन्धलोपे अपृक्तेटि यज् +सीदित्यत्र 'वदव्रजहलन्तस्याचः । ७।२।३' इति वृद्धौ 'व्रश्चभ्रस्ज० ८।२।३६' इति षत्वे 'षढोः कः सि ८।२।४१' षस्य ककारे 'आदेशप्रत्यययोः ८।३।५९' इति सस्य षत्वे अडागमेऽनुबन्धलोपे अयाक्षीत् ( एवं हि अनिट्धातुसिद्धिः )। हु दानादनयोः इति जुहोत्यादि-गणस्थ-धातोः अहौषीत् । अत्र 'सिचि वृद्धिः परस्मैपदेषु ७।२।१' इति वृद्धिः, शेषकार्य्याणि सामान्यानि । अमार्गीत् 'आधृ-षाद्वा' इति णिचोऽभावे सेट्धातुवत् सिद्धिः ।

वाच्यपरि०—वरेण्येन रक्षांसि निरासिषत । अङ्गानि अयक्षत । शेषाणि अहाविषत । वरः अमार्गि ।

शिक्षा—सर्वाङ्गपूर्णमेव कार्य्यं कर्तव्यम्, तदेव सफलं च भवतीति शिक्षयति पद्यमिदम् ॥१२॥

यज्ञफलमाख्याति—

**[1]निष्ठां गते दत्त्रिम-सभ्य-तोषे, विहित्रिमे कर्मणि राज-पत्न्यः ।**
**प्राशुर् हुतोच्छिष्टमुदार-वंश्यास्,तिस्रः प्रसोतुं चतुरः सु-पुत्रान्॥१३॥**

(१) टिप्पणीः—तीन रानियोंके द्वारा चार पुत्रोंकी प्राप्तिका रहस्य यह है कि दशरथजीकी पटरानी कौशल्या थी और परमप्रिया कैकेयी, इन दोनोंको चरुका भाग आधा आधा करके देकर इन दोनोंके द्वारा अपने हिस्सेसे सुमित्राको दिलवाया तो सुमित्राको दो हिस्से मिले। इसी कारण उसके दो पुत्र हुए। कौशल्याके हिस्सेसे लक्ष्मण कैकेयीके हिस्सेसे शत्रुघ्न। यही कारण था कि लक्ष्मण रामके साथ और शत्रुघ्न भरतके साथ रहते थे।

अन्वयः—दत्त्रिमसभ्यतोषे विहित्रिमे कर्मणि निष्ठां गते ( सति ) उदारवंश्याः तिस्रः राजपत्न्यः चतुरः सुपुत्रान् प्रसोतुं हुतोच्छिष्टं प्राशुः ।

हिन्दी—दान द्वारा ऋत्विजोंको सन्तोष करादेने वाले विधिपूर्वक सम्पन्न हुए पुत्रेष्टि यज्ञकी समाप्तिपर उदारवंशमें उत्पन्न तीन राजपत्नियोंने चार पुत्रोंकी प्राप्तिके लिये हवनके बचे चरुको खाया ।

व्याख्या—दत्त्रिमसभ्यतोषे=दाननिर्वृत्तर्त्विक्सन्तोषे, विहित्रिमे विधिनिर्वृत्ते कर्मणि पुत्रेष्टिक्रतौ, निष्ठां समाप्तिं गते प्राप्ते ( सति ) उदारवंश्याः महाकुलीनाः तिस्रः त्रिसंख्यकाः राजपत्न्यः नृपमहिष्यः चतुरः वेदसंख्यकान् सुपुत्रान् = सुन्दरसूनून् प्रसोतुम् उत्पादयितुम् हुतोच्छिष्टं हवनावशेषं ( हविःसंस्रवप्राशन-काले ) प्राशुः जक्षुः । तिस्रः चतुरः कथं प्रसोष्यन्तीति आपातविरोधः । युग्म-जननात्परिहारश्चेति विरोधाभासः ।

कोशः—समासदः सभास्तारा: सभ्याः सामाजिकाश्च ते ।

उदारो दातृमहतोः । आत्मजस्तनयः—इत्यादि ११ पद्ये ।

समासः—सभ्यानां तोषः सभ्यतोषः । दत्त्रिमः सभ्यतोषः यस्मिन् तत्, तस्मिन् । राज्ञः पत्न्यः । हुतस्य उच्छिष्टम् हुतोच्छिष्टम्, होमानन्तरं दिव्यपुरुष-हस्तप्रदानेन हुतशेष-चरौ उच्छिष्टत्वारोपः । समीचीनाः पुत्राः सुपुत्राः 'कुगति-प्रादयः २।२। ८' इति प्रादिसमासः ।

कृदन्तः—दानेन निर्वृत्तः—इति विग्रहे डुदाञ् दाने इति जुहोत्यादिस्थ-दा-धातोः 'ड्वितः क्त्रिः ३।३।८८' इति क्त्रौ 'क्त्रेर्मम्नित्यम् ४।४।२०' इति मपि 'दो दद्घोः ७।४।४६' इति दथि आदेशे दत्त्रिमशब्दसिद्धिः । डुधाञ् धारण-पोषणयोः इति जुहोत्यादिस्थ-धा-धातोः विपूर्वकात् क्त्रिः, क्त्रेः परे मपि च कृते 'दधातेर्हिः ७।४।४२' इति धातोः ह्यादेशे विहित्रिमे इति नपुंसके सप्त-म्यन्तम् रूपम् ।

तद्धितः—उदारश्चासौ वंश इति कर्मधारयेण उदारवंश—शब्दात् उदार-वंशे भवाः इत्यर्थे 'तत्र भवः ४।३।५३' इत्यधिकारे 'दिगादिभ्यो यत् ४।३।५४' इति तदन्तविधित्वेन वंशान्तोदारवंशशब्दात् यति 'यस्येति च ६।४।१४८' इत्यकारलोपे उदारवंश्याः इति ।

तिङन्त-सि०—प्रपूर्वकात् अश भोजने इति क्र्यादिस्थस्य अश् धातोः लिटि उसि 'लिटि धातोरनभ्यासस्य ६।१।८' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः ७।४।६०', इति शकारनिवृत्तौ, अ अश् + उस् इति जाते 'अत आदेः ७।४।७०' इत्यभ्यासदीर्घे सवर्णदीर्घे च प्राशुः।

वाच्यपरि०—उदारवंश्याभिः राजपत्नीभिः हुतोच्छिष्टम् प्राशे।

शिक्षा—रीत्या नीत्या प्रयुक्तोऽध्यवसायोऽवश्यं सफलीभवतीति शिक्षयति पद्यम् ॥१३॥

कस्याः कस्तनयोऽजनीति विशेषमाख्याति—

**कौसल्ययाऽसावि सुखेन रामः, प्राक्, केकयी-तो भरतस् ततोऽभूत्।**
**प्रासोष्ट शत्रुघ्नमुदार-चेष्ट—मेका सुमित्रा सह लक्ष्मणेन॥ १४ ॥**

अन्वयः—कौसल्यया रामः सुखेन प्राक् असावि। ततः भरतः केकयीतः सुखेन अभूत्। एका सुमित्रा उदारचेष्टं शत्रुघ्नं लक्ष्मणेन सह सुखेन प्रासोष्ट।

हिन्दी—कौसल्याने रामको, केकयीने भरतको तथा सुमित्राने लक्ष्मणके साथ उदारचेष्टा वाले शत्रुघ्नको बिना क्लेशसे उत्पन्न किया।

व्याख्या—कौसल्यया कोसलराजपुत्र्या, रामः रामाभिधः (पुत्रः) सुखेन अनायासेन प्राक् पूर्वमेव (अवतारत्वात् ज्येष्ठत्वम् क्लेशाकरत्वं च) असावि उदपादि। ततः तदनन्तरम् भरतः भरताख्यः (सुतः) केकयीतः केकयराजस्य पुत्र्याः अभूत् उत्पन्नः। एका एकिका सुमित्रा तन्नाम्नी राजपत्नी, उदारचेष्टम् समुन्नतचरित्रम् शत्रुघ्नम् शत्रुघ्नसंज्ञकं (तनयम्) (पूर्वजातेन) लक्ष्मणेन सह लक्ष्मणनाम्ना (ज्येष्ठसूनुना) सार्धम् प्रासोष्ट अजीजनत्। (अत्र लक्ष्मणस्य सहाभिधानम् पूर्वजत्वादित्यूह्यम्। पृथक् पृथक् जन्मनि पूर्वं लक्ष्मणो जातः पश्चात् शत्रुघ्न इति सूचयितुमेव सहशब्दोपादानं न तु अप्राधान्यार्थम्, अप्रयोजनत्वात्) सहोक्तिसहितः क्रमालङ्कारः (अत्रेन्द्रवज्रा छन्दः, तल्लक्षणं श्लो० २ उक्तम्)।

समासः—उदारा चेष्टा यस्य स इति बहुव्रीहिः। 'स्त्रियाः पुंवद्भाषित० ६।३।३४' इति पूर्वपदस्य पुंवद्भावे उत्तरपदस्य 'गोस्त्रियोरुपसर्जनस्य १।२।४८' इति ह्रस्वः।

तद्धितः—कोसलस्य राज्ञोऽपत्यं स्त्री कौसल्या तया, 'वृद्धेत्कोसलाजादाञ्ञ्यङ् ४।१।१७१' इति ञ्यङ्, 'तद्धितेष्वचामादेः ७।२।११७' इति आदिवृद्धौ 'यस्येति च ६।४।१४८' इति अलोपे कौसल्य—शब्दात् 'यङश्चाप् ४।१।७४' इति चापि, अनुबन्धलोपे दीर्घे कौसल्या शब्दसिद्धिः। केकयान् आचष्टे इति विग्रहे 'तत्करोति तदाचष्टे' इति णिचि केकयि धातोः 'अच इः' इति उणादि सूत्रेण इ प्रत्यये 'णेरनिटि ६।४।५१' णिलोपे, 'कृदिकारादक्तिनः' इति ङीषि केकयी शब्दसिद्धिः। सा हि यदा परिणीता सती अयोध्यामागता तदा अति सुन्दरी अपि। 'केकया ईदृशाः तादृशा' इति स्वदेशं बहु प्रशंसति स्मेति तदाख्येयं जाता। केकयस्य राज्ञोऽपत्यमिति विग्रहे तु कैकेयी स्यान्नतु केकयीति। केकयी-शब्दात् 'अपादाने चाहीयरुहोः ५।४।४५' इति तसि केकयीतः।

तिङन्तः—असावि—षूङ् प्राणिप्रसवे इति अदादिस्थ-सू-धातोः कर्मणि लुङि, त प्रत्यये, च्लौ, तस्य 'चिण् भावकर्मणोः ३।१।६६' इति चिणि वृद्धौ आवादेशे, अडागमे रूपम्। तस्यैव प्रपूर्वकस्य कर्तरि लुङि, च्लौ, तस्य सिचि गुणे षत्वे ष्टुत्वे अडागमे, उपसर्गेण सह दीर्घे प्रासोष्ट। अभूत् (१ श्लो०)—उक्ता सिद्धिः।

वाच्यपरि०—कौसल्या रामम् असोष्ट। कैकयीतो भरतेन अभावि। एकया सुमित्रया उदारचेष्टः शत्रुघ्नः प्रासावि।

शिक्षा—पूर्वपद्योक्तैव शिक्षा नामभेदेनेह निर्दिष्टा कथं सफलितेति तत्स्वरूपनिर्देशतः॥१४॥

पौरोहित्यकर्तव्यमाख्याति—

**[1]आर्चीद् द्वि-जातीन् परमार्थविन्दा—नुदेजयान् भूतगणान् न्यषेधीत्।**
**विद्वानुपानेष्ट च तान् स्व-काले, यतिर् वशिष्ठो यमिनां वरिष्ठः॥१५॥**

---

(१) टिप्पणीः—भारतीय संस्कृतिका स्वरूप आज बिलकुल ६३ की जगह ३६ हो गया है। देखिये—महर्षि वशिष्ठ अयोध्यासम्राट् चक्रवर्ती राजा दशरथके प्रधानमन्त्री यहां पुरोहित हैं। राज्यका सूत्र इन्हींके हाथों है। सारा देवकार्य्य भी इन्हींके हाथमें है। इस भारतीय संस्कृतिको बिना संस्कृत शास्त्रके आमूल अध्ययन किये आजका पश्चिमी चकाचौंधमें भूला मानव कैसे पायेगा? हमारे मंत्री जब तक वशिष्ठके समान जीवन-यापन करना स्वीकार न करेंगे, तब तक कल्याण भी नहीं हो सकता।

अन्वयः—यमिनां वरिष्ठः यतिः विद्वान् वशिष्ठः परमार्थ-विन्दान् द्विजातीन् आर्चीत्। उदेजयान् भूतगणान् न्यषेधीत्। तान् च स्वकाले उपानेष्ट।

हिन्दी—परम ज्ञानी, यमियोंमें श्रेष्ठ 'जितेन्द्रिय' विद्वान् वशिष्ठजीने परमार्थज्ञानी विद्वानोंकी पूजा की, दुःखदायी बालग्रहोंको हटाया और समय आने पर उन रामादिकोंका उपनयन संस्कार भी किया।

व्याख्या—यमिनां योगिनाम् वरिष्ठः श्रेष्ठः यतिः जितेन्द्रियः विद्वान् विधिज्ञः वशिष्ठः तन्नामा पुरोधाः, परमार्थविन्दान् तत्त्वज्ञानिनः द्विजातीन् विप्रान् आर्चीत् अपूपुजत्। उदेजयान् उत्पीडकान् भूतगणान् बालग्रहसमूहान् न्यषेधीत् निरास्थत् ( मन्त्रपाठेन )। स्वकाले क्षत्रियोपनयन-समये एकादशे वर्षे तान् रामादीन् उपानेष्ट=द्विजसंस्कारविधिना उपानैषीत्। अत्रापि क्रियायौगपद्यात् समुच्चयः। एकस्य अनेकक्रियाभिसम्बन्धाद् दीपकं वेति सङ्करः।

कोशः—दन्तविप्राण्डजा द्विजाः।

ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते।

समासः—परमश्चासौ अर्थः परमार्थः, तस्य विन्दा। अत्र कर्मणि षष्ठी। 'कृद्योगा च षष्ठी समस्यते' इति वार्तिकबलात् समासः। भूतानां गणाः भूतगणाः, तान्। द्वे जाती जन्मनी येषां ते द्विजातयः, तान्।

कृदन्तः—वशिषु तिष्ठतीति विग्रहे ष्ठा-गतिनिवृत्तौ इति भ्वादिस्थ स्था-धातोः 'सुपि स्थः ३।२।४' इति कप्रत्यये 'आतो लोप इटि च ६।४।६४' इति आलोपे स्थशब्देन सह वशिषु इति सुबन्तस्य 'उपपदमतिङ् २।२।१९' इति समासे विभक्ते-र्लुकि, षत्वे, ष्टुत्वे वशिष्ठः। विन्दन्तीति विन्दाः—'अनुपसर्गा० ३।१।१३८' इति विदॢ लाभे इति तौदादिक-विद्धातोः शप्रत्यये 'शे मुचादीनाम् ७।१।५९' इति नुमि रूपम्। उदेजयन्तीति उदेजयाः—उदुपसर्गपूर्वकात् एजृ कम्पने इति भ्वादिस्थ-धातोः णिजन्तात् 'अनुपसर्गाल्लिम्प०' इति पूर्वोक्तसूत्रेणैव श प्रत्यये सार्वधातुक-कृत्ये च उदेजयशब्दसिद्धिः।

तद्धितः—'अहिंसा-सत्याऽस्तेय-ब्रह्मचर्य्यापरिग्रहा यमाः' इति पतञ्जलि-लक्षितात् यम-शब्दात् 'अत इनिठनौ ५।२।११५' इति इनि यमिनामिति-षष्ठ्य

न्तम् । अतिशयेन उरुः इति वरिष्ठः । उरुशब्दात् 'अतिशायने तमबिष्ठनौ ५।३।५५' इति इष्ठनि 'प्रियस्थिरोरु० ६।४।१५७' इति वरादेशे वरिष्ठः ।

तिङन्त.— आर्चीत् अर्च पूजायाम् इति भ्वादिस्थात् सेटः: अर्चधातोः पूर्ववत् साधनीयम् । न्यषेधीत् इदमपि तथैव । 'प्राक् सितादड्व्यवायेऽपि ८।३।६३' इति षत्वविशेषः । 'नेटि ७।२।४' इति वदव्रजेति हलन्तलक्षणवृद्धेर्निषेधोऽपि । उपानेष्ट—व्यजेष्टवत् साध्यम् ( श्लो० २ ) ।

वाच्य०:— वरिष्ठेन यतिना विदुषा वशिष्ठेन परमार्थविन्दा द्विजातयः आर्चिषत । उदेजयाः मृतगणाः न्यषेधिषत । ते उपानायिषत उपानेषत वा ।

शिक्षा— अभ्युदयादिषु पूज्यानां पूजनम् । सर्वदैव दुष्टप्राणिभ्यः स्वात्मरक्षणम् । समये एव स्वकृत्यानुष्ठानमिति शिक्षयति पद्यमिदम् ॥१५॥

ब्रह्मचारिकर्तव्यमादिशति—

**[1]वेदोऽङ्गवांस्तैरखिलोऽध्यगायि, शस्त्राण्युपायसत जित्वराणि ।**
**ते भिन्नवृत्तीन्यपि मानसानि, समं जनानां गुणिनोऽध्यवात्सुः ॥१६॥**

अन्वयः— तैः अखिलः अङ्गवान् वेदः अध्यगायि । जित्वराणि शस्त्राणि उपायंसत । गुणिनः ते जनानां भिन्नवृत्तीनि अपि मानसानि समम् अध्यवात्सुः ।

हिन्दी—उन कुमारोंने षडङ्ग वेदोंका अध्ययन किया, विजयी शस्त्रास्त्रोंको प्राप्त किया और गुणशाली होनेके कारण भिन्न रुचिवाले जन-मनोंपर भी अपना अधिकार जमा लिया ।

व्याख्या—तैः रामादिकुमारैः, अखिलः समस्तः अङ्गवान् षडङ्गसहितः वेदः आम्नायः (ऋग्यजुःसामाथर्वाख्यः) अध्यगायि अधीतः । जित्वराणि विजयदानि शस्त्राणि धनुर्विद्यादीनि उपायंसत उपात्तानि । गुणिनः प्राप्तविद्याः, ते कुमाराः जनानां लोकानां भिन्नवृत्तीनि विविधरुचीनि (अत्र अपि स्वभावसूचकः) मानसानि अध्यवात्सुः अध्यासत । अनेकासु क्रियासु एकस्य कर्तुः कारकस्याभिधानात् दीपकालङ्कारः ।

---

(१)टिप्पणी— अङ्गवान् + तैः श्लोके द्वितीये सन्धिः दर्शितः) । अखिलः + अध्यगायि ( इत्यपि तत्रैव ) । यणादिरपि पूर्वमुक्तमेव ।

कोशः—श्रुतिः स्त्री वेद आम्नायस्त्रयी धर्मस्तु तद्विधिः ।
स्वान्तं हृन्मानसं मनः ।
विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम्:—इत्याद्यमरः ।

समासः— भिन्ना वृत्तयो येषां तानि भिन्न-वृत्तीनि, बहुव्रीहिः ।

तद्धितः—प्रशस्तानि अङ्गानि सन्ति अस्येति विग्रहे 'तदस्यास्त्यस्मिन्निति मतुप् ५।२।९४' इति प्रशंसायां मतुप्, (भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः), ततः 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८।२।९' इति मस्य वकारे प्रातिपदिकतया सौ 'अत्वसन्तस्य चाधातोः ६।४।१४' इति दीर्घे, 'उगिदचां सर्वनामस्थानेऽधातोः ७।१।७०' इति नुमि, हल्ङ्यादिलोपे संयोगान्तलोपेऽङ्गवान् ।

शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च ।
ज्यौतिषञ्चेति ज्ञेयानि षडङ्गानि क्रमाद् बुधैः ॥

कृदन्तः—जयन्ति तच्छीलानि इति जित्वराणि—'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ३।२।१३४' इत्यधिकारे 'इण्नशजिसर्तिभ्यः क्वरप् ३।२।१६३' इति क्वरपि 'ह्रस्वस्य पिति कृति तुक् ६।१।७१' इति तुकि रूपसिद्धिः नपुंसके जसि ।

तिङन्तः—अध्यगायि—अधिपूर्वकात् इङ्धातोः कर्मणि लुङि 'विभाषा लुङ्लृङोः २।४।५०' इति गाङादेशे 'चिण्भावकर्मणोः ३।१।६६' इति चिणि 'आतोयुक् चिण्कृतोः ७।३।३३' इति युकि, 'चिणो लुक् ६।४।१४' इति तकारलुकि रूपम् । तथैव उपपूर्वकात् यम उपरमे इति भ्वादिकाद् यम-धातोः कर्मणि लुङि बहुवचने 'आत्मनेपदेष्वनतः ७।१।५' इति झस्याति, च्लौ, तस्य सिचि, अडागमे उपायंसत । अध्यवात्सुः इति (श्लो० ३) बहुवचने 'सिजभ्यस्तविदिभ्यश्च ३।४।१०९' इति जुस्विशेषः ।

वाच्य०—ते अखिलम् अङ्गवन्तं वेदं अध्यैषत, अध्यगीषत वा । जित्वराणि शस्त्राणि उपायंसत । गुणिभिस्तैः मनांसि अध्यवत्सत ।

शिक्षा—आश्रमधर्मः सर्वैरवश्यं पालनीय इति शिक्षयति पद्यम् ॥१६॥

विश्वामित्रागमनं प्रस्तौति—

[1]ततोऽभ्यगाद् गाधि-सुतः क्षितीन्द्रं रक्षोभिरभ्याहत-कर्म-वृत्तिः ।
रामं वरीतुं परिरक्षणा-र्थं, राजार्जिहत् तं मधुपर्कपाणिः ॥१७॥

अन्वयः—ततः रक्षोभिः अभ्याहत-कर्मवृत्तिः गाधिसुतः परिरक्षणार्थं रामं वरीतुम् क्षितीन्द्रम् अभ्यगात् । (ततः) मधुपर्कपाणिः राजा तम् आर्जिहत् ।

हिन्दी—राक्षसों द्वारा बार-बार विघ्न किये जानेसे यज्ञादि कर्म-रक्षार्थं रामको मांगनेकेलिये विश्वामित्र राजा- ( दशरथ- ) के पास गये । राजाने मधुपर्क ( दही, घी मधु इत्यादि मिलाकर बनाया हुआ पुष्टिकारक भोज्य ) द्वारा मुनिका आतिथ्य किया ।

व्याख्या— ततः रामादीनाम् कौमारावस्थानन्तरम्, रक्षोभिः जातुधानैः, अभ्याहतकर्मवृत्तिः अभिभूतयागादिधर्मव्यापारः गाधिसुतः विश्वामित्रः, परिरक्षणार्थम् धर्मव्यापारगोपनाय रामं ज्येष्ठं राजकुमारं वरीतुं ग्रहीतुम् क्षितीन्द्रं राजानम् अभ्यगात् =अयासीत् । (तदागमनानन्तरम्) मधुपर्कपाणिः गृहीतार्घपात्रः राजा पार्थिवः दशरथः,तं विश्वामित्रम्,आर्जिहत् अपूपुजत् । परिरक्षणं वरणे हेतुः। तथा अभ्याहतकर्मवृत्तित्वमागमने हेतुरिति पदार्थगतहेतुत्वात् काव्यलिङ्गम् ।

कोशः—यातुधानः पुण्यजनो नैरृतो यातुरक्षसी ।
राजा राट्— इत्यादि १ पद्ये ।

समासः —गाधेः सुतः गाधि-सुतः । कर्मणो वृत्तिः कर्मवृत्तिः । अभ्याहता कर्मवृत्तिः यस्य इति तत्पुरुषगर्भितो बहुव्रीहिः । समासप्रकारस्तु पूर्व-श्लोके

(१) टिप्पणीः—विश्वामित्र द्वारा रामको आमंत्रित करनेमें एक विशेष दृष्टिकोण प्रस्तुत किया गया है; और वह यह कि विश्वामित्र तपस्वी मुनि हैं । मुनि किसी प्रकार की हिंसा नहीं करते । उनका जीवन अहिंसासे युक्त होता है । अहिंसामें व्यतिक्रम होता देखकर विश्वामित्र राजाके पास पहुँचे । राजा रक्षक होते हैं । महाराज दशरथ वृद्ध हो चले थे, अतः तरुण रामको मांगना ही एक मात्र विकल्प था । रामको मांगनेकी पृष्ठभूमिमें कुछ अदृष्ट. कारण भी हैं । जैसे शस्त्रास्त्र की शिक्षामें पारंगत बनाना, जनकपुरीमें सीतास्वयंवर में उपस्थित रहना, विवाह करवाना आदि ।

प्रथमे एव दत्तः। तत्रैव द्रष्टव्यः। मधुपर्के ( मधुपर्कपात्रे ) स्थितः पाणिः यस्य स मधुपर्क-पाणिः। अत्र मधुपर्क + ङि स्थित + सु पाणि + सु इति अलौकिक-विग्रहे 'सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च वक्तव्यः २।२।२४' इति वार्तिक-बलात् समासे स्थितपदलोपे च समासत्वात् प्रातिपदिकतया 'सुपो धातुप्राति-पदिकयोः २।४।७१' इति सुपो लुकि 'सप्तमी विशेषणे बहुव्रीहौ' इति सप्तम्यन्तस्य मधुपर्कस्य पूर्वनिपातो ज्ञेयः। तात्स्थ्यात् लक्षणया मधुपर्क शब्देन मधुपर्क-पात्रम् गृह्यते 'दधिमधुघृतमिति त्रिवृतम्' इति गृह्यसूत्रवाक्यात्। पूर्वपूर्वाधिकानि त्रीणि मिलितानि सुस्वादूनि पुष्टभोज्यानि भवन्ति। सम्प्रति ( 'चायं' ) कषायं भुज्यते भोज्यते च। अहो भारताधःपातः। परिरक्षणाय इदम् परि-रक्षणार्थम्। 'अर्थेन सह नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्' इति वार्तिकबलात् 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः २।१।३६' इति समासे विभक्तेर्लुकि परिरक्षणार्थम् इति।

कृदन्त-सिद्धिः—वृञ् वरणे इति स्वादिधातोः 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३।३।१०' इति तुमुनि 'वृतो वा ७।२।३८' इति इटो दीर्घे रूपम् वरीतुम्। धातोः सेट्त्वात् 'आर्धधातुकस्येड्वलादेः' ७।२।३५इतीट् ज्ञेयः।

तिङन्त-सिद्धिः—इण् गतौ इति आदादिकस्य-इण् धातोः अभिपूर्वकात् 'इणो गा लुङि २।४।४५' इति इणो गादेशे, च्लौ, तस्य सिचि 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २।४।७७' इति सिचो लुकि, उपसर्गस्य यणि अभ्यगात्। अर्ह-पूजायाम् इति चौरादिकात् अर्हि धातोः लुङि तिपि च्लौ, तस्य 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३।१।४८' इति चङि, 'चङि ६।१।११' इति द्वित्वे कर्तव्ये 'नन्द्राः संयोगादयः ६।१।३' इति रेफस्य निषेधेन 'द्विर्वचनेऽचि १।१।५९' इति णिलोपनिषेधे च केवलस्य हि इत्यस्य द्वित्वे 'पूर्वोऽभ्यासः ६।१।४' इत्यभ्याससंज्ञायाम् 'कुहोश्चुः ७।४।६२' इति हस्य झकारे 'अभ्यासे चर्च ८।४।५४' इति झस्य जकारे, 'आडजादीनाम् ६।४।७२' इति आडागमे 'आटश्च ६।१।९०' इति वृद्धौ आर्जिहि + अत् इति जाते, 'णेरनिटि ६।४।५१' इति णेः लोपे आर्जिहत् इति।

वाच्य०—अभ्याहतकर्मवृत्तिना गाधिसुतेन क्षितीन्द्रः अभ्यगायि। मधुपर्क-पाणिना राज्ञा स आर्हि।

शिक्षा—षडर्घ्या भवन्ति—आचार्यः, ऋत्विक्, वैवाह्यः, राजा, प्रियः, स्नातकः इति पारस्करसूत्रोक्ता. समये मिलिताः पूज्या इत्युपदिशति पद्यम्। विश्वामित्रस्तु आचार्यः पूर्वतनो राजा, प्रियश्चेति त्रिधा अर्घ्योऽस्ति ॥१७॥

विश्वामित्र-दशरथयोः संवाद-सम्पादनाय भारतीयसंस्कृतिमूलभूतायाः तपस्विसम्पत्तेः कुशलम्पृच्छति—

**ऐषीः पुनर्-जन्म-जयाय यत् त्वं, रूपादि-बोधान् न्यवृतच् च यत् ते ।**
**तत्त्वान्यबुद्धाः प्रतनूनि येन, ध्यानं नृपस् तच्छिवमित्यवादीत् ॥१८॥**

अन्वयः—त्वम् यत् पुनर्जन्मजयाय ऐषीः, यच्च ते रूपादिबोधात् न्यवृतत्, येन प्रतनूनि तत्त्वानि अबुद्धाः, तद् ध्यानम् शिवम् (अस्ति कच्चित्) इति नृपः-अवादीत्।

इन्द्रवज्राछन्दः। लक्षणमुक्तं द्वितीयश्लोके।

हिन्दीः—राजाने मुनिसे कुशल-मंगलकी चर्चाके संदर्भमें पूछा कि आपने पुनर्जन्म जीतनेके लिये जिसे चाहा, जो रूपादि विषयोंसे निवृत्त हो गया और जिसके द्वारा आपने सूक्ष्म (पुरुष, प्रधान, महद, अहङ्कारादि) तत्त्वोंका जाना, वह ध्यान (निर्विघ्न) शुभकारी तो है ?

व्याख्या—त्वम् विश्वामित्र ! पुनर्जन्मजयाय अपुनर्भवाय यत् अद्भुतम् ध्यानम् ऐषीः अकाङ्क्षीः, यत् लोकप्रसिद्धम् ते विश्वामित्रस्य (ध्यानम्) रूपादि-बोधात् रूपरसगन्धस्पर्शशब्दादिविषयज्ञानाद् न्यवृतद् न्यवर्तिष्ट, येन लोकविस्मापकेन (ध्यानेन) प्रतनूनि सूक्ष्माणि तत्त्वानि पुरुषप्रधानमहदहङ्कारादीनि अबुद्धाः अज्ञासीः, तत् जगच्चमत्कृत् ध्यानम् असम्प्रज्ञानसमाधिरूपम् शिवम् शुभमस्ति कच्चिद् इति नृपः (दशरथः) राजा अवादीत् अगदीत् (तम् इति शेषः)। एकस्य ध्यानस्य अनेकक्रियाणां कारणाभिधानाद् दीपकालङ्कारः।

कोशः—स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु।
श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्—इत्यमरः।

समासः—पुनर्जन्मनो जयः पुनर्जन्मजयः, तत्पुरुषः। रूपम् आदिः येषां ते रूपादयः, तेषां बोधः तस्मात्। बहुव्रीहिगर्भस्तत्पुरुषः।

तिङन्तः—इषु इच्छायाम् इति तौदादिक-इष्-धातोः लुङि, सिपि, सेट्धातुवत् सिद्धिः । न्यवृतद् इति तु वृतु वर्तने इति भौवादिकस्यात्मनेपदिनो वृत् धातोः लुङि 'द्युद्भ्यो लुङि १।३।९१' इति वैकल्पिके 'परस्मैपदे, तिपि, 'पुषादिद्युता० ३।१।५५' 'इति च्लेरङि ङित्वाद् गुणाभावे अडागमे उपसर्गस्य यणि रूपम् । बुध अवगमने इति दैवादिकाद् बुध् धातोः लुङि, थासि, च्लेः सिचि 'लिङ्सिचावात्मनेपदेषु १।२।११' इति सिचः कित्वाद् गुणाभावे 'झलो झलि ८।२।२६' इति सिचो लोपे 'झषस्तथोर्धोऽधः ८।२।४०' इति थस्य धत्वे, 'झलां जश् झशि ८।४।५३' इति धस्य दत्वे, अडागमे अबुद्धाः । अवादीत् इति सेटः वद व्यक्तायां वाचि इति वद् धातोः 'नेटि ७।२।४' इत्यस्यापवादिकायां 'वदव्रजहलन्तस्याचः ७।२।३' इति वृद्धौ अडागमे साधु ।

वाच्य०—त्वया यत् ऐषि । येन न्यवर्ति । त्वया तत्त्वानि प्रतनूनि अभुत्सत । तेन ध्यानेन शिवेन भूयते—इति नृपेण अवादि ( स मुनिः ) ।

शिक्षा—भारते पूर्वं राजानोऽपि त्यागशीला भवन्ति स्म । अतश्च दशरथो राज्यं त्यक्त्वा तपस्वित्वं विभ्रतो विश्वामित्रस्य तपोविषयकमेव प्रश्नं कृत्वा त्यागमहत्त्वम् स्वप्रजासु शिक्षयति[1] ॥१८॥

दशरथमुत्तरयति तपस्वी विश्वामित्रस्तेनैव सह स्वेष्टमपि प्रस्तौति—

**[2]आख्यन् मुनिस् तस्य शिवं समाधेर्, विघ्नन्ति रक्षांसि वने क्रतूंश्च ।**
**तानि द्विषद्-वीर्य-निराकरिष्णुस्, तृणेढु रामः सह लक्ष्मणेन ॥१९॥**

---

(१) टिप्पणी—ऐषीः-इति पद्यतः महाकविः दशरथविश्वामित्र-संवाद-रूपेण काव्यं निबध्नाति । तस्य कारणमिदमस्ति यत् पूर्वंकाले विद्यालये वार्षिकाधिवेशनेषु छात्राणां परस्परं वादप्रतियोगिता अभिनयरूपेणैव भवति स्म । सा चेदानीं विधर्मिशासनान्तरायमासाद्य विलुप्ताऽस्ति । स्वतन्त्रे भारते सा पुनश्चालनीयेति मया तत्स्वरूपमपि विवृतम् । 'भट्टि-संवाद-सार'पुस्तके तद् द्रष्टव्यम् ।

(२) टिप्पणी—आख्यत् + मुनिः, 'यरोऽनुनासिकेऽनुनासिको वा' ८।४।४५ ( प्रथमश्लोके ) । मुनिः + तस्य, 'विसर्जनीयस्य सः ८।३।३४' इति सः । लक्ष्मणेन इत्यत्र 'सहयुक्तेऽप्रधाने ( २।३।१९ )' इति तृतीया ।

अन्वयः—मुनिः तस्य समाधेः शिवम्, रक्षांसि वने क्रतून् विघ्नन्ति। लक्ष्मणेन सह द्विषद्वीर्यनिराकरिष्णुः रामः तानि तृणेढु इति च आख्यत्।

हिन्दी—मुनिने दशरथसे पूछे गये ध्यानको निर्विघ्नताको बतानेके साथ साथ यह भी कह दिया कि वनमें राक्षस यज्ञादिका विनाश करते हैं अतः आवश्यकता इस बातको है कि लक्ष्मणके साथ शत्रुओंके पराक्रमविनाशक राम उन्हें मार डालें।

व्याख्या—मुनिः ऋषिः ( विश्वामित्रः ), तस्य राजपृष्टस्य, समाधेः ध्यानस्य, शिवं कल्याणं (तथा) रक्षांसि राक्षसाः वने कानने क्रतून् यागान् विघ्नन्ति विनाशयन्ति। द्विषद्वीर्यनिराकरिष्णुः वैरिविक्रमविनाशी रामः, तव ज्येष्ठपुत्रः, लक्ष्मणेन कनिष्ठभ्रात्रा सह सार्धम् तानि विघ्नकर्तॄणि रक्षांसि तृणेढु हिनस्तु ( इति ) च आख्यत् आचष्ट ( तम् दशरथमिति शेषः )। एकस्मिन् आख्यान-धर्मे अनेकधर्माभिसम्बन्धात्तुल्ययोगितालङ्कारः।

कृदन्तः—निर्-आ-इत्युपसर्गद्वयपूर्वात् कृ-धातोः तनादिस्थात् 'अलङ्कृञ् ३।२।१३६' इति इष्णुचि गुणे रूपम्।

तिङन्तः—आङ् पूर्वकात् चक्षिङ् प्रकथने इति अदादिस्थ-चक्ष्-धातोः लुङि, 'चक्षिङःख्याञ् २।४।५४' इति ख्याञादेशे, अनुबन्धलोपे, ख्याञः उभयपदित्वात् परस्मैपदे तिपि अनुबन्धलोपे 'इतश्च ३।४।१००' इति इकारलोपे, च्लौ, तस्य 'अस्यतिवक्तिख्यातिभ्योऽङ् ३।१।५२' इति अङि 'आतो लोप इटि च ६।४।६४' इत्याकारलोपे, अडागमे, उपसर्गेण सह दीर्घे आख्यत्। विपूर्वकात् हन हिंसागत्योः इति अदादिस्थ-हन्-धातोः लटि, झौ 'झोऽन्तः ७।१।३' इति अन्तादेशे हन्+अन्ति इति स्थितौ 'कर्तरि शप् ३।१।६८' इति शपि तस्य'अदिप्रभृतिभ्यः शपः२।४।७२' इति शपो लुकि, 'गमहनजनखनघसां लोपः क्ङित्यनङि ६।४।९८' इत्युपधाया लोपे 'होहन्तेर्ञ्णिन्नेषु ७।३।५४' इति हस्य घत्वे विघ्नन्ति। तृह हिंसि हिंसायाम् इति रुधादिस्थ-तृह्-धातोः लोटि तिपि 'एरुः ३।४।८६' इति उत्वे 'रुधादिभ्यः श्नम् ३।१।७८' इति श्नमि कर्तव्ये 'मिदचोऽन्त्यात्परः १।१।४७' इति तृतः परे श्नमि अनुबन्धलोपे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति णत्वे तृणह्+तु इति जाते 'तृणह इम् ७।३।९२' इति णकारात् परे इमि गुणे च तृणेह्+तु इत्यत्र 'होढः

८।२।३१' इति हस्य ढत्वे 'झषस्तथोर्धोऽधः ८।२।४०' इति तस्य धत्वे ष्टुत्वे 'ढो ढे लोपः ८।३।१३' इति ढलोपे तृणेढु ।

वाच्यपरि०—मुनिना शिवमाख्यायि । रक्षोभिः क्रतवो विहन्यन्ते । द्विषद्वीर्यंनिराकरिष्णुना रामेण तानि तृह्यन्ताम् इति ।

शिक्षा—यथाकथमपि मानापमानं दूरीकृत्य रीत्या नीत्या कार्य्यसिद्धिः कर्तव्यैवेति महाप्रभावस्य महामुनेर्विश्वामित्रस्य दशरथात् सुतयाचनया शिक्षयति पद्यम् ॥१९॥

सुतवात्सल्याद्राजावस्थां वर्णयन् मुनेर्दाढर्यमाख्याति—

**स शुश्रुवांस्तद्वचनं मुमोह, राजाऽसहिष्णुः सुतविप्रयोगम् ।**
**अहंयुनाऽथ क्षितिपः शुभंयुरूचे वचस्तापस-कुञ्जरेण ॥२०॥**

अन्वयः—तद्वचनं शुश्रुवान् सुतविप्रयोगम् असहिष्णुः स राजा मुमोह । अथ अहंयुना तापसकुञ्जरेण शुभंयुः क्षितिपः वचः ऊचे ।

हिन्दी—मुनिके वचन सुनते ही पुत्रवियोग न सह सकने वाला राजा मूर्च्छित हो गया। बादमें मूर्च्छा छूटने पर अहङ्कारी श्रेष्ठ तपस्वीने शुभान्वित होने वाले राजासे आगेका वाक्य कहा ।

व्याख्या—तद्वचनं विश्वामित्रवाक्यम् 'तृणेढु रामः सह लक्ष्मणेन' इति शुश्रुवान् आकर्णितवान्, ( स्वयं च ) सुतविप्रयोगं पुत्रविरहम् असहिष्णुः सोढुमसमर्थः स प्रसिद्धः राजा नृपः ( दशरथः ) मुमोह मुमूर्छ । अथ मूर्च्छापगमानन्तरम् अहङ्कारवता तापसकुञ्जरेण तपस्विप्रवरेण ( विश्वामित्रेण ) शुभंयुः शुभान्वितः क्षितिपः पार्थिवः वचः अग्रेतनं वाक्यम् ऊचे जगदे । मोहे सुतवियोगासहनहेतोरुल्लेखात् काव्यलिङ्गं तापसे कुञ्जरत्वारोपरूपकेण अहंयु-शुभंयुसाभिप्रायविशेषणात्मकपरिकरेणच सङ्करः ।

कोशः—अहङ्कारवानहंयुः । शुभंयुस्तु शुभान्वितः । राजा राट् इत्यादि १ पद्ये । कुञ्जरकोशः ५–३२ ।

समासः—तस्य वचनम् तद्वचनम् । सुतेन विप्रयोगः सुतविप्रयोगः 'कर्तृकरणे कृता बहुलम् २।१।३२' इति समासः । उकारेण इष्णुचो ग्रहणात्

सुत-विप्रयोगम् इत्यत्र 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठी-निषेधे द्वितीया। असहिष्णुः, न सहिष्णुः असहिष्णुः इति विग्रहे न+सु सहिष्णु+सु इति अलौकिकविग्रहे 'नञ् २।२।६' इति समासे प्रातिपदिकत्वात् सुपो लुकि 'नलोपो नञः ६।३।७३' इति नलोपे असहिष्णुः इति। अत्र षह मर्षणे इति भौवादिकात् सह् धातोः 'अलङ्कृञ्निराकृञ् ३।२।१३६' इति इष्णुचि सहिष्णुः इति। तापसश्चासौ कुञ्जरः तापसकुञ्जरः 'वृन्दारक-नागकुञ्जरैः पूज्यमानम् २।१।६२' इति समासे पूज्यमानस्य तापसशब्दस्य प्रथमानिर्दिष्टस्य उपसर्जनसंज्ञायाम् 'उपसर्जनम् पूर्वम् २।२।३०' इति पूर्व-निपाते तापसकुञ्जरः, तेन तापसकुञ्जरेण इति।

तद्धित-सिद्धिः—शुभम् अस्यास्तीति विग्रहे शुभम् इति मान्ताव्ययाद्, एवम् अहम् अस्य अस्ति इति विग्रहे अहम् इति मान्ताव्ययाद् 'अहं-शुभमोर्युस् ५।२।१४०' इति युसि, सकारस्य 'हलन्त्यम् १।३।३' इति इत्संज्ञायां लोपे च 'सिति च १।४।१६' इति पूर्वस्य पदसंज्ञायाम् 'मोऽनुस्वारः ८।३।२३' इति मस्यानुस्वारे शुभंयुः अहंयुः इत्युभयं रूपं सिध्यति।

कृदन्तः—क्षितिं पातीति विग्रहे पा रक्षणे इति अदादिस्थ-पा-धातोः 'आतोऽनुपसर्गे कः ३।२।३' इति क प्रत्यये, आतो लोपे क्षितिम्+प इति स्थितौ 'उपपदमतिङ् २।२।१९' इति समासे, प्रातिपदिकतया सुपो लुकि, क्षितिपशब्दात्सौ क्षितिपः।

तिङन्तः—मुह वैचित्ये इति दिवादिस्थ-मुह्-धातोः कर्तरि लिटि द्वित्वादि-कार्ये 'पुगन्तलघूपधस्य च ७।३।८६' इति गुणे मुमोह। ब्रूञ् व्यक्तायां वाचि इति अदादिस्थ ब्रूधातोः कर्मणि लिटि 'ब्रुवो वचिः २।४।५३' इति वच्या-देशे 'वचिस्वपियजादीनां किति ६।१।१५' इति सम्प्रसारणे द्वित्वादिकार्ये ऊचे। गौणे कर्मणि दुहादित्वात् प्रत्ययो ज्ञेयः।

वाच्य० शुश्रूषा तेन राज्ञा असहिष्णुना मुमुहे। अहंयुः तापसकुञ्जरः शुभंयुं क्षितिपं वच उवाच।

शिक्षा—'न निश्चितार्थाद्विरमन्ति धीराः' इति द्रढयति पद्यमिदम्[1] ॥२०॥

---

(१) टिप्पणी—पूर्वांशोऽयम्—रत्नैर्महार्घैस्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम्। सुधां विना न प्रययुर्विरामम् इति। समुद्रमन्थने यथा देवानां दार्ढ्यम् तथैव मुनेरपि अत्रास्ति स्वप्रस्तावे।

क्षत्रियब्राह्मणयो रक्षकशिक्षकयोर्वा परस्परसम्बन्धदृढतयापि
स्वप्रस्तावस्यौचितीं समर्थयति मुनिः—

**मया त्वमाप्थाः शरणं भयेषु, वयं त्वयाऽप्याप्स्महि धर्मवृद्ध्यै।**
**क्षात्रं द्विजत्वं च परस्परार्थं, शङ्कां कृथा मा, प्रहिणु स्वसूनुम् ।२१॥**

अन्वयः—( हे राजन् ) मया त्वम् भयेषु शरणम् आप्थाः । त्वया वयम् अपि धर्मवृद्ध्यै शरणानि आप्स्महि । (इत्थम्) क्षात्रं द्विजत्वं च परस्परार्थं (स्तः), शङ्कां मा कृथाः, स्वसूनुं प्रहिणु ।

हिन्दी—हे राजन् ! राक्षसोंद्वारा भय उपस्थित होनेसे मैं तुम्हारी शरण आया हूँ। पापके भयसे (धर्मवृद्धिके लिए) तुम भी हम लोगों (ऋषियों) की शरण आते हो। क्षत्रियत्व और द्विजत्व दोनों एक दूसरेके सहायक हैं। अतः किसी प्रकारका संदेह न कर अपने पुत्रोंको मेरे साथ करो। इससे कल्याण ही होगा।

व्याख्या—हे राजन्, मया तपस्विना भयेषु भीतिषु ( उपस्थितेषु राक्षसेभ्यः इति यावत् ) त्वं क्षत्रियः, शरणं रक्षिता आप्थाः अगन्थाः सम्प्रति इति शेषः) । त्वया क्षत्रियेण वयम् तपस्विनः अपि धर्मवृद्ध्यै धर्मरक्षार्थम् शरणानि रक्षितारः आप्स्महि अगंस्महि । (इत्थम्) क्षात्रं रक्षकत्वम्, द्विजत्वं शिक्षकत्वं च परस्परार्थम् अन्योन्यार्थं (स्तः), शङ्कां सन्देहं मा कृथाः कार्षीः, स्वसूनुं निजपुत्रं प्रहिणु प्रेषय। सूनुप्रेषणे ब्रह्मक्षत्रयोरुपकार्योपकारकभावरूपहेतुकीर्तनात् काव्यलिङ्गम् ।

कोशः—शरण गृहरक्षित्रोः । आत्मजस्तनयः० इत्याद्यमरः (पूर्वपद्ये ११) ।

समासः—परस्परस्मै इदम् परस्परार्थम्, पूर्ववत् समासः । स्वस्य सुनुः स्वसूनुः तम्, तत्पुरुषः । धर्मस्य वृद्धिः धर्मवृद्धिः, तस्यै। तत्पुरुषः ।

तिङन्त;—आप्लृ व्याप्तौ इति स्वादिस्थाद् आप्-धातोः कर्मणि लुङि थास्प्रत्यये च्लौ, तस्य सिचि 'झलो झलि ८।२।२६' इति सलोपे आडागमे आप्थाः । 'अस्मदो द्वयोश्च १।२।५९' इति एकत्वे ऽपि बहुत्वम् । पूर्ववत् महि-प्रत्यये आप्स्महि । कृ धातोः लुङि आत्मनेपदे थासि 'ह्रस्वादङ्गात् ८।२।२७' इति सिचो लोपे 'न माङ्योगे ६।४।७४' इति अडागमनिषेधे कृथाः । हि

गतौ वृद्धौ च इति स्वादिस्थाद् हि-धातोः लोटि, सिपि, 'सेर्ह्यपिच्च ३।४।८७' इति सेहौ 'स्वादिभ्यः श्नुः ३।१।७३' इति श्नुविकरणे, 'उतश्च प्रत्ययादसंयोग-पूर्वात् ६।४।१०६' इति हेर्लुकि ङित्वाद् गुणाभावे प्रेत्युपसर्गयोगे 'हिनु मीना ८।४।१५' इति णत्वे प्रहिणु ।

तद्धितः—क्षत्रस्येदं क्षात्रम् इति विग्रहे क्षत्रप्रातिपदिकात् 'तस्येदम् ४।३।१२०' इत्यणि 'तद्धितेष्वचामादेः ७।२।११७' इति वृद्धौ क्षात्रशब्दात् नपुंसके सौ तस्य 'अतोऽम् ७।१।२४' इति अमादेशे 'अमि पूर्वः ६।१।१०७' इति पूर्वरूपे क्षात्रम् । द्विजस्य भाव इति विग्रहे 'तस्य भावस्त्वतलौ ५।१।११९' इति त्वे द्विजत्वम् ।

वाच्य०—अहं त्वां शरणम् आपम् । त्वम् अस्मान् शरणानि आपः । क्षात्रेण द्विजत्वेन च परस्परार्थं (भूयते), शङ्का मा कारि स्वसूनुः प्रहीयताम् ।

शिक्षा—भारतीयत्वं शिक्षयति पद्यम् । भारते प्रधानयो रक्षकशिक्षकयो—रैक्यमासीत् । (नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्द्धते । ब्रह्म क्षत्रं च सम्पृक्तमिह चामुत्र वर्द्धते) इति हि मानवं सिद्धान्तमुद्घोषयति पद्यम्[1] ॥२१॥

विश्वामित्रः स्वविवेकस्यामोघतयाऽपि स्वप्रस्तावस्यौचितीं समर्थयति—

**घानिष्यते तेन महान् विपक्षः, स्थायिष्यते येन रणे पुरस्तात् ।**
**मा मां महाऽऽमन् परिभूरयोग्ये न मद्-विधो न्यस्यति भारमग्र्यम्॥२२॥**

अन्वयः—येन (रामेण) रणे पुरस्तात् स्थायिष्यते, तेन महान् विपक्षः घानिष्यते । हे महात्मन्, मां (विश्वामित्रम्) मा परिभूः । मद्विधः अयोग्ये अग्र्यं भारं न न्यस्यति ।

हिन्दी—जो रणमें आगे (डट कर) खड़ा होगा, वह (अवश्य) शत्रुओंका नाश करेगा । हे उदारचित्त राजन्, मेरा तिरस्कार न करो, विश्वास रखो कि हमारे जैसे पुरुष अयोग्य व्यक्तिमें प्रधान भार नहीं रखते ।

---

(१) टिप्पणी—स्वतन्त्रभारते शिक्षका रक्षकाश्च परस्परं मिलित्वा शासनं चालयन्तिस्म, तथैवाधुनापि स्यात् । मध्ये इमे शक्ती विच्छिन्ने जाते आस्ताम्, अतो देशोऽयं परतन्त्रतापाशे पतितोऽभवत् । अतो हि विवेकशक्तिः रक्षिका-शक्तिश्च सर्वदैव स्वतन्त्रदेशे सन्तुलिते एव तिष्ठेतामिति कर्तव्यं सर्वेषाम् ।

**व्याख्या**—येन रामेण ( दृढतया ) रणे संग्रामे पुरस्ताद् अग्रे स्थायिष्यते स्थास्यते, तेन रामेण (अवश्यम्) महान् प्रबलः विपक्षः शत्रुः घानिष्यते हनिष्यते। हे महात्मन्! उदारचेष्ट! मां प्रख्यातप्रभावं विश्वामित्रम् मा परिभूः मा अवज्ञासीः। मद्विधः मत्प्रकारः मादृश इति यावत् (विवेकी) अयोग्ये अक्षमे अग्र्यम् प्रधानं भारम् व्यापारं न नहि न्यस्यति निदधाति। विशेषेण सामान्यस्य भारन्यासस्य समर्थनादर्थान्तरन्यासालङ्कारः।

**कोशः**—द्विट् विपक्षाहितामित्रदस्युशात्रवशत्रवः।

प्रकारो भेदसादृश्यम्—इत्यमरः।

**समासः**—मम विधा यस्य स मद्विधः इति विग्रहे 'अनेकमन्यपदार्थे २।२।२४' इति समासे समासत्वात् प्रातिपदिकतया विभक्तेर्लुकि 'प्रत्ययोत्तरपदयोश्च ७।२।९८' इति अस्मदो मदादेशे 'गोस्त्रियोरुपसर्जनस्य १।२।४८' इति उपसर्जनविधाशब्दस्य ह्रस्वे मद्विधः। न योग्यः अयोग्यः तस्मिन् अयोग्ये इति नञ् समासः पूर्ववत् एव ज्ञेयः।

**तद्धितः**—पूर्वस्मिन्निति पुरस्तात्। पूर्व शब्दात् सप्तम्यन्तात् 'दिक्छब्देभ्यः० ५।३।२७' इति अस्तातिप्रत्यये, विभक्तेर्लुकि, 'अस्ताति च ५।३।४०' इति पूर्वस्य पुरादेशे पुरस्तात्। अग्रे भवम् अग्र्यम्—इति विग्रहे सप्तम्यन्तात् अग्रशब्दात् 'अग्राद्यत् ४।४।११६' इति यति, विभक्तेर्लुकि 'यस्येति च ६।४।१४८' इति अकारलोपे अग्र्यम् द्वितीयान्तम्।

**तिङन्तः**—हन् धातोः कर्मणि लृटि आत्मनेपदे त प्रत्यये, 'स्यतासी लृलुटोः ३।१।३३' इति स्यविकरणे 'स्यसिच्सीयुट्तासिषु० ६।४।६२' इति चिण्वदिडागमे उपधावृद्धौ 'होहन्तेर्ञ्णिन्नेषु ७।३।५४' इति हस्य घकारे घानिष्यते। स्था धातोः चिण्वदिटि स्था इष्यते इति स्थितौ 'आतो युक् चिण्कृतोः ७।३।३३' इति युगागमे स्थायिष्यते। परिभूः(श्लो० १)। नि-पूर्वकात् असु क्षेपणे दिवादिस्थाद् अस्-धातोः श्यनि न्यस्यति इति।

**वाच्य०**—यः स्थास्यति, सः महान्तं विपक्षं हनिष्यति। अहं मा परिभाविषि। मद्विधेन अग्र्यो भारो अयोग्ये न न्यस्यते।

**शिक्षा**—स्वीयं प्रारब्धमभीष्टं 'कार्यं यथा स्यात् तथा प्रपूरणीयमेवेति शिक्षयति पद्यमिदम् ॥२२॥

राजा स्वविवेकेन सुतसमर्पणमेव निश्चिकायेति—

[1]क्रुध्यन् कुलं धक्ष्यति विप्र-वह्निर्, यास्यन् सुतस् तप्स्यति मां स-मन्युम्।
इत्थं नृ-पः पूर्वमवालुलोचे, ततोऽनुजज्ञे गमनं सुतस्य ॥२३॥

अन्वयः—क्रुध्यन् विप्रवह्निः कुलं धक्ष्यति। यास्यन् सुतः समन्युं मां तप्स्यति। नृपः पूर्वम् इत्थम् अवालुलोचे। ततः सुतस्य गमनम् अनुजज्ञे (तेनेति शेषः)।

हिन्दी—पुत्रवियोग तो शोकार्त मुझे ही जलायेगा लेकिन विप्ररूपी अग्निदेव तो कुलका ही नाश कर देगें—राजाने पहले इस प्रकार विचार किया। बादमें पुत्रको जानेकी आज्ञा दे दी।

व्याख्या—(प्रजारक्षणे नियुक्तोऽहं यद्युचितमिमं न स्वीकरोमि तर्हि) क्रुध्यन् कुप्यन् विप्रवह्निः ब्राह्मणाग्निः कुलं वंशम् (ममेति शेषः) धक्ष्यति भस्मसात् करिष्यति (यदि प्रस्तावं स्वीकरोमि राममेनं प्रयच्छामि तदा) यास्यन् गमिष्यन् सुतः सूनुः (रामः) समन्युं सशोकं मां (दशरथम्) तप्स्यति अनुतापयिष्यति। नृपः राजा पूर्वम् प्राक् इत्थम् पूर्वोक्तप्रकारेण अवालुलोचे विचारयामास, ततः तदनन्तरम् (निश्चित्य) सुतस्य सूनोः (रामस्य) गमनं प्रस्थानम् अनुजज्ञे आदिदिशे (नृपेण कुलदाहापेक्षयात्मदाहो वरम् इति विवेकिनेत्यर्थः) अत्र 'अनुपसर्गाज्ज्ञः १।३ ७६' इति सोपसर्गस्यात्मनेपदनिषेधात् कर्मणि सोपसर्ग-जानातेर्लिट् ज्ञेयः। सुतानुज्ञानुज्ञाने हेतुकीर्तनात् काव्यलिङ्गम्।

कोशः - मन्युशोकौ तु शुक् स्त्रियाम्। अग्निर्वैश्वानरो वह्निः-इत्याद्यमरः।

समासः—विप्र एव वह्निः विप्रवह्निः, 'मयूरव्यंसकादयश्च २।१।७२ इति समासः। मन्युना सह वर्तते इति विग्रहे 'तेन सहेति तुल्ययोगे २।२।२८' इति समासे विभक्तेर्लुकि 'वोपसर्जनस्य ६।३।८२' इति सहस्य सादेशे समन्यु शब्दो राज्ञो विशेषणतया द्वितीयान्तो ज्ञेयः।

---

(१) टिप्पणी—राज्ञा राजधर्मस्यैव पालनं प्रधानीकृतम् न तु स्वानुसन्तापचिन्ता चिन्तिता—इति भारतीयराजधर्मः स्वतन्त्रभारतीयैः पालनीयः।

कृदन्तः—क्रुध क्रोधे इति दैवादिक-क्रुध्-धातोः 'लटः शतृशानचावप्रथमा-समानाधिकरणे ३।२।१२४' इति शतरि 'दिवादिभ्यः श्यन् ३।१।६९' इति श्यनि क्रुध्यत् शब्दात् सौ 'उगिदचाम् ७।१।७०' इति नुमि क्रुध्यन् । या प्रापणे इति अदादिस्थात् या-धातोः लृटि 'तौ सत् ३।२।१२७' इति शतृशानचोः सत्संज्ञायाम् 'लृटः सद्वा ३।२।१४' इति शतृप्रत्यये 'स्यतासी लृलुटोः ३।१।३३' इति स्यप्रत्यये यास्यत् शब्दात् सौ यास्यन् ।

तिङन्तः—दह भस्मीकरणे इति दहेर्भौवादिकात् लृटि स्यति 'हो ढः ८ २।३१' इति हस्य ढत्वे,'एकाचो बशो भष् झषन्तस्य स्ध्वोः ८।२।३७' इति दस्य धत्वे 'षढोः कः सि ८।२।४०' ककारे आदेशप्रत्यययोः ८।३।५९' इति सस्य षत्वे धक्ष्यति । आङ् पूर्वकात् लोचृ दर्शने इति लोच् धातोर्लिटि द्वित्वादिकार्य्ये आलुलोचे । ज्ञा अवबोधने इति क्र्यादिस्थात् अनुपूर्वकात् ज्ञा धातोः कर्मणि लिटि द्वित्वादिकार्ये 'आतो लोप इटि च ६।४।६४' इति आलोपे अनुजज्ञे इति ।

वाच्य०—विप्रवह्निना क्रुध्यता कुलं धक्ष्यते । यास्यता सुतेन समन्युः अहं तप्स्ये—इति नृपेण अवालुलोचे । ततः सः गमनम् अनुजज्ञी ।

शिक्षा – स्वकर्तव्यपालनं सर्वथा कर्तव्यमिति शिक्षयति पद्यम् । २३॥

इदानीं विश्वामित्रसाफल्यं निर्वक्ति—

**आशीर्भिरभ्यर्च्य मुनिः क्षितीन्द्रं, प्रीतः प्रतस्थे पुनराश्रमाय ।**
**तं पृष्ठ-तः प्रष्ठमियाय नम्रो,हिंस्रेषु-दीप्ताऽऽप्त-धनुः कुमारः॥२४॥**

अन्वयः—प्रीतः मुनिः आशीर्भिः क्षितीन्द्रम् अभ्यर्च्य, प्रातः पुनः आश्र-माय प्रतस्थे । नम्रः हिंस्रेषु दीप्ताप्तधनुः कुमारः प्रष्ठं तं पृष्ठतः इयाय ।

हिन्दी—प्रसन्न मुनि आशीर्वचनोंसे राजाका अभिनन्दन कर प्रातःकाल आश्रमको चले । विनयी तथा घातक बाणोंसे उद्दीप्त अमोघ धनुष वाले कुमार भी आगे चलने वाले मुनिके पीछे पीछे चले ।

व्याख्या—राज्ञः कुमारगमनादेशात् प्रीतः प्रसन्नः मुनिः विश्वामित्रः, आशीर्भिः आशीर्वादवाक्यैः, क्षितीन्द्रम् नृपम् अभ्यर्च्य पूजयित्वा, प्रातः प्रभाते पुनः भूयः आश्रमाय स्वस्थानं गन्तुम् प्रतस्थे प्रास्थित । नम्रः विनयी हिंस्रे-

षुदीप्तास्त्रधनुः घातुकबाणोद्दीप्तामोघ-चापः कुमारः रामः, प्रष्ठं पुरोगं तं विश्वामित्रं, पृष्ठतः पश्चात् इयाय जगाम। इन्द्रवज्रा छन्दः, लक्षणं ( द्वितीयपद्ये )। पश्चाद्गमने धनुर्धरत्वं हेतुरिति काव्यलिङ्गं साभिप्रायविशेषणे परिकरो वेति सन्देहसङ्करालङ्कारः।

कोशः—पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरस्सराः।

धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्—इत्यमरः।
हिंस्रेषु इति पृथक् पदे दीप्तास्त्रधनुः—इति पाठः।

समासः—क्षितेः इन्द्रः क्षितीन्द्रः। हिंस्राश्च ते इषवः हिंस्रेषवः, तैः दीप्तम् आप्तं धनुः यस्य स हिंस्रेषुदीप्ताप्तधनुः—इत्यनेकपदबहुव्रीहिः। समासान्त-विधेरनित्यत्वाद् 'धनुषश्च ५।४।१३२' इत्यनङ् न भवति। कुत्सितः मारः यस्य स कुमारः बहुव्रीहिः। पाठान्तरे दीप्तम् अस्त्रं धनुश्च यस्य स इति।

कृदन्तः—नमतीति विग्रहे नम प्रह्वत्वे शब्दे च इति भ्वादिस्थ-नम्-धातोः 'नमि-कम्पि० ३।२।१६७' इति र प्रत्यये नम्रः। अर्चित्वेति अभ्यर्च्य। अर्च पूजायाम् इति भ्वादिस्थात् अर्च् धातोः 'समानकर्तृकयोः पूर्वकाले ३।४।२१' इति क्त्वा-प्रत्यये, अभि इति उपसर्गयोगे 'कुगतिप्रादयः २।२।१८' इति समासे 'समासेऽनञ्पूर्वे क्त्वो ल्यप् ७।१।३७' इति ल्यपि अनुबन्धलोपे 'निमित्तापाये नैमित्तिकस्याप्यपाय' इति इटोऽप्यपगमे अथवा 'अकृतव्यूहाः पाणिनीयाः' इति पूर्वत एव इडभावे अभ्यर्च्य इति रूपम्।

तिङन्तः—प्रपूर्वकात् स्थेति भ्वादिस्थात् धातोः लिटि 'समवप्रविभ्यः स्थः १।३।२२' इति तङि ए प्रत्यये द्वित्वादिकार्ये प्रतस्थे। इण् गतौ इति अदादिस्थात् इण्धातोः लिटि णलि द्वित्वादिकार्ये इ + इ + अ इत्यत्र 'अचो ञ्णिति ७।२।११५' इति वृद्धौ, आयादेशे 'अभ्यासस्यासवर्णे ६।४।७८' इति अभ्यासस्येया-देशे इयाय।

वाच्य०—मुनिना प्रीतेन प्रतस्थे। नम्रेण हि० धनुषा कुमारेण प्रष्ठः स ईये।

शिक्षा—सफलित उपकृतो वा प्रत्युपकर्तुं न विस्मरेदित्येव शिक्षयति पद्यम्॥२४॥

मुनिमनुगन्तारं रामं लक्ष्मणोऽप्यनु जगामेत्याह—

**[1]प्रयास्यतः पुण्य-वनाय जिष्णो, रामस्य रोचिष्णु-मुखस्य धृष्णुः ।**
**त्रै मातुरःकृत्स्न-जिताऽस्त्र-शस्त्रः,सध्र्यङ् रतःश्रेयसि लक्ष्मणोऽभूत्॥२५॥**

अन्वयः—कृत्स्नजितास्त्रशस्त्रः श्रेयसि रतः धृष्णुः लक्ष्मणः पुण्यवनाय प्रयास्यतः रोचिष्णुमुखस्य जिष्णो रामस्य सध्र्यङ् अभूत् ।

हिन्दी—सारे अस्त्रशस्त्रोंको लेकर कल्याणमें तत्पर तीसरीमांका अथवा तीनों माताओंका पुत्र समर्थ लक्ष्मण पुण्यारण्यको चलने वाले देदीप्यमान चेहरे वाले विजयी रामका साथी हो चला ।

व्याख्या—कृत्स्नजितास्त्रशस्त्रः प्राप्तसर्वप्रहरणः, श्रेयसि कल्याणे रतः आसक्तः त्रैमातुरः तृतीयमातृपुत्रः, धृष्णुः प्रगल्भः लक्ष्मणः सौमित्रिः, पुण्यवनाय पावनकाननाय प्रयास्यतः प्रैष्यतो रोचिष्णुमुखस्य प्रदीप्ताननस्य जिष्णोर्विजयिनः रामस्य ज्येष्ठकुमारस्य सध्र्यङ् सहचरः अभूत्=बभूव । परिकरालङ्कारः साभिप्राय-विशेषणत्वात्, सहोक्तिश्च सध्र्यङ् शब्दोपादानादिति सङ्करः ।

कोशः—वक्त्रास्यं वदनं तुण्डमाननं लपनं मुखम् ।
जेता जिष्णुश्च जित्वरः—इत्यमरः ।

समासः—पुण्यं च तद् वनम् पुण्यवनम्, तस्य । रोचिष्णु मुखं यस्य सः, तस्य । अस्त्राणि च शस्त्राणि च अस्त्रशस्त्राणि, द्वन्द्व इतरेतरयोगः । जितानि कृत्स्नानि अस्त्रशस्त्राणि येन सः—इति त्रिपदबहुव्रीहिः ।

तद्धितसिद्धिः—तृतीयस्याः-मातुः तिसृणां मातृणां वा अपत्यम् इति विग्रहे 'मातुरुत्संख्यासम्भद्रपूर्वायाः ४।१।११५' इति अपत्येऽणि उदादेशे रपरे 'तद्धितेष्वचामादेः ७।१।११७' इति आद्यचो वृद्धौ त्रैमातुरः । 'वृत्तौ संख्यावाचकाः पूरणार्थाभिधायिन' इत्यभियुक्तोक्तेः तृतीयमातुः पुत्र इत्यर्थः, यथा तृतीया दशा येषाम् ते त्रिदशा इतिवत् । कनिष्ठमातुः पुत्रस्य ज्येष्ठमात्रोरपि पुत्रत्वमुचितमेव तथैव लोकव्यवहारात् । अत्र तु उभाभ्यामपि ज्येष्ठमातृभ्यां सुमित्रायै चरुप्रदानकर्मणा साक्षादेव त्रैमातुरत्वं लक्ष्मणस्येति न कोऽपि विरोधः ।

कृदन्त-सिद्धिः—धृष्णोतीति विग्रहे ञिधृषा-प्रागल्भ्ये इति स्वादिस्थ धृष्-

( १ ) टिप्पणी—सर्वंभृत्यकर्म लक्ष्मणेन यावज्जीवमकारि, अन्ते चात्म-निपातमपि चकार इत्यहो भ्रातृप्रेमा भारतीयः—इति पश्यन्तु वैदेशिकाः ।

धातोः 'त्रसिगृधिधृषिक्षिपेः क्नुः ३।२।१४०' इति क्नौ, अनुबन्ध-लोपे, कित्वाद् गुणाभावे धृष्णुः। अस्यते यत् तदस्त्रम् इति असु क्षेपणे धातोः औणादिकः ष्ट्रन्। शस्यते हिंस्यते अनेनेति विग्रहे शसु हिंसायाम् इति भ्वादिस्थात् शस्-धातोः 'दाम्नीशस० ३।२।१२८' इति करणे ष्ट्रन् शस्त्रम्। जयति तच्छीलः जिष्णुः। जि जये इति भौवादिकात् 'ग्लाजिस्थश्च ग्स्नु ३।२।१३९' इति ग्स्नौ, अनुबन्धलोपे 'क्ङिति च १।१।५' इति गित्वाद् गुणनिषेधे जिष्णुः। रुच दीप्तावभिप्रीतौ च इति भ्वादिस्थधातोः 'अलङ्कृञ्० ३।२।१३६' इति इष्णुचि गुणे रोचिष्णुः। सह अञ्चतीति विग्रहे 'ऋत्विग्दधृक्० ३।२।५९' इति क्विनि 'अनिदितां हल उपधायाः क्ङिति६।४।२४' इति नलोपे 'सहस्य सध्रि ६।३।९५' इति सध्र्यादेशे, यणि, सध्र्यच् शब्दात् सौ नुमादिकार्ये सध्र्यङ्।

वाच्य०—धृष्णुना कृत्स्नजितास्त्रशस्त्रेण रतेन त्रैमातुरेण लक्ष्मणेन सध्रीचा अभावि।

**शिक्षा**—ज्येष्ठभ्रातुः सेवको हि कनिष्ठ इति शिक्षयति पद्यम्॥२५॥

मालिनीछन्दसा सर्गवृत्तमुपसहरति—

> **इषुमति रघुसिंहे दन्दशूकाञ् जिघांसौ,**
> **धनुररिभिरसह्यं मुष्टिपीडं दधाने।**
> **व्रजति, पुरतरुण्यो बद्ध-चित्राङ्गुलित्रे,**
> **कथमपि गुरु-शोकान् मा रुदन् माङ्गलिक्यः॥२६॥**

**अन्वयः**—दन्दशूकान् जिघांसौ बद्धचित्राङ्गुलित्रे अरिभिः असह्यं धनुः मुष्टिपीडं दधाने इषुमति रघुसिंहे व्रजति (सति) माङ्गलिक्यः पुरतरुण्यः गुरुशोकात् कथमपि मा रुदन्।

**हिन्दी**—हिंसकोंके नाशक, शत्रुओंके असह्य धनुषको मुट्ठीसे दबाकर धारण करनेवाले अङ्गुलियोंमें चित्र-विचित्र दस्ताने पहने रघुकुल-सिंह बाणधारी रामके वन जाते समय मंगल चाहनेवाली पुरकी स्त्रियां शोक-संतप्त होने पर भी किसी प्रकारसे अपने आँसुओंको रोके रहीं।

**व्याख्या**—दन्दशूकान् हिंस्रान्, जिघांसौ बद्धचित्राङ्गुलित्रे बद्धविचित्राङ्गुलित्राणे अरिभिः रिपुभिः असह्यम् असहनीयम् मुष्टिपीडं हस्तरोधं धनुः कार्मुकं दधाने दधति इषुमति प्रशस्तशरे रघुसिंहे रघुवंशश्रेष्ठे रामे व्रजति वनं प्रस्थिते (सति), माङ्गलिक्यः कल्याणेच्छवः (मङ्गलभङ्गभीरवः

इत्यर्थः ) पुरतरुण्यः नगरयुवतयः गुरुशोकाद्बहलशुचः कथमपि केनापि प्रकारेण मा रुदन् न अश्रूणि अमुञ्चन् । रोदनाभावे मङ्गलहेतोरुपादानात् काव्यलिङ्गम् ।

कोशः—श्वःश्रेयसं शिवं भद्रं कल्याण मङ्गलं शुभम् ।
तरुणी युवतिः समे—इत्यमरः ।

समासः—चित्रं च तत् अङ्गुलित्रम् चित्राङ्गुलित्रं, बद्धं चित्राङ्गुलित्रं येन सः बद्धचित्राङ्गुलित्रः, तस्मिन् । गुरुश्चासौ शोको गुरुशोकः, तस्मात् ( कर्मधारयः ) । पुरस्य तरुण्यः पुरतरुण्यः । रघुसिंहः—सप्तमीयोगविभागसमासः ।

तद्धितः—प्रशस्ता इषवः सन्ति अस्य असौ इषुमान् इति विग्रहे 'तदस्यास्त्यस्मिन्० ५।२।९४' इति प्रशंसायां मतुपि इषुमत् शब्दो निष्पद्यते । मङ्गलं प्रयोजनं यासां ताः इति विग्रहे 'प्रयोजनम् ५।१।१०९' इति ठञि, ठस्य इकादेशे 'तद्धितेष्वचामादेः ७।२।११७' इत्यादिवृद्धौ 'यस्येति च ६।४।१४८' इति अकारस्य लोपे 'टिड्ढाणञ्० ४।१।१५' इति ङीपि माङ्गलिकी-शब्दस्य जसि 'दीर्घाज्जसि च ६।१।१०५' इति पूर्वसवर्णदीर्घनिषेधे यणि माङ्गलिक्यः ।

कृदन्तः—गर्हितं दशन्तीति दन्दशूकाः—इति विग्रहे 'लुपसद—चर० ३।१।२४' इति यङि, 'सन्यङोः ६।१।९' इति द्वित्वे अभ्यासस्य च 'जपजभ-दहदश-भञ्जपशां च ७।४।८६' इति नुगागमे दन्दश्येत्यस्य 'सनाद्यन्ता धातवः ३।१।३२' इति धातुत्वाद्, 'यज-जप-दशां यङः ३।२।१६६' इति ऊक प्रत्यये 'अतो लोपः ६।४।४८ इति अलोपे 'यस्य हल. ६।४।४९' इति यलोपे च दन्दशूकसिद्धौ तस्य शसि दन्दशूकान् इति । नात्र 'कर्तृकर्मणोः कृति २।३।६५' इति षष्ठी भवति 'न लोकाव्यय० २।३।६९' इति निषेधात् । हन्तुमिच्छतीति विग्रहे हन् धातोः सनि 'सन्यङोः ६।१।९' इति द्वित्वे, अभ्यासकार्ये, 'अज्झन-गमां सनि ६।४।१६' इति दीर्घे 'अभ्यासाच्च ७।३।५५' इति हस्य घत्वे जिघांस इत्यस्य धातुत्वात् 'सनाशंसभिक्ष उः ३।२।१६८' उप्रत्यये जिघांसुः, तस्य ङौ 'अच्च घेः ७।३।११९' इति ङेरौति घेरति वृद्धौ च जिघांसौ इति सिध्यति । मुष्टिना पीडयित्वा इति विग्रहे पीड अवगाहने इति चुरादिस्थात् पीड धातोः 'सप्तम्यां [१]चोपपीडरुधकर्षः ३।४।४९' इति णमुलि 'उपपदमतिङ् २।२।१९' इति समासे प्रातिपदिकत्वात् विभक्तेर्लुकि 'कृन्मेजन्तः १।१।३९' इति मान्तकृत्त्वादव्ययम्

(१) सूत्रे चकारात् तृतीयोपपदत्वम् उपसर्गस्य च प्रायिकत्वं ज्ञेयम् । आक्षेपकाः कवीनां स्वातन्त्र्यं तथा 'अपि माषं मषं कुर्यादिति' प्रवादमपहर्तुमक्षमा एव ।

मुष्टिपीडम् इति । व्रज गतो इति भौवादिक—व्रज्धातोः 'लटः शतृ० ३।२।१२४' इति शतरि 'कर्तरि शप् ३।१।६८' इति शपि, अनुबन्धलोपे, 'अतो गुणे ६।१।९७' इति पररूपे व्रजत्-शब्दस्य सप्तम्यां व्रजति इति। एवमेव डुधाञ् धारण-पोषणयोः इति जुहोत्यादिस्थ-धा-धातोः शानचि, द्वित्वादि-कार्ये 'श्नाभ्य-स्तयोरात ६।४।११२' इति आलोपे दधान-शब्दस्य सप्तम्या दधाने इति ।

तिङन्त — रुदिर् अश्रु विमोचने इति अदादिस्थ-रुद्-धातो लुङि झौ, 'झोऽन्त ७।१।३' इति अन्तादेशे,'इतश्च३।४।१००' इति इकारलोपे, सयोगान्तलोपे रुद्+अन् इति स्थितौ च्लेः अङि, ङित्वात् 'पुगन्तलघूपधस्य च ७।३।८६' इति गुणाभावे 'न माङ्योगे ६।४।७४' इति अडागमाभावे मा रुदन् इति । लङि अपि भवति । परन्तु कविस्तु लुङि प्रायुङ्क्त माङ्योगात् ।

वाच्य :—पुरतरुणीभिः माङ्गलिकीभि. मा रोदि ।

शिक्षा—स्त्रियोऽपि राष्ट्रकार्य्ये शुभाशंसया सहायिका यथा भवन्ति स्म पूर्वम्, तथैवाधुनाऽपि यथोचित-साहाय्यदानेन स्वातन्त्र्यरक्षण तासा कर्तव्यमिति शिक्षयति पद्यम् । मालिनीछन्दसा च सुख द्योत्यते । इतः सर्गान्तिमच्छन्दोऽपीदमेव, 'ननमयय्युतेय मालिनी भोगिलोकै' इति लक्षणम् ।।२६।।

मुनिप्रस्तावसाफल्यरूपे राष्ट्रकार्ये सर्वेषा सहयोग वक्ति—

**अथ जगदुरनीचै - राशिषस् तस्य विप्रास्,**
**तुमुल-कल-निनादं तूर्यमाजघ्नुरन्ये ।**
**अभिमत फल-शंसी चारु पुस्फोर बाहुस्,**
**तरुषु चुकुवुरुच्चैः पक्षिणश् चाऽनुकूला. ।।२७।।**

अन्वयः—अथ विप्राः तस्य आशिषः अनीचैः जगदुः । अन्ये तुमुलकलनि-नादं तूर्य्यम् आजघ्नु. । अभिमतफलशसी बाहु. ( रामस्य ) चारु पुस्फोर । अनु-कूलाः पक्षिणश्च तरुषु उच्चैः चुकुवुः ।

हिन्दी—द्विजोने उनको उच्चस्वरसे आशीर्वाद प्रदान किया । दूसरे लोगोने विविध प्रकारके मनोहर शब्द वाले बाजे बजाये । अभीष्ट फलकी ( शकुनकी ) सूचक दक्षिण भुजा फडक उठी । अनुकूल पक्षी चातक, कोयल प्रभृति, मनोहर मधुर शब्द करने लगे ( जब रामचन्द्र मुनिके साथ चले ) ।

व्याख्या—अथ रामप्रस्थानं श्रुत्वा विप्राः द्विजाः, तस्य रामस्य आशिषः

आशीर्वादान् अनीचैः उच्चैःस्वरम् जगदुः ऊचुः । अन्ये वाद्यप्रिया जनाः तुमुलकल-निनादं विविधमञ्जुलशब्दं तूर्य्यं वाद्यम् आजघ्नुः वादयामासुः । अभिमतफलशंसी अभीप्सितार्थसूचकः बाहुः दक्षिणभुजः रामस्येति शेषः, चारु साधु यथास्यात्तथा पुस्फोर पस्पन्दे । अनुकूलाः स्वनुगुणाः पक्षिणः शकुन्ताः तरुषु द्रुमेषु उच्चैः तारस्वरम् चुकुवुः चुकूजुः । गमनधर्मे अनेकधर्माभिसम्बन्धात् तुल्ययोगिता ।

कोशः—दन्तविप्राण्डजा द्विजाः । भुजबाहू प्रवेष्टो दोः ।

शकुन्ति-पक्षि-शकुनि-शकुन्त-शकुन-द्विजाः—इत्यमरः ।

समासः—न नीचैः अनीचैः, नञ् समासे 'नलोपो नञः ६।३।७३' इति न-लोपः । तुमुलः कलः निनादः यस्मिन् तत् तुमुलकलनिनादम्, त्रिपदो बहुव्रीहिः । अभिमतं च तत्फलम् अभिमतफलम्, कर्मधारयः । अभिमतं शलं शंसति तच्छीलः—इति विग्रहे 'सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८' इति णिनि प्रत्यये उपपद-समासे, सुपो लुकि, अभिमतफलशंसिन् तस्य सौ विभक्तौ 'सौ च ६।४।१३' इति दीर्घे अभिमतफल-शंसी ।

तिङन्तसिद्धिः—गद व्यक्तायां वाचि इति भौवादिक गद् धातोः लिटि तत्स्थाने उसि 'लिटि धातोरनभ्यासस्य ६।१।८' इति द्वित्वे 'पूर्वोऽभ्यासः'६।१।४' इति पूर्वस्याभ्यास-संज्ञायाम् आदेर्हलः शेषे 'कुहोश्चुः ७।४।६२' इति गस्य जकारे जगदुः । आ + हन् धातोर्लिटि द्वित्वे, अभ्यासकार्ये, जहन् + उस् इत्यत्र 'गमहन० ६।४।९८' इति उपधालोपे 'होहन्तेर्ञ्णिन्नेषु ७।३।५४' इति हस्य घत्वे आजघ्नुः । स्फुर धातोः लिटि, णलि, द्वित्वादौ 'शर्पूर्वाः खयः ७।४।६१' इति खयः शेषे 'अभ्यासे चर्च ८।४।५४' इति चर्त्वे, पुकारे लघूपधस्य गुणे पुस्फोर । कु शब्दे इति अदादि कु-धातोः लिटि, तत्स्थाने उसि, द्वित्वादौ 'अचि श्नु० ६।४।७७' इति उवङि चुकुवुः ।

वाच्य०—विप्रैः आशिषः जगदिरे । अन्यैः तुमुलकलनिनादं तूर्यम् आजघ्ने । अभिमतफलशंसिना बहुना पुस्फुरे । अनुकूलैः पक्षिभिः चुकुवे ।

शिक्षा—सार्वजनिककार्य्ये सर्वैः सम्मिलितैर्भूयते । इति हि भारतीयमर्यादा सर्वैः रक्षणीयेति शिक्षयति पद्यम् ॥२७॥

**इति श्री रावणवधाभिधे भट्टि-महाकाव्ये स्वातन्त्र्यसमर्थकशब्दा-नुशासनप्रधाने व्याख्याने रामाविर्भावो नाम प्रथमः सर्गः समाप्तः ।**

# ॥ अथ द्वितीयः सर्गः ॥

भारतीयानां विजयप्रस्थानं प्रायः शरत्कालीनमेव प्रसिद्धमिति रामस्यापि राक्षस-विजयार्थं श्रीविश्वामित्रेण सह प्रस्थितस्य प्रस्थानप्रसङ्गतः शरदमेव वर्णयति महाकविः प्रसादगुणेन विविधालङ्कारेण व्याकरणपद-प्रदर्शनधिया प्रकीर्णकाण्डेनै-कोनविंशपद्यावधिम्—

**[1]वनस्पतीनां सरसां नदीनां, तेजस्विनां कान्तिभृतां दिशां च।**
**निर्याय तस्याः स पुरः समन्ता-च्छ्रियं दधानां शरदं ददर्श ॥१॥**

अन्वयः—सः (रामः) तस्याः (अयोध्यायाः) पुरः निर्याय वनस्पतीनां सरसां नदीनां तेजस्विनां कान्तिभृतां दिशां च श्रियं दधानां शरदं समन्ताद् ददर्श ।

सर्गेऽस्मिन् सर्गोपान्तं पूर्वोक्तमुपजातिवृत्तम्, मध्ये मध्ये क्वापि केवलोपेन्द्रवज्रा इन्द्रवज्राप्यस्ति, सा तत्रैव द्रष्टव्या ।

हिन्दी—राघवने अयोध्या नगरीसे निकलकर वृक्षोंकी, तालावोंकी, नदियोंकी, तेजस्वी (तारा चन्द्र प्रभृति) वस्तुओंकी और निर्मल दिशाओंकी भी शोभाको धारण करने वाली शरद् ऋतुको चारों ओर देखा ।

व्याख्या—स रामः, तस्या अयोध्यायाः पुरः नगर्य्या निर्याय निर्गत्य वनस्पतीनाम् वृक्षाणाम्, सरसां कासाराणाम्, नदीनां सरितां, तेजस्विनां चन्द्रतारादीनां तेजोधारिणां वस्तूनां, कान्तिभृतां दीप्तिजुषां दिशां ककुभां च पुनः श्रियं शोभां दधानां दधतीं शरदं शरदृतुं समन्तात् सर्वतः ददर्श निरीक्षाञ्चक्रे । यद्यपि 'वानस्पत्यः फलैः पुष्पात् तैरपुष्पात् वनस्पतिः—' इति अभियुक्तोक्तेः पारिभाषिका एव वनस्पतयो भवन्ति । तथापीह लोकप्रतीत्या वृक्षा गृह्यन्ते ।

---

(१) टिप्पणी—शरद्का वर्णन प्रायः सभी कवियोंने किया है । पर भट्टि कविने प्रसाद गुण तथा विविध अलङ्कारोंको लगाकर सबसे विलक्षण पाणिनी-याष्टाध्यायी सूत्रोंके प्रकीर्ण काण्डोंके द्वारा उदाहरणोंकी भरमार कर सबके कान काट लिये हैं । इस शरद्वर्णनमें काव्यकी कला, व्याकरणकी कला, सरलताकी कला, पदविन्यासकी कला—सबकी हद्द करदी है । छात्रोंको इसे कण्ठ करना चाहिये । आगे १९ श्लोकों तक शरद्वर्णनकी छटा है ।

कोशः—पद्माकरस्तडाकोऽस्त्री कासारः सरसी सरः ।

अथ नदी सरित् । तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी ।

पूः स्त्री पुरीनगर्यौ वा पत्तन पुटभेदनम् ।

स्याद्दतौ वत्सरे शरद्—इत्याद्यमरः

समास.—वनानां पतयः वनस्पतयः, तेषाम् । अत्र षष्ठीसमासे विभक्तेर्लुकि 'पारस्करप्रभृतीनि च संज्ञायाम् ६।१।१५७' इति सुडागमे सिध्यति रूपम् ।

कृदन्तः—निर्गत्येति पाठे निर्पूर्वकाद् गम्लृ गतौ इति भौवादिकाद् गम् धातोः 'समानकर्तृकयो पूर्वकाले ३।४।२१' इति क्त्वा प्रत्यये 'कुगतिप्रादयः २।२।१८' इति समासे 'समासेऽनञ्पूर्वे क्त्वो ल्यप् ७।१।३७' इति ल्यपि,'ह्रस्वस्य पिति कृति तुक् ६।१।७१' इति तुकि निर्गत्य । गत्वा इति गमेः क्त्वा प्रत्यये 'अनुदात्तोपदेश० ६।४।३७' इति मकारलोपे सिध्यति । एव यात्वा निर्यायेत्यादि । दधानामिति पूर्वसर्गे २६ श्लोके दधान-शब्दे 'अजाद्यतष्टाप् ४।१।४' इति टापि, अमि, दधानाम् ।

वाच्य०—तेन श्रियं दधाना शरद् ददृशे ।

शिक्षा—शोभा दर्शनीयैव भवतीत्युपदिशति कविः सर्वोऽपि जगति शोभाशाली स्यात् इति ॥ १ ॥

इतः सर्ववस्तुवर्णनप्रसङ्गे रक्तकमलं वर्णयति—

**[1]तरङ्ग-सङ्गाच् चपलैः पलाशैर्, ज्वाला-श्रियं साऽतिशयां दधन्ति ।**
**स-धूम-दीप्ताऽग्नि-रुचीनि रेजुस्, ताम्रोत्पलान्याकुल-षट्-पदानि॥२॥**

अन्वयः—तरङ्गसङ्गात् चपलैः पलाशैः सातिशया ज्वालाश्रियं दधन्ति आकुलषट्पदानि (अतएव) सधूमदीप्ताग्निरुचीनि ताम्रोत्पलानि रेजुः ।

हिन्दी—तरङ्गोंके लगनेसे चञ्चल दलोसे अत्यधिक ज्वालाकी शोभाको धारणकरनेवाले घूमते हुए भ्रमरोसे युक्त होनेके कारण धूएसे सम्मिलित प्रज्वलित अग्निकी काति के समान कातिवाले लाल कमल शोभित हो रहे थे ।

---

(१)टिप्पणी—सङ्गात्+चपलैः='स्तोः श्चुना श्चुः८।४।४०'इति तस्य चुत्वेन चकारे सङ्गाच्चपलैः । रेजुः+ताम्र० 'विसर्जनीयस्य सः ८।३।३४' इति सत्वे रेजुस्ताम्र० अग्रे गुणयणौ स्वयं कार्यौ ।

व्याख्या—तरङ्गसङ्गात् ऊर्मिसम्पर्कात् चपलैः चञ्चलैः पलाशैः दलैः, सातिशयाम् अत्यधिकां ज्वाला-श्रियम् उच्छिख-शोभां दधन्ति दधानानि आकुलषट्पदानि भ्रमद्भ्रमराणि, अत एव सधूमदीप्ताग्निरुचीनि धूमयुक्तप्रज्वलितवह्निकान्तीनि ताम्रोत्पलानि रक्तपद्मानि, रेजुः=शुशुभिरे। उपमालङ्कारः।

समासः—तरङ्गानां सङ्गः तरङ्गसङ्गः, तस्मात्। ज्वालायाः श्री ज्वालाश्रीः, ताम्। अतिशयेन सह वर्तते इति–विग्रहे 'तेन सहेति तुल्ययोगे २।२।२८' इति समासे, विभक्तेर्लुकि 'वोपसर्जनस्य ६।३।८२' इति सहस्य सादेशे सातिशया, ताम्। धूमेन सह इति विग्रहेऽपि तथैव। दीप्तश्चासौ अग्निः दीप्ताग्निः। ततः सधूमश्चासौ दीप्ताग्निः सधूमदीप्ताग्निः, तस्य रुचिरिव रुचिर्येषाम् इति विग्रहे त्रिपदबहुव्रीहौ 'सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च वक्तव्यः' इति वार्तिकबलेन 'अनेकमन्यपदार्थे २।२।२४' इति समासे, विभक्तेरुत्तरपदस्य च द्वितीयरुचिपदस्य लोपे सधूमदीप्ताग्निरुचीनि। आकुलानि षट्पदानि येषां तानि। एवं हि ताम्रोत्पलानि—ताम्राणि च तानि उत्पलानीति कर्मधारयसमासेन बोध्यानि। दधन्ति इत्यत्र 'वा नपुंसकस्य ७।१।७६' इति नुमि जसः शौ रूपम्।

तिङन्तः—राजृ दीप्तौ इति भौवादिक राज्-धातोः लिटि, उसि, द्वित्वादिकार्ये रराज+उस् इति स्थितौ 'फणां च सप्तानाम् ६।४।१२५' इति अभ्यासलोपे आकारस्य चैकारे रेजुः इति।

वाच्य०—श्रियम् दधद्भिः आकुलषट्पदैः सधूमदीप्ताग्निरुचिभिः ताम्रोत्पलैः रेजे।

शिक्षा—पदार्थानां 'साधुयोगेनैव शोभातिशयो [illegible]' सर्वैर्यत्नः कार्य्यं इति ॥२॥




जल-कूलयोः परस्पर-स्पर्द्धां विवृणोति—

**बिम्बाऽऽगतैस्तीर-वनैः समृद्धिं, निजां विलोक्यापहृतां पयोभिः।**
**कूलानि साऽऽमर्षतयेव तेनुः, सरोज-लक्ष्मीं स्थल-पद्महासैः ॥३॥**

अन्वयः—कूलानि पयोभिः (कर्तृभिः) बिम्बागतैः तीरवनैः (करणैः) अपहृतां निजां समृद्धिं विलोक्य सामर्षतया इव स्थल-पद्महासैः (करणैः) सरोजलक्ष्मीं तेनुः। (सामर्षतयेवेति गुणोत्प्रेक्षालङ्कारः)।

हिन्दी—किनारोंने जलोंके द्वारा तटस्थलमे पुष्पित वनोंके प्रतिबिम्बके जरियें हर ली गयी अपनी शोभाको देखकर मानो कि अमर्षमे पडकर अपने यहाँ स्थल-कमलोके विकासके जरिये जलोंके कमलोंकी शोभाको फैला लिया।

व्याख्या—कूलानि तटानि, पयोभिः जलैः (कर्तृभिः) बिम्बागतैः प्रतिबिम्ब-मक्रान्तैः तीरवनैः पुष्पिततटकाननैः (करणैः) अपहृताम् चोरिता निजा स्वीया समृद्धि सम्पत्ति विलोक्य वीक्ष्य, सामर्षतया सासूयया इव स्थलपद्महासैः तीरस्थलकमलविकासैः (करणैः) सरोजलक्ष्मी पयःसम्बन्धिनी कमलशोभा तेनु विस्तारयाम्बभूवुः। अत्र पयासि स्पर्द्धीनि, कूलानि प्रतिस्पर्द्धीनि। उभयत्र करणानि। प्रतिबिम्बित तीरवनानि तत्र जले, विकसित-स्थलपद्मानि चेह कूले।

कोश.—कूल रोधश्च तीर च प्रतीर च तट त्रिषु।
अटव्यरण्यं विपिन गहन काननं वनम्।
वा पुसि पद्म नलिनमरविन्द महोत्पलम्।
सहस्रपत्र कमलं शतपत्र कुशेशयम्—इत्याद्यमरः।

समास.—बिम्बेन आगतानि बिम्बागतानि, तैः। तीरस्य वनानि तीरवनानि, तैः। अमर्षेण सह वर्तन्ते इति सामर्षाणि, तेषा भावः सामर्षता, तया। अत्र 'तेन सहेति तुल्ययोगे २।२।२८' इति समासे 'वोपसर्जनस्य ६।३।८२' इति सहस्य सादेशे सामर्षशब्दात् 'तस्य भावस्त्वतलौ ५।१।११९' इति तलि स्त्रीत्वे सामर्षता, तया। स्थलस्य पद्मानि स्थलपद्मानि, तेषा हासाः स्थलपद्महासाः, तैः।

तिङन्त.—तनु विस्तारे इति तनादिस्थ-तन्-धातोर्लिटि द्वित्वादिकार्ये 'अत एकहल्मध्ये ऽनादेशादेर्लिटि ६।४।१२०' इति अभ्यासलोपे, धातोरकारस्य एकारे तेनुः इति।

वाच्यपरि०—कूलैः सरोजलक्ष्मीस्तेने।

शिक्षा—यथा पयःकूले परस्पर-स्पर्द्धा-प्रतिस्पर्धाभ्यां स्वशोभावृद्धि कुरुतस्तथैव छात्रा अपि परस्पर-स्पर्द्धाप्रतिस्पर्धाभ्यां क्रीडावादप्रतिवाद-लेखादिप्रतियोगितायत्नेन स्वयोग्यतावृद्धि कुर्युरिति शिक्षयति पद्यमिदम् ॥३॥

कुमुद्वतीं प्रति तीरतरोः समवेदनां दर्शयति—

**निशा-तुषारैर् नयनाऽम्बु-कल्पैः, पत्रा-ऽन्त-पर्यागलदच्छ-बिन्दुः।**
**उपारुरोदेव नदत्-पतङ्गः, कुमुद्वतीं तीर-तरुर् दिनाऽऽदौ ॥४॥**

**अन्वयः**—दिनाऽदौ नयनाम्बुकल्पैः निशातुषारैः पत्रान्तपर्यागलदच्छबिन्दुः नदत्पतङ्गः तीरतरुः कुमुद्वतीम् उपारुरोद इव।

**हिन्दी**—प्रभातसमयमें आंसूके सदृश पत्तोंके अग्रभागसे जो स्वच्छ ओसके कण गिर रहे हैं, वही आंसू गिरते हैं। तथा पक्षी जो शब्दकर रहे हैं वही पेड़के रोनेकी आवाज है। ऐसा तीरका पेड़ कुमुद्वती ( रात्रि-कमल ) के प्रति मानो रो रहा है कि "हा चन्द्र, पतिके चले जाने पर तुम्हारी क्या दशा हो गयी है।" यह कविकल्पना है!

**व्याख्या**—दिनादौ प्रातःकाले, नयनाम्बुकल्पैः नेत्राम्बुतुल्यैः, निशातुषारैः रात्रिनीहारैः, पत्रान्तपर्यागलदच्छबिन्दुः=पर्णाग्रस्रवन्निर्मलविप्रुट्, नदत्पतङ्गः=कूजदण्डजस्तीरतरुः तटद्रुमः, कुमुद्वतीं कुमुदिनीं प्रति उपारुरोद इव रोदितिस्म मन्ये। अत्रोत्प्रेक्षालङ्कारः।

**कोशः**—मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः।

उत्प्रेक्षाव्यञ्जकाः शब्दा इव शब्दोऽपि तादृशः॥

अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्।

पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्।

वृक्षो महीरुहः शाखी विटपी पादपस्तरुः।

अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः—इत्यमरः।

**समासः**—दिनस्य आदिः दिनादिः, तस्मिन्। नयनयोः अम्बूनि नयनाम्बूनि, ईषदसमाप्तानि नयनाम्बूनि इति नयनाम्बुकल्पानि, तैः नयनाम्बुकल्पैः। 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ५।३।६७' इति कल्पप् प्रत्ययः। निशायास्तुषाराः निशातुषाराः तैः। पत्राणाम् अन्ताः पत्रान्ताः, तेभ्यः पर्यागलन्तः पत्रान्तपर्य्यागलन्तः। पञ्चमीति योगविभागेन समासः। पत्रान्तपर्य्यागलन्तः अच्छा बिन्दवो यस्य स इति त्रिपद-बहुव्रीहिः। नदन्तः पतङ्गा यस्मिन् सः नदत्पतङ्गः। तीरस्य तरुः तीरतरुः।

**तिङन्तः**- रुदिर अश्रुविमोचने इति अदादिस्याद् रुद्-धातोः लिटि तिपि 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ३।४।८२' इति णलि द्वित्वादिकार्य्ये 'पुगन्तलघूपधस्य च ७।३।८६' इति गुणे, उप + आङिति उपसर्गयोगे उपारुरोदेति। गम्यमानोद्देशक्रियापेक्षया कर्मत्वम्। उपसर्गयोगादत्र सकर्मता वा। विवक्षाधीनं कारकम् इति चरमं समाधानम्।

**वाच्यपरि०**—पत्रान्तपर्यागलदच्छबिन्दुना नदत्पतङ्गेन तीरतरुणा कुमुद्वती उपारुरुदे इव ।

**शिक्षा**—कविना कुमुद्वतीदुःखं प्रति तीरतरो रोदनमुत्प्रेक्ष्य समाजे परस्पर-विपत्ति-साहाय्यकरणमावश्यकं कर्मेति महती समाज-शिक्षा दर्शिता ॥४॥

सम्प्रति कविः वनजलयोः परस्परशोभाप्रेक्षणमुत्प्रेक्षते—

**वनानि तोयानि च नेत्र-कल्पैः, पुष्पैः सरोजैश् च निलीन-भृङ्गैः ।**
**परस्परां विस्मयवन्ति लक्ष्मी—मालोकयाञ्चक्रुरिवाऽऽदरेण ॥५॥**

**अन्वयः**—विस्मयवन्ति वनानि तोयानि च निलीनभृङ्गैः ( अत एव ) नेत्र-कल्पैः पुष्पैः सरोजैश्च परस्परां लक्ष्मीम् आदरेण आलोकयाञ्चक्रुः इव ।

**हिन्दी**—वन तथा ( तालाबके ) जल भौंरे जिसमें बैठे हैं ऐसे नेत्रसदृश फूलों और कमलोंसे परस्परकी शोभाको आदरके साथ बड़े विस्मय-युक्त हो देख रहे हैं ( काली पुतली की जगह भौंरे हैं ) ।

**व्याख्या**—विस्मयवन्ति आश्चर्यचकितानि, वनानि विपिनानि, तोयानि पयांसि च निलीनभृङ्गैः मध्यस्थितभ्रमरैः अत एव नेत्रकल्पैः नयनतुल्यैः पुष्पैः सुमनोभिः सरोजैः कमलैः च परस्पराम् अन्योन्याम् लक्ष्मीम् शोभाम् आदरेण आस्थया आलोकयाञ्चक्रुः निरीक्षाञ्चक्रिरे इव मन्ये । उत्प्रेक्षालङ्कारः ।

**कोशः**—स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम् ।
अटव्यरण्यमित्यादि १-७ पद्ये ।
मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ।
द्विरेफः पुष्पलिड्भृङ्गषट्पदभ्रमरालयः— इत्यमरः ।

**समासः**—निलीनाः भृङ्गाः येषु तानि निलीनभृङ्गाणि, तैः । परेषां च परेषां च इति परस्पराम्—'कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्' इति वार्तिकबलात् सुडागमसमासादिसर्वकृत्यानन्तरम् लक्ष्मी-विशेषणम् परस्परामिति सिध्यति ।

**कृदन्तः**—सरसि जातानि सरोजानि इति विग्रहे 'सप्तम्यां जनेर्डः ३।२।९७' इति ड प्रत्यये 'उपपदमतिङ् २।२।१९' इति समासे 'तत्पुरुषे कृति बहुलम् ६।३।१४' इति बाहुलकात् सप्तम्या लुकि सिद्धिः ।

तद्धितः—विस्मयोऽस्ति येषां तानि विस्मयवन्ति इत्यर्थे विस्मय-शब्दात् 'तदस्यास्त्यस्मिन्निति मतुप् ५।२।९४' इति मतुपि 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८।२।९' इति मस्य वत्वे, नपुंसके रूपम् ।

तिङन्तः—लोकृ दर्शने इति चौरादिकात् लोक्-धातोः 'सत्यापपाश० ३।१।२५' इति णिचि लोकि इत्यस्य 'सनाद्यन्ता धातवः ३।१।३२' इति धातुत्वाल्लिटि 'कास्प्रत्ययादाममन्त्रे लिटि ३।१।३५' इति आमि 'आमः २।४।८१' इति लिटो लुकि, 'कृञ्चानुप्रयुज्यते लिटि ३।१।४०' इति पुनर्लिट्परके कृञोऽनुप्रयोगे 'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य १।३।६३' इति परस्मैपदे उसि 'लिटि धातोरनभ्यासस्य ६।१।८' इति द्वित्वेऽभ्यासकार्ये उपसर्गयोगे आलोकयाञ्चक्रुः ।

वाच्यपरि०—वनैः तोयैः च परस्परा लक्ष्मीः विस्मयवद्भिः आलोकयाञ्चक्रे ।

शिक्षा—समाजे परस्परोत्कर्षनिरीक्षणं समादरेण कर्तव्यमिति वनतोययोः परस्परशोभानिरीक्षणप्रदानेन शिक्षयति कविः ॥५॥

कालप्रभावपरवशो महाकविः पद्मिनीं खण्डितां नायिकामुत्प्रेक्षते—

**प्रभातवाताहति-कम्पिताकृतिः, कुमुद्वती-रेणु-पिशङ्ग-विग्रहम् ।**
**निरास भृङ्गं कुपितेव पद्मिनी, न मानिनी संसहतेऽन्य-सङ्गमम् ॥६॥**

अन्वयः—प्रभातवाताहतिकम्पिताकृतिः पद्मिनी कुपिता (खण्डिता नायिका) इव कुमुद्वतीरेणुपिशङ्गविग्रहं भृङ्गं निरास, (यतो हि) मानिनी अन्य-सङ्गमं न संसहते ।

हिन्दी—प्रातःकालीन वायुसे कम्पित आकारवाली पद्मिनी क्रुद्ध होकर खण्डिता नायिकाके सदृश कुमुद्वतीके सम्पर्कसे पीले शरीरवाले भ्रमरको हटा रही थी, क्योंकि मानिनी स्त्री दूसरीके साथ अपने पतिके संयोगको नहीं सह सकती ।

व्याख्या—प्रभातवाताहतिकम्पिताकृतिः विभातपवन-सम्पर्क-स्पन्दिताकारा पद्मिनी नलिनी कुपिता क्रुद्धा इव यथा (खण्डिता नायिकेति यावत्) कुमुद्वतीरेणुपिशङ्गविग्रहम् कुमुदिनीपरागपिङ्गवपुषम् भृङ्गम् अलिम् निरास=तिरश्चकार । (यतो हि) मानिनी मानशालिनी (नायिका) अन्यसङ्गमम् इतरसंयोगम् न

नैव संसहते क्षाम्यति। वंशस्थ-वृत्तम् । 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणम् ।

इह मानिन्या अन्यस्याः सङ्गमासहनात्मक-सामान्यवृत्तेन पद्मिन्याः कुमुद्वतीसङ्गमासहनं समर्थयतीति सामान्येन विशेषसमर्थनात्मकोऽर्थान्तरन्यासः ।

लक्षणम्—उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः ।

हनूमानब्धिमतरद्दुष्करं किं महात्मनाम् ?

खण्डितालक्षणम्—पार्श्वमेति प्रियो यस्या अन्यसंभोगचिह्नितः ।
खण्डिता सा समाख्याता धीरैरीर्ष्याकषायिता ॥

कोशः—नभस्वद्वातपवनपवमान-प्रभञ्जनाः ।
जलनीली पु शैवालं शैवलोऽथ कुमुद्वती ।
कुमुदिन्यां नलिन्यां तु बिसिनीपद्मिनीमुखाः—इत्यमरः ।

समासः—प्रभातस्य वातः प्रभातवातः । तस्य आहतिः प्रभातवाताहतिः, तया कम्पिता प्रभातवाताहतिकम्पिता । प्रभा० ता आकृतिः यस्याः सा प्रभा० कृतिः । अन्यया सङ्गमः अन्यसङ्गमः, तृतीयातत्पुरुषे समासे 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इत्यनुशासनात्पुंवद्भावः । कुमुद्वत्याः रेणुः, तेन पिशङ्गः, जातित्वादेकवचनेन समासः । कुमुद्वतीरेणुपिशङ्गः विग्रहो यस्य सः कुमुद्वतीरेणुपिशङ्गविग्रहः, तम् ।

तद्धितः—पद्मानि सन्ति अस्या इति पद्मिनी 'अत इनिठनौ ५।२।११५' इति इनि, 'ऋन्नेभ्यो ङीप् ४।१ ५' इति ङीपि, पद्मिनीशब्दसिद्धिः । पद्मक्षुपस्य पुष्पादधोभागः काण्डात्मकः पद्मिनीत्यादिसंज्ञयोच्यते । केवलं पुष्पम् पद्ममित्युच्यते । एवं कुमुदिनी-कुमुदयोरपि ज्ञेयम् । कुमुदमस्ति अस्याः सा कुमुद्वतीतिविग्रहे 'कुमुदनडवेतसेभ्यो ड्मतुप् ४।२।८७' इति ड्मतुप्-प्रत्यये कुमुदस्य डित्वाट्टिलोपे 'झयः ८।२।१०' इति मस्य वत्वे, 'उगितश्च ४।१।६' इति ङीपि कुमुद्वती शब्दसिद्धिः ।

तिङन्तः—निःपूर्वकात् असु क्षेपणे इति दैवादिकात् अस्-धातोर्लिटि णलादेशे द्वित्वे, अभ्यासकार्ये 'अत आदेः ७।४।७०' इति अभ्यासदीर्घे सवर्णदीर्घे निरास । षह मर्षणे इति भौवादिक-सह्-धातोरात्मनेपदे सहते ।

वाच्य०—प्रमा० कृत्या पद्मिन्या कुपितया इव कुमुद्वतीरेणुपिशङ्गविग्रहः भृङ्गो निरासे। मानिन्या अभ्यसङ्गमः न संसह्यते।

शिक्षा—पद्मिनी-कुमुद्वत्योर्जडयोरपि एव सपत्नीव्यवहारं दर्शयन् कविः पुरुषाणां तदानीन्तनी बहुभार्य्योढिप्रथां भर्त्सयन् निषेध शिक्षयति ॥६॥

शान्तमपि मृग जिघासुरपि व्याधः शारदहंसनाद कृष्टो लक्ष्यच्युतो जायते—

इति व्याध-मृगोभयदशा वर्णयति—

[१]दत्ताऽवधानं मधु-लेहि-गीतौ, प्रशान्त-चेष्टं हरिणं जिघांसुः।
आकर्णयन्नुत्सुक-हंस-नादान् लक्ष्ये समाधिं न दधे मृगावित् ॥७॥

अन्वयः—मधुलेहिगीतौ दत्तावधानम् (अत एव) प्रशान्त-चेष्टम् (अपि) हरिणं जिघांसुः मृगावित् उत्सुकहंसनादान् आकर्णयन् लक्ष्ये समाधिं न दधे।

हिन्दी—भ्रमरोके गीतमें ध्यान देने वाले अत एव प्रशान्त चेष्टा वाले भी मृगको मारना चाहते हुए भी शिकारी उत्सुक हंसोके शब्दोको सुननेके कारण लक्ष्यमें चित्तकी एकाग्रता न रख सका।

व्याख्या—मधुलेहिगीतौ द्विरेफगाने, दत्तावधान आसक्तमानसं, प्रशान्तचेष्टं स्थिराङ्गम् (अपि) हरिण मृगम् जिघांसुः जिहिंसिषुः मृगावित् व्याधः, उत्सुकहंसनादान् उत्कण्ठितचक्राङ्गशब्दान् आकर्णयन् शृण्वन्, लक्ष्ये वध्ये समाधिम् चित्तैकाग्रता, न दधे=नैव दधार। अत्र शान्तचेष्टादिलक्ष्यवधसामग्रीसत्वेऽपि तदभावात् विशेषोक्तिः। 'सति हेतौ फलाभावे विशेषोक्तिस्तथा द्विधा।' हंसनादाकर्णन निमित्तोपादानाच्च काव्यलिङ्गालङ्कारः। 'हेतोर्वाक्यपदार्थत्वे काव्य लिङ्गं निगद्यते'। इत्थं विशेषोक्तिकाव्यलिङ्गाभ्या सन्देहसङ्करालङ्कारः।

कोशः—हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः।
मृगे कुरङ्गवातायुहरिणाजिनयोनयः।
व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः—इत्याद्यमरः।

---

(१ टिप्पणी—द्वौ प्रमादिनौ। इत्थभूताना कृते एवोक्तिरियम्, यत्
"कुरङ्गमातङ्गपतङ्गमीनभृङ्गाहताः पञ्चभिरेव पञ्च।
नरः प्रमादी स कथ न हन्यते यः सेवते पञ्चभिरेव पञ्च" ॥ इति।

**समासः**—दत्तम् अवधानम् येन सः दत्तावधानः, तम् । मधुलेहिनां गीतिः मधुलेहिगीतिः, तस्याम् । प्रशान्ता चेष्टा यस्य सः, तम् । उत्सुकाश्च ते हंसा उत्सुकहंसाः, तेषां नादा उत्सुकहंसनादाः, तान् ।

**कृदन्तः**—मधु लेढुं शीलं येषां ते मधुलेहिनः 'सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८' इति णिनिः, 'पुगन्तलघूपधस्य च ७।३।८६' इति गुणे मधुलेहिन् इति शब्द; । हन्तुमिच्छुरिति जिघांसुः । प्रथमे सर्गे २६शे पद्ये सिद्धिर्द्रष्टव्या । आकर्णयन्–आङ्पूर्वकात् कर्णशब्दात् 'प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च' इति णिचि टिलोपे आकर्णि इति णिजन्तात् 'लक्षणहेत्वोः क्रियायाः ३।२।१२६' इति शतरि, शपि, गुणे, अयादेशे पररूपे आकर्णयत् शब्दस्य सौ 'उगिदचाम् ७।१।७०' इति नुमि रूपम् ज्ञेयम् । मृगम् विध्यतीति विग्रहे 'क्विप् च ३ २।७६' इति क्विपि सर्वापहारिलोपे, 'ग्रहिज्या ६।१।१६' इति सम्प्रसारणे 'सम्प्रसारणाच्च ६।१।१०८' इति पूर्वरूपे 'नहिवृति० ६।३।११६' इति दीर्घे मृगाविध् शब्दः, तस्य कृदन्तत्वात् प्रातिपदिकतया सौ रूपम् ।

**तिङन्तः**—डुधाञ् धारण-पोषणयोः इति जुहोत्यादिस्थ-धा-धातोः लिटि, तङि, 'लिटस्तझयोरेशिरेच् ३।४।८१' इति एशि, अनुबन्धलोपे, द्वित्वे अभ्यासकार्ये 'आतो लोप इटि च ६।४।६४' इति आलोपे दधे ।

**वाच्य०**—पूर्वोक्त-विशेषणं मृगं जिघांसुना मृगाविधा हंसनादान् आकर्णयता समाधिः न दधे ।

**शिक्षा**—व्यसनासक्तः कार्यं कर्तुमक्षमः—इति व्याधकार्यात् व्यसनासक्तो विपत्तौ पततीति हरिणदशातः शान्तमपि ब्रह्म मायादिविषयोत्सुकात्मनादविक्षिप्तचेतसो जना न प्राप्नुवन्तीति च शिक्षयति कविः ॥७॥

मेघस्य हिमालयसाम्यमुपपादयति—

**गिरेर् नितम्बे मरुता विभिन्नं, तोयावशेषेण हिमाभमभ्रम् ।**
**सरिन्-मुखाभ्युच्चयमादधानं, शैलाधिपस्यानुचकार लक्ष्मीम् ॥८॥**

**अन्वयः**—गिरेः नितम्बे मरुता विभिन्नम् तोयावशेषेण हिमाभम् सरिन्मुखाभ्युच्चयम् आदधानम् अभ्रम् शैलाधिपस्य लक्ष्मीम् अनुचकार ।

**हिन्दी**—पर्वतकी चोटीके नीचे वायुके कारण विभिन्न रूपमें :बढ़ा हुआ

कुछही जलके बचजानेसे बर्फके समान सफेद नदियोंके प्रमुख प्रवाहको बढ़ाने वाला मेघ हिमालयकी बराबरी कर रहा था।

व्याख्या—गिरेः पर्वतस्य, नितम्बे कटके, मरुता वायुना, विभिन्नम् बहुधा कृतम्, तोयावशेषेण पयोऽवशिष्टतया हिमाभम् तुषारतुल्यं सरिन्मुखाभ्युच्चयम् गिरिणदीनिर्गमवृद्धिम् आदधानम् कुर्वाणम्, अभ्रम् मेघः, शैलाधिपस्य हिमालयस्य लक्ष्मीम् शोभाम् अनुचकार अनुकरोतिस्म। अत्रोपमालङ्कारो ध्वन्यते।

कोशः—अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः।
धाराधरो जलधरस्तडित्वान् वारिदोऽम्बुभृत्—इत्यमरः।

समासः—तोयस्य अवशेषः, तेन। हिमस्य आभा इव आभा यस्य हिमाभम्। शैलानाम् अधिपः शैलाधिपः, तस्य। सरिन्मुखस्य अभ्युच्चयस्तम्।

कृदन्त-सिद्धिः—विपूर्वकात् भिदिर् द्वैधीकरणे इति रुधादिस्थ-भिद्-धातोः 'निष्ठा ३।२।१०२' इति क्त प्रत्यये, कित्वाद् गुणनिषेधे, 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः ८।२।४२' इति धातोः प्रत्ययस्य च दतयोः नकारे विभिन्नशब्दसिद्धिः, तस्य नपुंसके प्रथमान्तम्। आदधानम् इति प्रथमसर्गे २६शे पद्ये द्रष्टव्यम्।

तिङन्तः—डुकृञ् करणे इति तनादिस्थ-कृ-धातोः लिटि, तत्स्थाने जातस्य तिपः स्थाने 'परस्मैपदानां णल० ३।४।८२ इति णलि, अनुबन्धनिवृत्तौ 'लिटि धातोरनभ्यासस्य ६।१।८' इति द्वित्वे,'पूर्वोऽभ्यासः ६।१।४' इति अभ्याससंज्ञायाम् 'उरत् ७।४।६६' इति ऋकारस्य रपरे अकारे अरि 'हलादिः शेषः ७।४।६०' इति आदि शेषयित्वाऽन्यहल्लोपे 'कुहोश्चुः ७।४।६२' इति कस्य चकारे 'अचो ञ्णिति ७।२।११५' इति वृद्धौ, रपरे आरि चकार। अनु इत्युपसर्गयोगे रूपम् अनुचकारेति।

वाच्यपरि०—विभिन्नेन हिमाभेन आदधानेन अभ्रेण लक्ष्मीः अनुचक्रे।

शिक्षा—महतोऽनुकरणम् अल्पीयसा कार्य्यम् इति शिक्षयति पद्यम् ॥८॥

सिंहस्यौद्धत्यं निरूपयति भ्रान्तिमताऽलङ्कारेण—

**[1]गर्जन् हरिः साम्भसि शैल-कुञ्जे, प्रतिध्वनीनात्मकृतान् निशम्य।**
**क्रमं बबन्ध क्रमितुं सकोपः, प्रतर्कयन्नन्य-मृगेन्द्र-नादान् ॥९॥**

---

(१) टिप्पणी—तर्कयन्+अन्य०='ङमो ह्रस्वादचि० ८।३।३२' इति ङमुडागमे नकारद्वयम्।

**अन्वयः**—साम्भसि शैलकुञ्जे गर्जन् हरिः आत्मकृतान् प्रतिध्वनीन् निशम्य, अन्य-मृगेन्द्रनादान् प्रतर्कयन्, सकोपः ( सन् तस्योपरि ) क्रमितु क्रमम् बबन्ध ।

**हिन्दी**—जलवाले लतागृहमे गर्जने वाला सिंह अपनी ही की हुई प्रतिध्वनिको दूसरे सिंहका शब्द समझता हुआ उसपर ( सिंहपर ) छलाग मारना चाहता था ।

**व्याख्या**—साम्भसि सपयसि, शैलकुञ्जे गिरिनिकुञ्जे, गर्जन् शब्दायमानः हरिः सिंहः आत्मकृतान् स्वोच्चरितान् प्रतिध्वनीन् प्रतिशब्दान् निशम्य आकर्ण्य, अन्य-मृगेन्द्रनादान् इतरसिंहशब्दान् प्रतर्कयन् अनुमिन्वन् सकोपः सक्रोधः सन् (तस्योपरि) क्रमितुम् उत्पतितुम्, क्रमम् पादविक्षेप, बबन्ध = चकार । धातूनामनेकार्थत्वादत्र बन्ध धातु करणेऽर्थे ज्ञेयः । 'साम्यादतस्मिस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थित ' इति लक्षणात् सिंहस्य स्वशब्दस्यैवान्यसिंह शब्द-स्वीकृत्या भ्रान्तिमानलङ्कारो ज्ञेयः, तर्कणादनुमित्यलङ्कृतिश्चेति सङ्करः ।

**क्रोश**—निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ।

सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्ष. केसरी हरिः—इत्याद्यमरः ।

**समासः**—अम्भसा सह वर्तते इति विग्रहः । समासस्तु अस्यैव सर्गस्य द्वितीयादिश्लोके सधूम-सातिशयादि-शब्देषु द्रष्टव्यः । आत्मना कृत आत्मकृतः । अन्यश्चासौ मृगेन्द्रः अन्यमृगेन्द्रः, तस्य नादाः अन्यमृगेन्द्रनादा., तान् । कोपेन सह इति सकोपः । अत्रापि बहुव्रीहिः पूर्ववज्ज्ञेयः ।

**कृदन्तः**—निशम्य—शमित्वा इति विग्रहे नि इत्युपसर्गेण सह 'कुगति प्रादयः २।२।१८' इति समासे, 'समासेऽनञ्पूर्वे क्त्वो ल्यप् ७।१।३७' इति क्त्वो ल्यपि अनुबन्धलोपे, इटश्च 'निमित्तापायान्नैमित्तिकस्याप्यपाय.' इति परिभाषया उत 'अकृतव्यूहाः पाणिनीया.' इति इड् भवत्येव न हि । एवं हि सर्वत्र क्त्वो ल्यबादेशे ज्ञेयः । प्रतर्कयन् प्रभृति शतृप्रत्ययस्थलेऽपि तत्तद्गणीयविकरण कृत्वा प्रतर्कयत् गर्जत् इत्यादि शब्दान् संसाध्य पुलिङ्गे सौ नुमादिकार्य्ये प्रतर्कयन् गर्जन् इत्यादि रूपाणि ज्ञेयानि । 'तुमुन्ण्वुलौ कियायाम् क्रियार्थायाम् ३।३।१०' इति क्रम् धातोः तुमुन् प्रत्यये इटि क्रमितुम् । एव हि तुमुन् प्रत्यये सेडनिड्विचारेण गुण कृत्वा रूपं निर्मेयम् ।

तिङन्तः—बन्ध बन्धने इति क्र्यादिस्थ-धातोः लिटि, तत्स्थाने णलि, अनुबन्धलोपे, द्वित्वादिकार्य्ये बबन्ध बबन्धतुः बबन्धुः इत्यादि । संयोगान्तधातुत्वात् लिटः कित्वाभावान्न नकारलोपः ।

वाच्य०—हरिणा गर्जता प्रतर्कयता सकोपेन क्रमो बबन्धे ।

शिक्षा—प्रायः बलिनोऽविवेकिनो भवन्तीति शिक्षयति पद्यम् ॥९॥

सुपूर्णां शरच्छ्रियं दर्शयति कविः—

**[१]अद्दक्षता ऽम्भांसि नवोत्पलानि, रुतानि चा ऽश्रोषत षट्-पदानाम् ।**
**आघ्रायि वान् गन्ध-वहः सु-गन्धस्-तेनाऽरविन्द व्यतिषङ्गवांश् च॥१०॥**

अन्वयः—तेन (रामेण) नवोत्पलानि अम्भांसि अद्दक्षत । षट्पदानां रुतानि अश्रोषत । अरविन्दव्यतिषङ्गवान् वान् सुगन्धः गन्धवह. आघ्रायि च ।

हिन्दी—उन्होंने ( रामने ) नये ( खिले ) कमलवाले जल देखे, भ्रमरोंके गीत सुने और (मन्द मन्द) बहनेवाले कमल-सम्पर्कसे सुगन्धित (शीतल) वायुको सूंघा ।

व्याख्या—तेन रामेण, नवोत्पलानि नूतनपद्मानि, अम्भांसि पयांसि अद्दक्षत ऐक्षिषत । षट्पदानाम् भ्रमराणाम्, रुतानि गुञ्जितानि, अश्रोषत आकर्णिषत । अरविन्दव्यतिषङ्गवान् पद्मसम्पर्की, वान् मन्दं वहन् सुगन्धः शोभनगन्धः गन्धवहः वायुः आघ्रायि = घ्राणः च । कविख्यातिरियं यद् यत्र वायोर्वर्णनं स्यात् तत्र तस्मिन् मन्दत्वस्य सुगन्धत्वस्य शीतलत्वस्य इति त्रयाणामपि तत्त्वानां वर्णनं स्यादेव । तथाऽपि अरविन्दव्यतिषङ्गेन शीतलत्वं, वा-धातुना मन्दत्वं, सुगन्धशब्दस्तु साक्षादुपात्त एवेति त्रैविध्यं वर्णितम् ।

कोशः—अम्भोऽर्णस्तोय-पानीय-नीरक्षीराम्बुशम्बरम् ।
वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् । (मधुव्रतकोषः श्लोके ५)
श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ।
पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः ।
कोलाहलः कलकलः तिरश्चां वाशितं रुतम् । इत्यमरः ।

---

(१) टिप्पणी—षङ्गवान् + च इत्यत्र 'नश्छव्यप्रशान् ८।३।७' इति रुत्वे यथोत्तरमन्यत्कार्यम् । प्रथमसर्गे २० विंशपद्येऽपि शुश्रुवांस्तद्वचनमितिवत् ।

**समासः**—नवानि उत्पलानि येषु तानि नवोत्पलानि । षट् पदानि येषां ते षट्पदाः, तेषाम् । शोभनो गन्धो यस्य स सुगन्धः । अत्र तदेकान्तग्रहणात् 'गन्धस्येदुत्पूतिसुसुरभिम्य ५।४।१३५' इति इत्व न भवति । वायौ तु अन्यप्राह्यो भवति गन्धो न तु तदीय इति रहस्यम् । पृथिवी हि गन्धवती ।

**कृदन्तः**—वान्=वा गति-गन्धनयोः इति अदादिस्थ-वा-धातोः शतरि रूपम् । साधनप्रकारः पूर्वमुक्त' ।

**तद्धित**—अरविन्देन व्यतिषङ्गः अरविन्दव्यतिषङ्गः सोऽस्ति अस्य इति अरविन्दव्यतिषङ्गवान् । अत्र तृतीयातत्पुरुषानन्तर मतुप्, तस्य वकारे च अर० वत् शब्दस्य सौ रूपम् । सिद्धि. पूर्वमुक्ता । 'न कर्मधारयान्मत्वयर्थीय' इत्यस्य नास्ति' अवसरः ।

**तिङन्तः**—घ्रा गन्धोपादाने इति भौवादिक-घ्रा-धातोः कर्मणि लुङि, च्लौ, तस्य 'चिण् भावकर्मणो. ३।१।६६' इति चिणादेशे, 'आतो युक् चिण् कृतोः ७।३।३३' इति युगागमे, अडागमे अघ्रायि । अश्रोषत इति चिण्वदिटो ऽभावे रूपम् ।

**वाच्य०**—स नवोत्पलानि अम्भासि अद्राक्षीत् । रुतानि चाश्रौषीत् । गन्धवहं सुगन्ध वान्तम् अरविन्दव्यतिषङ्गवन्तम् अघ्रासीत् ।

**शिक्षा**—सम्पत्ति-शालिनी शरद् यथा राममानन्दयति तथैव सम्पत्तिशालिनोऽन्यान् स्वसम्पत्तिभिरानन्दयेयुरित्युपदिशति पद्यम् ॥१०॥

रामकुतूहलमाख्याति—

**लतानुपातं कुसुमान्यगृह्लात्, स नद्यवस्कन्दमुपास्पृशच्च ।**
**कुतूहलाच्चारु शिलोपवेशं, काकुत्स्थ ईषत् स्मयमान आस्त ॥११॥**

**अन्वय**—कुतूहलात् ईषत् स्मयमानः काकुत्स्थः लतानुपातं कुसुमानि अगृह्लात्, नद्यवस्कन्दम् उपास्पृशत् । चारुशिलोपवेशम् आस्त च ।

**हिन्दी**—कुतूहलमे पडकर मुस्कराते हुए ककुत्स्थ वशोपत्न्न रामने लताओके पास जाजाकर पुष्पोंको लिया, नदियोके पास जा जाकर आचमन किया और सुन्दर शिलाओ पर बैठ बैठकर विश्राम किया ।

व्याख्या—कुतूहलात् कौतुकात्, ईषत् मन्दं स्मयमानः हसन् (धात्वर्थेनैव ईषदर्थलाभे पुनरुपादानम् रामस्वभावं व्यनक्ति) काकुत्स्थः ककुत्स्थवंशोद्भवः स रामः, लतानुपातम्=लताः लताः अनुपात्य, लता अनुपात्य अनुपात्य वा कुसुमानि पुष्पाणि अगृह्णात् आददात्। नद्यवस्कन्दम्=नदोनंदीः अवस्कन्द्य, नदीः अवस्कन्द्य अवस्कन्द्य वा उपास्पृशत् आचामत्। चारुशिलोपवेशम्=चारुशिलाः चारुशिला उपविश्य, चारुशिला उपविश्य उपविश्य वा आस्त व्यश्राम्यत्।

कोशः—उपस्पर्शस्त्वाचमनम्। स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्।

समासः—लताः लता अनुपात्य अथवा लता अनुपात्य अनुपात्य इति विग्रहे, एवं हि नदीः २ अवस्कन्द्य अथवा नदीः अवस्कन्द्य अवस्कन्द्य, चारवश्च ताः शिलाः इति कर्मधारयं कृत्वा चारुशिलाः चारुशिला उपविश्य अथवा चारुशिला उपविश्य उपविश्य इति लौकिके विग्रहे लता + शस् अनुपाति इत्यलौकिकविग्रहे 'विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ३।४।५६' इति सूत्रेण णमुल् प्रत्यये अनुबन्धलोपे 'अत उपधायाः ७।२।११६' इति वृद्धौ लता + शस् अनुपातम् इति स्थितौ 'उपपदमतिङ् २।२।१९' इति समासे सुपो लुकि 'कृन्मेजन्तः १।१।३९' इति अव्यये लतानुपातम् इत्यादि सर्वाणि रूपाणि साध्यानि। अत्रैव कृदन्तसिद्धिरपि जाता।

तिङन्तः—ग्रह उपादाने इति क्र्यादिस्थ ग्रह् धातोर्लङि 'क्र्यादिभ्यः श्ना ३।१।८१' इति श्नाविकरणे, 'ग्रहिज्याव्ययिव्यधि० ६।१।१६' इति सम्प्रसारणे अडागमे अगृह्णात्। स्पृश संस्पर्शने इति तौदादिक धातोः लङि 'तुदादिभ्यः शः ३।१।७७' इति शप्रत्यये तस्य 'सार्वधातुकमपित् १ २।४' इति ङित्वात् 'क्ङिति च १।१।५' इति गुणनिषेधे उपास्पृशत्। आस उपवेशने इति अदादिस्थ धातोर्लङि 'अदिप्रभृतिभ्यः शपः २।४।७२' इति शपो लुकि, आटि च,'आटश्च ६।१।९०' इति वृद्धौ आस्त।

वाच्य०—तेन काकुत्स्थेन स्मयमानेन कुसुमानि अगृह्यन्त, उपास्पृश्यत, आस्यत।

शिक्षा—पुरत उपस्थितानां साधुपदार्थानां समादरः कर्तव्य इति ॥११॥

प्रातःकालीन-सूर्यरश्मिच्छुरितं प्रवहद् जलं द्रुत-सूर्य्यरश्मित्वेनोत्प्रेक्षते—

**तिग्मांशु-रश्मिच्-छुरितान्य-दूरात्, प्राञ्चि प्रभाते सलिलान्यपश्यत्।**
**गभस्ति-धाराभिरिव द्रुतानि, तेजांसि भानोर् भवि संभृतानि ॥१२॥**

अन्वयः—(सः) प्रभाते अदूरात् प्राञ्चि तिग्मांशुरश्मिच्छुरितानि सलिलानि गभस्तिधाराभि द्रुतानि भुवि सम्भृतानि भानो. तेजांसि इव अपश्यत् ।

हिन्दी —रामने प्रात काल पूर्वदिशामे बहुत नजदीकही सूर्य्यकी किरणोसे रञ्जित बहते जलको देखकर अनुभव किया कि यह जल क्या बह रहा है, यह तो किरणोकी धाराके रूपमे पृथ्वीपर एकत्र हुए सूर्य्यका तेज ही बह रहा है।

व्याख्या—स रामः, प्रभाते प्रात.काले, अदूरात् अन्तिके प्राञ्चि प्राग्दिग्भवानि तिग्मांशुरश्मिच्छुरितानि रविकिरणरञ्जितानि सलिलानि जलानि, गभस्तिधाराभि रश्मिपरम्पराभिः द्रुतानि प्रवहमानानि, भुवि धराया सम्भृतानि सम्मिलितानि भानो. सूर्य्यस्य तेजांसि तेजोभागान् इव अपश्यत् निरैक्षत इति । उत्प्रेक्षालङ्कारः । 'भवेत्सम्भावनोत्प्रेक्षा प्रवृत्तस्य परात्मना' इति लक्षणम् ।

कोश —प्रत्यूषोहर्मुख कल्यमुषःप्रत्यूषसी अपि, प्रभात च ।
किरणोस्रमयूखांशु-गभस्तिघृणिरश्मय. ।
तिग्म तीक्ष्ण खर तद्वत्—इत्यमर. ।

समास —तिग्मा अंशवो यस्य सः तिग्मांशुः, तस्य रश्मयः तिग्मांशुरश्मयः, तैः छुरितानि तिग्मांशुरश्मिच्छुरितानि । न दूरम् अदूरम्, तस्मात् । गभस्तीना धारा गभस्तिधारा , ताभिः ।

तिङन्तः—दृशिर् प्रेक्षणे इति भौवादिक-दृश्धातोर्लङि 'पाघ्राध्मा० ७।३।७८' इति पश्यादेशे रूपम् ।

वाच्य०— तेन प्राञ्चि तिग्मा०तानि सलिलानि द्रुतानि सम्भृतानि तेजांसीव अदृश्यन्त ।

शिक्षा—सङ्गतिप्रभावो दुर्निवार. । यतोऽत्र जगति उत्कृष्ट तत्त्वसम्पर्कात् वस्तुनो महत्त्व वर्द्धते—इति शिक्षयति पद्यम् ॥१२॥

सस्यक्षेत्राणा सौन्दर्य्यं नेत्र मोहयतीति वर्णयति—

**दिग्-व्यापिनीर् लोचन-लोभनीया,**
**मृजाऽन्वयाः स्नेहमिव स्रवन्तीः ।**
**ऋज्वाऽऽयताः शस्य-विशेष-पङ्क्तीस्,**
**तुतोष पश्यन् वितृणाऽन्तरालाः ॥१३॥**

अन्वयः—(सः) दिग्व्यापिनीः लोचनलोभनीया मृजान्वयाः स्नेहम् स्रुवन्तीः इव ऋज्वायताः वितृणान्तरालाः सस्यविशेषपङ्क्तीः पश्यन् तुतोष।

हिन्दी—सभी दिशाओंमें फैली लोचनोंको लुभा लेने वाली, शुद्ध जातिको मानो कि स्नेह बरसा रही हो, ऐसी सीधी खड़ी और बड़ी लम्बी लम्बी बासमती प्रभृति धानोंके पौधोंकी पंक्तियोंको देखकर राम बहुत सन्तुष्ट हुए।

व्याख्या— रामः दिग्व्यापिनीः दिगन्तविस्तृता लोचनलोभनीयाः नयनमोहिनीः मृजान्वयाः शुद्धवंशाः(उच्चजातिकाः), स्नेहं प्रेमाणं स्रुवन्तीः वर्षन्तीः इव=मन्ये ऋज्वायताः सरलदीर्घाः वितृणान्तराला घासशून्याः सस्यविशेष-पङ्क्तीः उत्कृष्ट-जातिक-धान्यसस्य-राजीः पश्यन् निरीक्षमाणः, तुतोष=प्रससाद। अत्रोत्कृष्टजातिकधान्यसस्यस्य स्वभाववर्णनात् स्वभावोक्तिरलङ्कारः। 'स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्'—इतिलक्षणम्। उत्प्रेक्षया संकरश्च।

कोशः—प्रेमा ना प्रियता हार्दम् प्रेम स्नेहोऽथ दोहदम्।
दवीयश्च दविष्ठं च सुदूरं दीर्घमायतम्।
लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी।
ऋजावजिह्मप्रगुणौ—इत्याद्यमरः।

समासः दिशो व्याप्नुवन्ति तच्छीलाः दिग्व्यापिन्यः—इति विग्रहे 'सुप्यजातौ णिनिः० ३।२।७८' इति णिनि प्रत्यये, उपपदसमासे, विभक्तेर्लुकि दिशः शकारस्य 'व्रश्चभ्रस्जसृज ८।२।३६' इति षत्वे, तस्य 'झलां जशोऽन्ते ८।२।३९' इति डत्वे, तस्य 'क्विन्प्रत्ययस्य कुः ८।२।६२' इति गकारे दिग्व्यापिन् शब्दात् 'ऋन्नेभ्यो ङीप् ४।१।५' इति ङीपि, शसि, दिग्व्यापिनीः इति। लोचनानि लोभयन्तीति विग्रहे 'कृत्यल्युटो बहुलम् ३।३।११३' इति बहुलतया 'अर्हे कृत्यतृचश्च ३।३।१६९' विधानात् कर्तरि 'तव्यत्तव्यानीयरः ३।१।९६' इति अनीयरि, उपपदसमासे, विभक्तेर्लुकि, टापि, शसि लोचन-लोभनीयाः इति। मृजः अन्वयो यासां ताः। सस्येषु विशेषाः सस्यविशेषाः—इत्यत्र 'सप्तमी शौण्डैः २।१।४०' इति योगविभागेन समासे, विभक्तेर्लुकि, सस्यविशेषाणां पङ्क्तयः सस्यविशेष-पङ्क्तयः, ताः—इत्यत्र 'षष्ठी २।२।८' इति समास।

कृदन्तः—पश्यन् इति दृश्धातोः शतरि 'पाघ्राध्मा० ७।३।७८' इति पश्यादेशे पश्यत् शब्दस्य सौ रूपम्।

तिङन्तः—तुष प्रीतौ इति दैवादिकात् तुष् धातोर्लिटि द्वित्वादिकृत्ये 'पुगन्तलघूपधस्य च ७।३।८६' इति गुणे रूपम् तुतोष ।

वाच्य०—तेन पश्यता तुतुषे ।

शिक्षा— उन्नताः सर्वावस्थाया सुखदायिनस्तथा सन्तोषदा एवेति शिक्षयति पद्यम् ॥१३॥

कविः भारतीय-ग्रामीणपुस्त्रीजनजीवनं वर्णयितुमुपक्रमतेऽधः—

**वियोग-दुःखानुभवानभिज्ञैः, काले नृपांशं विहितं ददद्भिः ।**
**आहार्य-शोभारहितैरमायै-रैक्षिष्ट पुम्भिः प्रचितान् स गोष्ठान् ॥१४॥**

अन्वयः—स (रामः) वियोगदुःखानुभवानभिज्ञैः विहितं नृपांशं काले ददद्भिः आहार्य्यशोभारहितैः अमायैः पुम्भिः प्रचितान् गोष्ठान् ऐक्षिष्ट ।

हिन्दी—वियोगदुःखके अनुभवको न जाननेवाले, समयपर उचित राजकर देनेवाले केशप्रसाधनादि दिखावटी शोभासे शून्य निश्छली पुरुषोसे भरे गो-निवासोको उन्होने देखा ।

व्याख्या—स रामः, वियोगदुःखानुभवानभिज्ञैः विरहकष्टानुभूतिमजानद्भिः विहितं राजनियोजित नृपांशं राजकरं, काले दानसमये ददद्भिः समर्पयद्भिः, आहार्य्यशोभारहितैः केशप्रसाधनादि-कल्पित-सौन्दर्यशून्यैः, अमायैः कपटरहितैः पुम्भिः पुरुषैः, प्रचितान् सम्भृतान्, गोष्ठान् गोव्रजान्, ऐक्षिष्ट = अद्राक्षीत् । गोपानां स्वभाववर्णनया स्वभावोक्तिरलङ्कारोऽत्रापि लक्षणं पूर्वोक्तमेव ।

कोशः—अर्थागमो भवेदायो भागधेयो बलिः करः—इति हलायुधः ।
कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे—इत्यमरः ।

समासः—वियोगस्य दुःखम् वियोगदुःखम्, तस्य अनुभवः वियोगदुःखानुभवः, तस्य अनभिज्ञाः वियोगदुःखानुभवानभिज्ञाः,तैः । नृपस्य अंशः नृपांशः,तम् । आहार्य्या चासौ शोभेति कर्मधारये 'पुंवत्-कर्मधारयजातीयदेशीयेषु ६।३।४२ इति पुंवद्भावः । तया रहिताः आहार्य्यशोभारहिताः, तैः । अविद्यमाना माया येषां ते अमायाः इति विग्रहे 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोप', इति वार्तिकसाहाय्येन 'अनेकमन्यपदार्थे २।२।२४' इति समासे विभक्तेर्लुकि,

उत्तर-पदलोपे च अमाया-शब्दस्य 'गोस्त्रियोरुपसर्जनस्य १।२।४८' इति ह्रस्वे अमाय-शब्दसिद्धिः, तस्य तृतीयाबहुवचने रूपम् ।

कृदन्तः—विपूर्वकात् डुधाञ् धारणपोषणयोः इति जुहोत्यादिस्थ-धा-धातोः 'निष्ठा ३।२।१०२' इति क्त प्रत्यये 'दधातेर्हिः ६।४।४२' इति ह्यादेशे कर्मणि द्वितीया विहितमिति । दाधातोः जुहोत्यादिस्थस्य 'लटः शतृशानचावप्रथमासमानाधिकरणे ३।२।१२४' इति शतरि सार्वधातुकत्वाद् गणकार्य्ये ददा + अत् इति स्थितौ 'श्नाभ्यस्तयोरातः ६।४।११२' इति आलोपे ददत् शब्दस्य भिसि रूपम् दद‌द्भिः । गोष्ठानित्यत्र 'सुपि स्थः ३।२।५' इति कः 'अम्बाम्बगो० ८।३।९७' इति षः, ततः ष्टुत्वम् ।

तिङन्तः—ईक्ष दर्शनाङ्कनयोः इति भौवादिकाद् ईक्ष् धातोर्लुङि, सिचि, 'आर्धधातुकस्येड्वलादेः ७।२।३५' इति इटि, 'आदेशप्रत्यययोः' इति षत्वे, ष्टुत्वे, आडागमे, 'आटश्च ६।१।९०' इति वृद्धौ ऐक्षिष्ट इति ।

वाच्यपरि०—तेन प्रचिता गोष्ठा ऐक्षिषत इति ।

शिक्षा—ग्रामीणजीवनमेव शुद्धम् सर्वसम्पच्छालि गोसेवि पवित्रमिति शिक्षयति पद्यमिदम् ॥१४॥

सम्प्रति ग्रामीण-स्त्रीजन-स्वभावं वर्णयति—

**स्त्री-भूषणं चेष्टितम-प्रगल्भं, चारूण्य-वक्राण्यपि वीक्षितानि ।**
**ऋजूंश्च विश्वास-कृतः स्वभावान्,गोपाऽङ्गनानां मुमुदे विलोक्य ॥१५॥**

अन्वयः—(सः) गोपाङ्गनानां स्त्रीभूषणम् अप्रगल्भं चेष्टितम्, अवक्राणि अपि चारूणि वीक्षितानि, विश्वासकृतः ऋजून् स्वभावान् विलोक्य मुमुदे ।

हिन्दी - गोप-स्त्रियोंके अलङ्कारभूत गम्भीर शरीरचेष्टा-व्यापार, सीधी सुन्दर दृष्टि, विश्वासकारी सीधा स्वभाव आदि देखकर रामचन्द्र बड़े प्रसन्न हुए ।

व्याख्या—स रामः गोपाङ्गनानाम् = आभीरपत्नीनाम् स्त्रीभूषणम् महिलालङ्कारभूतम् अप्रगल्भम् अधृष्टम् चेष्टितं गमनागमनादिव्यापारम्, अवक्राणि अकुटिलानि ( कटाक्षादिरहितानीति यावत् ) चारूणि सुमनोहराणि वीक्षितानि अवलोकनानि, विश्वासकृतः = विश्वास जनकान् ऋजून् सरलान् स्वभावान् स्वाभिप्रायान् शीलानीति यावत् विलोक्य = वीक्ष्य, मुमुदे = सन्तुतोष । अत्रापि स एव स्वभावोक्तिरलङ्कारः ।

कोशः--गोपे गोपालगोसंख्यगोधुगाभीरवल्लवाः ।

सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् । ऋजुकोशः १३ पद्ये ।

समासः--गोपानाम् अङ्गनाः गोपाङ्गनाः, तासाम् । स्त्रीणाम् भूषणम् स्त्रीभूषणम् । न प्रगल्भम् अप्रगल्भम् । स्वस्य भावा स्वभावाः, तान् ।

तिङन्त —मुद हर्षे इति भौवादिक-मुद्-धातोर्लिटि, तत्स्थाने एकारे, द्वित्वेऽभ्यास-कार्ये 'असंयोगाल्लट् कित् १।२।५' इति लिट. कित्वाद् गुणाभावे मुमुदे ।

वाच्यपरि० -तेन मुमुदे ।

शिक्षा--अप्रगल्भादीनि स्त्रीचेष्टतादीनि स्वाभाविकानि सदा स्त्रीभिराश्रयितव्यानि इत्येव शिक्षयति पद्यम् ॥१५॥

साम्प्रतं गोपाङ्गनानां प्रचलित-दधिमन्थनकर्म नृत्यत्वेन वर्णयन् रामानन्दने तस्य हेतुत्वं समर्थयति--

**विवृत्त-पार्श्वं रुचिराङ्गहारं समुद्वहच्-चारु-नितम्ब-रम्यम् ।**
**आमन्द्रमन्थध्वनिदत्ततालं गोपाङ्गना-नृत्यमनन्दयत् तम् ॥१६॥**

अन्वयः—विवृतपार्श्वं रुचिराङ्गहारं समुद्वहच्चारुनितम्बरम्यम् आमन्द्रमन्थध्वनि-दत्ततालं गोपाङ्गनानृत्यं तम् ( रामम् ) अनन्दयत् ।

हिन्दी—दहीके मथनेके समय दोनो बगलोंके घूमनेसे सभी अङ्गोंका हिलना सुन्दर लगता है । जिसमे मनोहर कटि भागका हिलना तो और भी देखनेमे अच्छा लगता है । जहाँ गम्भीर दधिमन्थनघोष ताल देनेका काम करता है, ऐसे गोपियोके नृत्यने रामचन्द्रको आनन्दित किया ।

व्याख्या—विवृत्तपार्श्वम् तिर्यग्वलितोभयपार्श्वभागम्, रुचिराङ्गहारम् सुन्दरसर्वगात्रविक्षेपम्, समुद्वहच्चारुनितम्बरम्यम् विचलद्रुचिरकटिपश्चाद्भागकमनीयम्, आमन्द्रमन्थध्वनिदत्ततालम् ईषद्गम्भीरमन्थनघोष-सम्पादिततालक्रियम्, गोपाङ्गनानृत्यम् आभीरमहिलालास्यम्, तम् रामम् अनन्दयत् अहर्षयत् । हर्षहेतुना वाक्यगतत्वेनोपादानात् काव्यलिङ्गालङ्कारः, स्वभावोक्त्या अनुप्रासेन च सह तत्सत्त्वात् सङ्करालङ्कारः ।

कोशः—अङ्गहारोऽङ्गविक्षेपः । तालः कालक्रियामानम् ।

ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने—इत्यमरः ।

**समासः**— विवृत्ते पार्श्वे यस्मिन् तत् विवृत्तपार्श्वम्। रुचिरः अङ्गहारः यस्मिन् तद् रुचिराङ्गहारम्। चारुश्चासौ नितम्बः चारुनितम्बः, समुद्वहन् चासौ चारुनितम्बः, तेन रम्यम् = समुद्वहच्चारुनितम्बरम्यम्। कर्मधारयगर्भिततत्पुरुषसमासः। आ (ईषद्) मन्द्रः आमन्द्रः, 'कुगतिप्रादयः २।२।१८' इति समासः। मन्थस्य ध्वनिः मन्थध्वनिः। आमन्द्रश्चासौ मन्थध्वनिः आमन्द्रमन्थध्वनि, तेन दत्तः तालो यस्मिन् तत् — आमन्द्र मन्थध्वनिदत्ततालम् इति। तत्पुरुषकर्मधारयगर्भितत्रिपद बहुव्रीहिः। गोपाङ्गनानां नृत्यम् = गोपाङ्गनानृत्यम्।

**तिङन्त**—टुणदि समृद्धौ इति भौवादिक-नन्द धातोः 'हेतुमति च ३।१।२६' इति णिचि नन्दि इति णिजन्ताल्लङि कर्तरि शप् ३।१ ६८' इति शपि 'सार्वधातुकार्द्धधातुकयोः ७ ३।८४' इति गुणे, अडागमे अनन्दयत् इति।

**वाच्य०**—विवृत्तपार्श्वेन रुचिराङ्गहारेण समुद्वहच्चारुनितम्बरम्येण आमन्द्रमन्थध्वनिदत्ततालेन गोपाङ्गनानृत्येन सोऽनन्द्यत।

**शिक्षा**—गृहकार्य्येण अङ्गव्यायामो भवति नारीणामिति गृहकृत्य स्वयं स्वहस्तेनैव नारीभि कार्य्यमिति शिक्षयति पद्यम् ॥१६॥

मृगस्वभावं विवृणोति—

**विचित्रमुच्चैः प्लवमानमारात्, कुतूहलं त्रस्नु ततान तस्य।**
**मेघाऽत्ययोपात्त-वनोपशोभं, कदम्बकं वातमजं मृगाणाम् ॥१७॥**

**अन्वयः**—विचित्रम् आरात् उच्चैः प्लवमानम् त्रस्नु मेघात्ययोपात्तवनोपशोभम् वातमज मृगाणाम् कदम्बकम् तस्य कुतूहलम् ततान।

**हिन्दी**—चित्र विचित्र, दूरसे ही ऊपर उछलनेवाला, डरपोक, मेघोंके हट जानेसे वन और उपशोभाको प्राप्त हुआ वायुका सामना करने वाला मृगोंका झुण्ड रामचन्द्रके कौतूहलको बढा रहा था।

**व्याख्या**—विचित्र विलक्षणम्, आरात् दूरात्, उच्चैः उन्नतं प्लवमानम् प्लुतिमत्, त्रस्नु भीरु, मेघात्ययोपात्तवनोपशोभम् शारदागमाधिगत काननसौन्दर्य्यम् वातमजम् वातानुगामि मृगाणां कदम्बकम् सङ्घम्, तस्य रामस्य कुतूहलं कौतूक ततान जनयामास। अहो, कीदृग् मृगयूथमिद क्रीडति शोभनं च भातीति कौतूहलं वितस्तार तस्येति। अत्रापि स्वभावोक्तिरेवालङ्कारः। अनुप्रासस्तु सर्वत्र।

कोशः—स्त्रिया तु संहतिर्वृन्दं निकुरम्ब कदम्बकम् ।
आराद् दूरसमीपयोः—इत्यमरः ।

समासः—मेघानाम् अत्ययः मेघात्ययः, तेन उपात्ते मेघात्ययोपात्ते । वनं च उपशोभा च वनोपशोभे । मेघात्ययोपात्ते वनोपशोभे येन तत् —मेघात्ययोपात्त-वनोपशोभम्—इति ।

कृदन्तसिद्धिः—प्लवते इति प्लवमानम्—प्लुङ् गतौ इति भौवादिक-प्लुधातोः 'लटः शतृशानचा० ३।२।१२४' इति शानचि, शपि, 'सार्वधातु० ७।३।८४' इति गुणे अवादेशे 'आने मुक् ७।२।८२' इति मुगागमे रूपम् । त्रस्यति तच्छीलम् त्रस्नु इति विग्रहे 'त्रसिगृधि० ३।२।१४०'इति क्नौ रूपम् । वातमजतीति विग्रहे कर्मपूर्वकात् अज गतौ इति भ्वादिस्थाद् अज्-धातो 'वातशुनीतिल० ३।२।१८' इति वार्तिकेन खशि 'उपपदमतिङ् २।२।१९' इति समासे, विभक्ते-र्लुकि 'अरुर्द्विषदजन्तस्य मुम् ६।३।६७' इति मुमागमे बातमजम् ।

तिङन्तसिद्धि.—तनु विस्तारे इति तनादिस्थ तन्-धातोर्लिटि, तिपि, णलि, द्वित्वादिकार्ये, 'अत उपधायाः ७।२।११६' इति वृद्धौ ततान ।

वाच्य०—विचित्रेण प्लवमानेन त्रस्नुना मेघात्ययोपात्तवनोपशोभेन कदम्बकेन कुतूहल तेने ।

शिक्षा——सर्वं वस्तु स्वभावानुसारिचेष्टया श्लाघ्यतरं भवतीति ॥१७॥

हसपङ्क्ति वर्णयति—

**सिताऽरविन्द-प्रचयेषु लीनाः, संसक्त-फेनेषु च सैकतेषु ।**
**कुन्दाऽवदाताः कलहस-माला., प्रतीयिरे श्रोत्रऽसुखैर् निनादैः॥१८॥**

अन्वयः—सितारविन्द-प्रचयेषु ससक्तफेनेषु सैकतेषु च लीनाः कुन्दावदाताः कलहसमाला. श्रोत्रसुखैः निनादैः प्रतीयिरे (रामेणेति शेषः) ।

हिन्दी—(रामने) श्वेतकमलोकी पङ्क्तियों तथा फेनोसे ढके किनारोमे छिपे कुन्दपुष्पके समान श्वेत कलहंसोको उनके कर्णप्रिय शब्दोसे पहचान लिया ।

व्याख्या—सितारविन्द-प्रचयेषु पुण्डरीकसमूहेषु, संसक्तफेनेषु आसक्तडिण्डो-
... लीना अन्तरिताः कुन्दावदाताः माघ्यकुसुमश्वेताः कलहंसमाला. कादम्बपङ्क्तयः, श्रोत्रसुखैः कर्णप्रियै. निनादैः घोषैः प्रतीयिरे

विजज्ञिरे । इह हंसानां श्वेत-गुणविलीनानां प्रकृतस्यान्यतादात्म्यात् सामान्या-लङ्कारविषयाणां निनादश्रवणाभिव्यक्त्या निश्चयान्तसन्देहसङ्करालङ्कारः ।

कोशः—पुण्डरीकं सिताम्भोजम् । डिण्डीरोऽब्धिकफः फेनः ।
कादम्बः कलहंसः स्यात्—इत्यमरः ।
कुन्दो माघ्येऽस्त्री मुकुन्दभ्रमिनिघ्यन्तरेषु ना (इति मेदिनी) ।

समासः—सितानि च तानि अरविन्दानि सितारविन्दानि, तेषां प्रचयाः, तेषु । संसक्ताः फेनाः येषु तानि संसक्तफेनानि, तेषु । कुन्दा इव अवदाताः कुन्दा-वदाताः । 'उपमानानि सामान्यवचनैः २।१।५५' इति समासे, 'सुपो धातुप्रा-तिपदिकयोः २।४।७१' इति सुपो लुकि, पुनः जसि रूपम् । श्रोत्रयोः सुखाः श्रोत्र-सुखाः, तैः । कलहंसानां मालाः कलहंसमालाः ।

कृदन्तः—'नौ गदनदपठस्वनः ३।३।६४'इति णः-निनादैः ।'एरच् ३।३।५६' इत्यच्–प्रचयेषु । 'ल्वादिभ्यः ८।२।४४ निष्ठानकारे-लीनाः ।

तिङन्तः—प्रतिपूर्वाद् इण् गतौ इति अदादिस्थाद्-इ-धातोः कर्मणि लिटि, झ प्रत्यये, 'लिटस्तझयोरेशिरेच् ३।४।८१' इति इरेजादेशे 'इणो यण् ६।४।८१' इति प्राप्तस्य यणो 'द्विर्वचनेऽचि १।१।५९' इति निषेधे, द्वित्वे, 'इणो यण् ६।४। ८१' इति यणि 'दीर्घं इणः किति ७।४।६९' इति अभ्यासदीर्घे ईयिरे इति । उप-सर्गेण सह सवर्णदीर्घे प्रतीयिरे ।

तद्धितः—सिकताः यस्मिन् सन्तीति विग्रहे 'देशे लुबिलचौ च ५।२।१०५' इत्यणि, सैकतेषु ।

वाच्य०—(रामः) लीनाः कलहंसमालाः प्रतीयाय ।

शिक्षा—विवेचकाः केनापि हेतुना अप्रतीतेष्वपि स्वबोद्धव्यं बुध्यन्त एवेति शिक्षास्य पद्यस्य ॥१८॥

वंशस्थच्छन्दसा शरद्वर्णनमुपसंहरति—

**न तज् जलं, यन् न सु-चारु पङ्कजं,**
**न पङ्कजं तद्, यद-लीन-षट्-पदम् ।**
**न षट्-पदोऽसौ, न जुगुञ्ज यः कलं,**
**न गुञ्जितं तन्, न जहार यन् मनः ॥१९॥**

अन्वयः—(किं बहुनोक्तेन) न तत् जलम् यत् सुचारुपङ्कज न (बभूव)। तत् पङ्कज न यत् अलीनषट्पदम् (बभूव)। असौ षट्पदः न यः कल न जुगुञ्ज। तत् गुञ्जित न यत् मन न जहार।

हिन्दी—वह जल नही था, जहा सुन्दर कमल न हो, वह कमल न था, जिसपर भ्रमर न बैठा हो, वह भ्रमर नही था, जो मधुर गुञ्जन न करता हो और वह गुञ्जन नही था, जो मन को न हर ले।

व्याख्या—तत् तथाभूतम् जलम्=पय. न (बभूव) यत् सुचारुपङ्कजं सुन्दरपद्म न (बभूव), तत् तथाभूत पङ्कज पद्म न यद् अलीनषट्पदम् असक्त-भ्रमरं (बभूव), असौ तादृक् षट्पद भ्रमर न यः कल मधुरं न जुगुञ्ज=न चुकूज। तत् तादृशम् गुञ्जितम् अलिकूजन न यत् मन चेतः न जहार=वशीचकार। अत्र 'जतौ तु वशस्थमुदीरित जरौ' इति वशस्थं छन्द। अत्रैकावली अलकारः। तल्लक्षण—'स्थाप्यतेऽपोह्यते वापि यथापूर्वं पर परम्। विशेषणतया वस्तु यत्र सैकावली द्विधा'।

कोशः—आपः स्त्री भूम्नि वार्वारि सलिल कमलं जलम्।
पयः कीलालममृत जीवन भुवन वनम्।
चित्त तु चेतो हृदय स्वान्त हृन्मानस मन —इत्याद्यमरः।

समासः—अधिक चारु सुचारु 'कुगतिप्रादयः २।२।१८' इति समासः। सुचारूणि पङ्कजानि यस्मिन् तत् सुचारुपङ्कजम्। न लीना. अलीना.—इत्यत्र 'नञ् २।२।६' इति समासे, 'नलोपो नञः ६।३।७३' इति न-लोपे अलीनशब्द-सिद्धिः। अलीना षट्पदाः यस्मिन् तत् अलीनषट्पदम्।

तिङन्तः—गुजि अव्यक्ते शब्दे इति भौवादिक-गुञ्ज्-धातोः कृतनुमः लिटि, द्वित्वादिकार्ये, जुगुञ्जेति। एव हृञ् हरणे इति भौवादिकस्य धातोरपि लिटि द्वित्वादिकार्ये 'अचो ञ्णिति ७।२।११५' वृद्धिविशेषः—जहारेति।

वाच्य०—प्रथमान्त सर्वत्र तृतीयान्तम्। जुगुञ्जे, जह्रे इति च क्रिया कर्मणि।

शिक्षा—'श्रेयसि केन तृप्यते' इति उत्तरोत्तर श्रेयः सर्वैराकाङ्क्ष्यम् इति ॥१९॥

इदानीं शरद्वर्णनं समाप्य जगदर्च्यस्य रामस्य यायावरैरर्चनं प्रस्तौति —

**तं यायजूकाः सह भिक्षु-मुख्यैस् तपः-कृशाः शान्त्युदकुम्भ-हस्ताः।**
**यायावराः पुष्प-फलेन चाऽन्ये, प्राणर्चुरर्च्या जगदर्चनीयम्॥ २०॥**

अन्वयः—अर्च्याः शान्त्युदकुम्भहस्ताः तपःकृशाः यायजूकाः भिक्षुमुख्यैः सह अन्ये यायावराश्च पुष्पफलेन जगदर्चनीयं तं (रामम्) प्राणर्चुः।

हिन्दी - पूजनीय, हाथमें शान्ति-कलश लिये हुए तपस्यासे क्षीणशरीरवाले, यज्ञशील ऋषियोंने, मुख्य संन्यासियों, परिव्राजकोंके साथ यायावरों तथा अन्य लोगोंने भी पुष्प-फलों से जगत्के पूज्य उस रामचन्द्रकी पूजा की।

व्याख्या—अर्च्याः पूजनीयाः, शान्त्युदकुम्भहस्ताः शान्ति-सलिलकलसकराः, तपःकृशाः उपवासादितपस्याक्षीणकायाः, यायजूकाः भूयो भूयो यजनशीलाः, भिक्षुमुख्यैः परिव्राजकवर्य्यैः सह सार्धम्, अन्ये अपरे च यायावराः एकत्राऽनियत-निलयाः, पुष्पफलेन कुसुमप्रसवेन, जगदर्चनीयं लोकपूज्यं तं रामम् प्राणर्चुः संपूजयामासुः। ये हि स्वयं पूज्यास्तेऽन्यं कथं पूजयेयुरिति विरोधः। जगदर्चनीय-त्वात् परिहार इति विरोधाभासालङ्कारः।

कोशः—भिक्षुः परिव्राट् कर्मन्दी।

इज्याशीलो यायजूको यज्वा च विधिनेष्टवान्—इत्यमरः।

समासः—भिक्षुषु मुख्याः भिक्षुमुख्याः, तैः। उदकस्य कुम्भाः उदकुम्भाः। 'एकहलादौ पूरयितव्येऽन्यतरस्याम् ६।३।५९' इति उदकस्य उदादेशे, शान्तये उदकुम्भाः शान्त्युदकुम्भाः। योगविभागेन चतुर्थीतत्पुरुषे शान्त्युदकुम्भाः हस्तेषु येषां ते इति बहुव्रीहौ 'सप्तमीविशेषणे बहुव्रीहौ २।२।३५' इति प्राप्तं पूर्वनिपातं 'वाहिताग्न्यादिषु २।२।३७' इति निषिध्यते। अथवा 'प्रहरणार्थेभ्यश्च परे निष्ठा-सप्तम्यौ २।२।३६' इति वार्तिकबलादत्र हस्तस्य परनिपातः। प्रहरणत्वं तु उद-कुम्भस्य विघ्नप्रहारकतया ज्ञेयम्। पुष्पाणि च फलानि च पुष्पफलम्—'चार्थे द्वन्द्वः २।२।२९' इति समासे, 'जातिरप्राणिनाम् २।४।६' इत्येकवद्भावे ज्ञेयम्।

कृदन्तः—यायज्यन्ते इति यायजूकाः—यायज्य-धातोः 'यजजपदशां यङः ३।२।१६६' इति ऊक प्रत्यये 'अतो लोपः ६।४।४८' इति अतो लोपे 'यस्य हलः ६।४।४९' इति यङो लोपे यायजूकस्य कृदन्ततया प्रातिपदिकत्वाद् जसि रूपम्।

यायायन्ते इति यायावराः—यङन्ताद् या-धातोः 'यश्च यङः ३।२।१७६' इति वरचि, अतो लोपे 'लोपो व्योर्वलि ६।१।६६' इति यलोपे यायावरः। अर्चितुं योग्याः इत्यर्थे तौदादिक-ऋच् धातोः 'अर्हे कृत्यतृचश्च ३।३।१६९ इति अर्हेऽर्थे 'ऋहलोर्ण्यत् ३।१।१२४' इति ण्यति, जसि, अर्च्याः।'यजयाच०७।३।६६' इति कुत्वाभावः।

तिङन्तः—प्रपूर्वकाद् अच्-धातोः लिटि, उसि, द्वित्वे, अभ्यासकार्य्ये, 'अत आदेः ७।४।७०' इति अभ्यासदीर्घे, 'तस्मान्नुड् द्विहलः ७।४।७१' इति नुडागमे सवर्णदीर्घे प्राणर्चुः इति।

वाच्यपरि०—अर्च्यैः तपःकृशैः शान्त्युदकुम्भहस्तैः अन्यैः यायावरैः जगदर्चनीयः स प्राणर्चे।

शिक्षा—योग्या एव योग्यमर्चयन्ति॥२०॥

विश्वामित्रतो जयाविजयाविद्याप्राप्तिं रामस्याख्याति—

**विद्यामथैनं विजयां जयां च, रक्षोगणं क्षिप्नुमविक्षताऽऽत्मा।**
**अध्यापिपद् गाधिसुतो यथावन्, निघातयिष्यन् युधि यातुधानान् ॥२१॥**

अन्वयः—युधि यातुधानान् निघातयिष्यन् अविक्षतात्मा गाधिसुतः एनम् रक्षोगण क्षिप्नुम् जयां विजयां च विद्यां यथावद् अध्यापिपत्।

हिन्दी—संग्राममें राक्षसोंका विनाश करने वाले शान्तचित्तवृत्तिपरायण विश्वामित्रने रामको राक्षस-समूहका संहार कर देने वाली जया विजया नामकी विद्या दी।

व्याख्या—युधि संग्रामे, यातुधानान् राक्षसान् निघातयिष्यन् विनाशयिष्यन्, अविक्षतात्मा रागाद्यनुपहतचित्तवृत्तिः गाधिसुतः विश्वामित्रः, एनम् रामम्, रक्षोगणं राक्षससङ्घं, क्षिप्नुम् निराकरिष्णुम्, जयां विजयां नाम्नीं विद्याम् मन्त्रविशेषम् यथावत् यथाविधि अध्यापिपत् अजिग्रहत्। विद्याध्यापने यातुधान-निघातो हेतुरिति काव्यलिङ्गम्।

कोशः - निराकरिष्णुः क्षिप्नुः स्यात्।

यातुधानः पुण्यजनो नैरृतो यातुरक्षसी—इत्यमरः।

समासः—रक्षसां गणः रक्षोगणः, तम्। क्षिप्नुम् इत्युयोगे 'नलोकाव्यय० २।३।६९' इति षष्ठीनिषेधः। अविक्षतः आत्मा यस्य सः अविक्षतात्मा।

कृदन्तः—क्षिपति तच्छीलेति विग्रहे क्षिप प्रेरणे इति तौदादिक धातोः 'त्रसिगृधि० ३।२।१४०' इति क्नु प्रत्यये कित्वात् 'पुगन्तलघूपधस्य० ७।३।८६' इति प्राप्तगुणस्य 'क्ङिति च १।१।५' इति निषेधे क्षिप्नुः, स्त्रीत्वेऽपि 'वरुसंयोगोपधान्न ४।१।४४' इति ङीपोऽभावे क्षिप्नुरेव, ताम्। विद्याविशेषणत्वात् स्त्रीत्वम्। नितरां घातयिष्यतीति निघातयिष्यन् इति विग्रहे 'घाति' इतिण्यन्तात् 'लृटः सद्वा ३।३।१४' इति शतरि 'स्यतासी लृलुटोः ३।१।३३' इति स्य विकरणे, 'अतो गुणे ६।१।९७' इति पररूपे घातयिष्यत् इत्यस्य सौ 'उगिदचाम्० ७।१।७०' इति नुमि, सुलोपे, संयोगान्तलोपे रूपम्। अधिपूर्वकात् इङ् अध्ययने इति अदादिस्थ इ-धातोः 'हेतुमति च ३।१।२६' इति णिचि, गाङ् इत्यादेशस्य पाक्षिकतया 'क्रीङ्जीनां णौ ६।१।४८' इति धातोरात्वे 'अर्तिह्रीव्ली० ७।३।३६' इति पुगागमे 'आपि' इत्यस्मात् लुङि, तिपि, च्लौ, तस्य 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३।१।४८' इति चङि आपि + अत् इति जाते 'द्विर्वचनेऽचि १।१।५९' णिलोपादिकार्य्यं निषिध्य द्वित्वविधाने 'चङि ६।१।११' इति 'पि' मात्रस्य द्वित्वे, ततो णेरनिटि ६।४।५१ इति णिलोपे, आडागमे, वृद्धौ, उपसर्गस्य यणि अध्यापिपत् इति साधु।

वाच्य०—अविक्षतात्मना गाधिसुतेन निघातयिष्यता क्षिप्नुं विद्याम् एषः अध्यापि।

शिक्षा—महतामाज्ञापालनान्महानेव लाभ इति शिक्षयति पद्यम्॥ २१॥

सम्प्रति तस्मै विश्वामित्रप्रदत्तं ह्यस्त्रान्तरमाख्याति—

**आयोधने स्थायुकमस्त्रजात-ममोघमभ्यर्ण-महाऽऽहवाय।**
**ददौ वधाय क्षणदाचराणां तस्मै मुनिः श्रेयसि जागरूकः॥२२॥**

अन्वयः—श्रेयसि जागरूकः मुनिः अभ्यर्णमहाहवाय तस्मै ( रामाय ) आयोधने स्थायुकम् अमोघम् अस्त्रजातम् क्षणदाचराणां वधाय ददौ।

हिन्दी—जगत्कल्याण करनेमें उद्यत मुनि विश्वामित्रने रामको संग्राममें दृढ़ स्थायी तथा अमोघ अस्त्रोंका समूह राक्षसोंका वध करनेके लिये दिया।

व्याख्या—श्रेयसि जगत्कल्याणे, जागरूकः उद्यतः मुनिः विश्वामित्रः, अभ्यर्णमहाहवाय निकटघोरयुद्धाय तस्मै पूर्वोक्ताय ( रामायेत्यर्थः ) आयोधने

युधि स्थायुकं स्थितिशीलम्, अमोघम् अवन्ध्यम्, अस्त्रजातम् अस्त्रसमूहम्, क्षणदाचराणा रात्रिचराणा, वधाय विघाताय, ददौ विततार। स एवालङ्कारोऽ-त्रापि।

कोश: - युद्धमायोधनं जन्य प्रधन प्रविदारणम्।
उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यमितोऽव्ययम्।
रात्रिञ्चरो रात्रिचर: कर्बुरो निकषात्मज: - इत्यमर:।

समास – अस्त्राणा जातम् अस्त्रजातम्। न मोघम् अमोघम्। अभ्यर्ण: महाहवो यस्य स: अभ्यर्णमहाहव. तस्मै। महान् चासौ आहव: इति पूर्वं कर्म-धारयसमासप्रकारस्तु बहुत्र पद्ये दर्शित: ( १।४ पद्ये १।५ पद्ये )।

कृदन्त-सिद्धि:—जागृ निद्राक्षये इति अदादिस्थ-जागृधातो: 'जागुरूक: ३।२।१६५' इति जागर्ते: ऊक प्रत्यये गुणे रूपम्। तिष्ठति तच्छीलम् अथवा स्थातुं शीलम् अस्येत्यर्थे स्था धातो' 'लषपत० ३।२।१५४' इति उकञ् प्रत्यये, 'आतो युक् चिण्कृतोः ७।३।३३' इति युगागमे, नपुसके कर्मणि रूपम्। अभि-पूर्वाद् अर्द गतौ याचने इति भ्वादिस्थात् अर्द-धातो: क्त प्रत्यये, 'अभेश्चाविदूर्ये ७।२।२५' इतीट् प्रतिषेधे, 'रदाभ्या निष्ठातो न: पूर्वस्य च द ८।२।४२' इति नत्वे, 'हलो यमा यमि लोप ८।४।६४' इति म-लोपे, णत्वे, अभ्यर्ण: पुलिङ्ग:। आहूयन्ते युद्धायास्मिन् इति आहव। आङ् पूर्वात् ह्वेञ् स्पर्द्धायाम् इति ह्वेञ: भौवादिकात् कृताकाराद् 'आङि युद्धे ३।३।७३' इति अप् प्रत्यये, सम्प्रसारणे पूर्वरूपे, गुणे, आहव। क्षणदाया चरन्ति इति सप्तम्यन्ते उपपदे 'चरेष्ट: ३।२।१६' इति टप्रत्यये. पूर्ववत् समासादिकृत्ये, क्षणदाचरा:, तेषाम्। 'हनश्च वध: ३।३।७६' इति भावे अप् प्रत्यये हनश्च वधादेशे च वध:, तस्मै।

तिङन्त:—डुदाञ् दाने इति जुहोत्यादिस्थ-दाधातोर्लिटि, तिपि, णलि, द्वित्वादिकार्ये, 'आत औ णल: ७।१।३४' इति णल: औकारे, वृद्धौ, ददौ।

वाच्य०जागरूकेण मुनिना अस्त्रजातं ददे।

शिक्षा— महात्मानोऽनुकम्पितान् सर्वथाऽनुगृह्णन्ति। उक्तं च भगवताऽपि —
अनन्याश्चिन्तयन्तो मां ये जना: पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥ २२॥

पूर्वं ताडकावधमेवाख्याति—

> [1]तं विप्र-दर्शं कृत-घात-यत्ना,
> यान्त वने रात्रि-चरी डुढौके।
> जिघांसु-वेद धृत-भासुराऽस्त्रस्,
> तां ताडकाऽऽख्यां निजघान रामः ॥ २३ ॥

**अन्वयः**—विप्रदर्शं कृतघातयत्ना रात्रिचरी वने यान्त त ( रामम् ) डुढौके। जिघासुवेद धृतभासुरास्त्र रामः ताडकाख्या ता निजधान।

**हिन्दी**—ब्राह्मणको देखतेही मार डालनेका प्रयत्न करने वाली राक्षसी वनमे जाने वाले रामके पास आई। जिघासु जानकर ही दीप्त अस्त्र धारण करने वाले रामने उस ताडका नामकी राक्षसीको मार डाला।

**व्याख्या**—विप्रदर्शम्—य य विप्र पश्यति, त दृष्ट्वा कृतघातयत्ना विहित-वधोपक्रमा, रात्रिचरी निशाचरी, वनेऽरण्ये यान्त गच्छन्त त रामम् पूर्वोक्तम् डुढौके—जगाम। जिघासुवेदम्=य य जिघासुं वेत्ति, त विदित्वा धृतभासुरास्त्रः गृहीतदीप्तास्त्रः रामः ताडकाख्या ता राक्षसी जघान जिहिंस। उभयत्रापि हेतो-रुल्लेखात् काव्यलिङ्गम्।

**समासः**—घातस्य यत्नः घातयत्नः। कृतः घातयत्नः यया सा तत्पुरुष-पूर्वो बहुव्रीहिः। धृतम् भासुरम् अस्त्रम् येन स धृतभासुरास्त्रः। त्रिपदबहु०।

**कृदन्तः**—य य विप्र पश्यति त दृष्ट्वा इति विप्रदर्शम्। विप्र+अम् पूर्वकात् दृश्धातोः, एवम् य यं जिघासु वेत्ति तं विदित्वा इति जिघासुवेदम्। इहापि जिघासु+अम् पूर्वकात् विद् धातो 'कर्मणि दृशिविदोः साकल्ये ३।४।२९' इति णमुल् प्रत्यये, 'अमैवाव्ययेन २।२।२०' इति समासे सुपो लुकि, 'पुगन्तल-घूपधस्य च ७।३।८६' इति गुणे, 'कृन्मेजन्तः १।१।३९' इति उभयत्र अव्ययत्वम्।

**तिङन्तः**—ढौकृ गतौ इति भौवादिक ढौक्-धातोः लिटि, एशि, धातोर्द्वित्वे अभ्यासकार्ये, 'ह्रस्वः ७।४।५९' इति ह्रस्वे कर्तव्ये 'एच इग्घ्रस्वादेशे १।१।४८'

---

(१) **टिप्पणी**—यहां दोनोका जोड तोड़ खूब मिला है। वह ब्राह्मण देख देखकर मारती थी, तो यह हिंसक जानजान कर मारते थे। आततायीका नाश करना राजाओंका धर्म है और यही गुरुकी आज्ञा भी है।

इति उकारे, 'अभ्यासे चर्च ८।४।५४' इति ढस्य डकारे डुढौके। हन् धातोः लिटि, णलि, द्वित्वेऽभ्यासकार्ये, 'अभ्यासाच्च ७।३।५५' इति हस्य घे, 'अत उपधायाः ७।२।११६' इति वृद्धौ जघानेति।

वाच्य०—कृतघातयत्नया रात्रिचर्या यान् स डुढौके, धृतमासुरास्त्रेण रामेण सा ताडकाख्या जघ्ने।

शिक्षा—यत्र दुष्टः स्वदुष्टतया चलति, तत्रैव साधुः साधुतया व्यवहरति। सर्वोऽपि स्वानुरूपकर्तव्यपालकः स्यादिति हि शिक्षयति पद्यम्॥ २३॥

सम्प्रति दूरत एव दृष्टिपथं प्राप्तं विश्वामित्राश्रमं द्वाभ्यां पद्याभ्यां वर्णयति—

**अथाऽऽलुलोके हुत-धूम-केतु-शिखाऽञ्जन-स्निग्ध-समृद्ध-शाखम्।**
**तपो-वनं प्राध्ययनाऽभिभूत-समुच्चरच्-चारु-पतत्रि-शिञ्जम्॥२४॥**

अन्वयः—अथ ( सर्वैः ) हुतधूमकेतु-शिखाञ्जनस्निग्धसमृद्धशाखम् प्राध्ययनाभिभूतसमुच्चरच्चारु-पतत्रिशिञ्जम् तपोवनम् आलुलोके।

हिन्दी—हवन किये गये अग्निकी शिखाओंके अञ्जनोंसे चिकनी और समृद्ध हैं पेड़ोंकी शाखायें जिसमें, तथा ( छात्रोंके ) जोरोंसे अध्ययनके कारण परास्त हैं निकली हुई मनोहर पक्षियोंकी कूज जिस तपोवनमें, वैसा तपोवन ( उन्हें ) दीख पड़ा।

व्याख्या—अथ ताडकावधानन्तरम्, ( तैर्विश्वामित्रादिभिः ) हुतधूमकेतु-शिखाञ्जनस्निग्धसमृद्धशाखम् = सन्तर्पितानलज्वालाकज्जलमसृणप्रवृद्धविटपम्, प्राध्ययनाभिभूतसमुच्चरच्चारुपतत्रिशिञ्जम् = प्रपाठतिरस्कृतोद्यन्मनोहरशकुन्त-कूजं, तपोवनं विश्वामित्राश्रम-स्थलम्, आलुलोके=ददृशे ( दूरत इति शेषः )। उपेन्द्रवज्रा वृत्तम्।

कोशः—मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ।

विटपः पल्लवे षिङ्गे विस्तारे स्तम्बशाखयोः—इति विश्वः।

समासः—धूमः केतुः यस्य स धूमकेतुः। हुतश्चासौ धूमकेतुः हुतधूमकेतुः, तस्य शिखाः, तासाम् अञ्जनानि, तैःस्निग्धा इति हुतधूमकेतुशिखाञ्जनस्निग्धाः समृद्धाः शाखा ( विटपिनाम् ) यस्मिन् तत् इति त्रिपदो बहुव्रीहिः। प्रतियोगि-पदानान्तु असमर्थानामपि समासः स्यादेवेति शाखाशब्दो विटपिभिः सम्बद्धोऽपि

तपोवनेन सम्बद्धो ज्ञेयः । प्रकृष्टम् अध्ययनम् प्राध्ययनम् 'कुगतिप्रादयः २।२।१८' इति समासः । प्राध्ययनेन अभिभूता प्राध्ययनाभिभूता पतत्रिणां शिञ्जा पतत्रिशिञ्जा (षष्ठीतत्पुरुषः), चार्वी चासौ पतत्रिशिञ्जा ( कर्मधारयः ), ततः प्राध्ययनाभिभूता समुच्चरन्ती चारुपतत्रिशिञ्जा यस्मिन् तत् इति त्रिपदबहुव्रीहिः । 'स्त्रियाः पुंवद्भाषित० ६।३।३४' इति पुंवद्भावे 'गोस्त्रियोः १।२।४८' इति ह्रस्वे उक्तरूपसिद्धिः। तपसे वनं तपोवनम् इति ।

तिङन्तः—आङ् पूर्वकात् लोकृ दर्शने इति भौवादिक-लोक्-धातोः कर्मणि लिटि, तङि ए प्रत्यये, द्वित्वादिके 'ह्रस्वः ७।४।५९' इति अभ्यासह्रस्वे रूपम् ।

वाच्य —सर्वे तपोवनम् आलुलोकिरे ।

शिक्षा—तपोवनेऽध्ययनं हवनमित्यादि पवित्रं कर्म भवतीति ॥२४॥

पुनस्तपोवन-माहात्म्यं स्तौति —

**[१]क्षुद्रान् न जक्षुर् हरिणान् मृगेन्द्रा, विशश्वसे पक्षिगणैः समन्तात् ।**
**नन्नम्यमानाः फल-दित्सयेव, चकाशिरे तत्र लता विलोलाः ॥२५॥**

अन्वयः—तत्र मृगेन्द्राः क्षुद्रान् हरिणान् न जक्षुः । पक्षिगणैः समन्तात् विशश्वसे । विलोलाः लताः फलदित्सया इव नन्नम्यमानाः चकाशिरे ।

हिन्दी—उस तपोवनमें सिंह अपेनेसे छोटे पशु मृगादिको नहीं खाते थे, पक्षीगण सभी जगहोंमें विश्वास करते थे ( उन्हें किसीका डर नहीं था )। चञ्चल लतायें फल देनेकी इच्छासे मानो कि खूब झुक ( लटक ) कर शोभा पा रहीं थीं ।

व्याख्या—तत्र तपोवने, मृगेन्द्राः सिंहाः, क्षुद्रान् लघून्, हरिणान् मृगान् न नहि जक्षुः बभक्षुः । पक्षिगणैः पतत्रिसङ्घैः, समन्तात् सर्वतः विशश्वसे प्रतीये । विलोलाः चञ्चलाः लताः वल्ल्यः फलदित्सया प्रसवविततीर्षया इव मन्ये नन्नम्यमानाः अतिशयेन भृशं नमन्त्यः, चकाशिरे शुशुभिरे । आश्रमस्वभाववर्णनादुभयत्रापि स्वभावोक्तिः ।

---

(१)टिप्पणी—भारतीय मुनियोंके आश्रमोंका सम्यक् उदारहण उपर्युक्त दो श्लोकों द्वारा प्रस्तुत किया गया है । तभी तो उनके आश्रममें रहने वाली शबरी भी सिद्ध संन्यासिनी बन सकी थी ।

कोशः—सिंहो मृगेन्द्रः पञ्चास्यः । मृगे कुरङ्ग-वातायुहरिणाजिनयोनयः । वल्ली तु व्रततिर्लता—इत्यमरः ।

समासः—मृगाणाम् इन्द्रः । पक्षिणां गणाः पक्षिगणाः, तैः । फलानां दित्सा फलदित्सा, तया । कर्मणि षष्ठ्यां कृद्योगे 'कृद्योगा च षष्ठी समस्यत इति वाच्यम्' इत्यनेन समासः । विशेषेण लोला विलोलाः, प्रादिसमासः 'कुगतिप्रादयः२।२।१८' इत्यनेन ।

कृदन्तसिद्धिः—दातुमिच्छा दित्सा । दा धातोः सनि 'सन्यङोः ६।१।९' इति द्वित्वेऽभ्यासकार्ये ददास इति स्थितौ सनि मीमाघु० ७।४।५४' इति इसि, 'अत्र लोपोऽभ्यासस्य ७।४।५८' इति अभ्यासलोपे, 'सः स्यार्द्धधातुके ७।४।४९' इति सस्य तकारे दित्स इति सन्नन्तात् 'अ प्रत्ययात् ३।३।१०२' इति अप्रत्यये, स्त्रियां टापि आबन्तात्टाविभक्तौ रूपम् ।

तिङन्तः—अद भक्षणे इति अदादिस्थाद् अद् धातोः लिटि उसि लिटचन्यतै-रस्याम् २।४।४०' इति वैकल्पिके घस्लादेशे द्वित्वादिकार्ये, जघस्+उस् इत्यत्र 'गमहनजन० ६।४।९८' इति उपधाकारस्य लोपे, चर्त्वे 'शासिवसिघसीनां च ८।३।६०' इति षत्वे जक्षुः । विशश्वसे इति कर्मणि लिट् । काशृ दीप्तौ इति भौवादिक-काश्-धातोः कर्तरि लिटि, झस्य इरेजादेशे, द्वित्वादिकार्ये रूपम् ।

कृदन्तः—णम प्रह्वत्वे शब्दे इति भौवादिकाद्-नम्-धातोः अतिशयेन पुनः पुनः नमतीति विग्रहे यङि,'सन्यङो ६।१।९' इति द्वित्वेऽभ्यासकार्य्ये नुगतो-ऽनुनासिकान्तस्य ७।४।८५' इति नुगागमे, नन्नम्यधातोः शानचि, 'आने मुक् ७।२।८२' इति मुगागमे टापि नन्नम्यमानाः ।

वाच्य०—मृगेन्द्रैः क्षुद्रा हरिणा न जक्षिरे। पक्षिगणाः विशश्वसुः। विलोलाभिः नन्नम्यमानाभिः लताभिः चकाशे ।

शिक्षा—यथा तपोवनप्रभावः तत्समीपस्थप्राणिषु दृश्यते, तथैव सर्वेऽपि जनाः स्वप्रभावं स्वनिकटवासिजनेषु प्रवेशयेयुरिति शिक्षयति पद्यम् ॥२५॥

सम्प्रति आतिथेया ऋषयोऽतिथी एतौ रामलक्ष्मणौ मधुपर्कादिना समर्चन्ति—

**अपूपुजन् विष्टर-पाद्य-माल्यै-रातिथ्यनिष्णा वनवासि-मुख्याः ।**
**प्रत्यग्रहीष्टां मधुपर्क-मिश्रं, तावासनाऽऽदि क्षिति-पालपुत्रौ ॥२६॥**

**अन्वयः**—आतिथ्यनिष्णाः वनवासिमुख्याः विष्टरपाद्यमाल्यैः तौ क्षितिपालपुत्रौ अपूपुजन् । तौ च ( तैर्दत्तम् ) मधुपर्कमिश्रम् आसनादि प्रत्यग्रहीष्टाम् ।

**हिन्दी**—अतिथि सत्कार करनेमे निष्णात वनवासियोमे मुख्य ऋषियोने विष्टर-पाद्य माल्योसे उन राजकुमारोकी पूजा की । उन दोनोने भी मधुपर्क पानकर आसनादि ( उनके सत्कारोको ) ग्रहण किया ।

**व्याख्या**—आतिथ्यनिष्णाः अतिथिसमादर-निपुणाः वनवासिमुख्याः आरण्यकश्रेष्ठा , विष्टरपाद्यमाल्यैः आसनपादार्घस्रजादिभिः तौ पूर्वोक्तौ क्षितिपालपुत्रौ राजकुमारौ, अपूपुजन् आर्चिषुः । तौ च मधुपर्कमिश्र दधिमधुघृतपानपूर्वकम् आसनादि विष्टरप्रभृति वस्तुजातम् प्रत्यग्रहीष्टाम् =स्वीचक्रतुः । साभिप्रायविशेषणत्वादुभयत्र २६,२७ पद्ययो. परिकरः ।

**कोशः**—पाद्य पादाय वारिणि ।

राज्ञि राट्—प्रथम सर्ग १ श्लोके०—इत्यमर ।

**समासः**—आतिथ्ये निष्णाः आतिथ्य निष्णाः, सप्तमीतत्पुरुषः । वनवासिषु मुख्याः वनवासिमुख्याः । विष्टरश्च पाद्य च माल्यं च विष्टरपाद्यमाल्यानि, तैः । मधुपर्केण मिश्रम् मधुपर्क मिश्रम् ।

**कृदन्तः**—निष्णान्तीति निष्णाः 'आतश्चोपसर्गे ३।१।१३६' इति कप्रत्यये, 'आतो लोप इटि च ६।४।६४' इति आलोपे, 'निनदीभ्यां स्नातेः कौशले ८।३।८९' इति षत्वे 'रषाभ्यां नो णः समानपदे ८।४।१ इति णत्वे निष्णशब्दसिद्धिः ।

**तद्धितः**—पादार्थम् उदकं पाद्यम् 'पादार्घाभ्यां च ५।४।२५' इति यत्, तदर्थत्वात् पद्भावाभावः । मालाया साधु माल्यम् 'तत्र साधु. ४।४।९८' इति यति, आ-लोपे माल्यम् । अतिथ्यर्थम् आतिथ्यम् इति विग्रहे अतिथिशब्दात् 'अतिथेर्ञ्यः ५।४।२६' इति ञ्यप्रत्यये, 'तद्धितेष्वचामादेः ७।२।११७' इति आदिवृद्धौ, यस्येति चेतीकारलोपः ।

**तिङन्त**—पूज, पूजायाम् इति चौरादिक-धातो स्वार्थे णिचि, लुङि, च्लौ, 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३।१।४८ इति चङि णौ चङ्युपधाया ह्रस्वः ७।४।१' इति ह्रस्वे, 'णेरनिटि ६।४।५१' इति णलोपे, 'चङि ६।१।११' इति द्वित्वे, 'दीर्घो लघोः ७।४।९४' इति दीर्घेऽडागमे अपूपुजन् । प्रति पूर्वकात् ग्रह उपादाने इति क्र्यादिस्थ-ग्रह्-धातोर्लुङि, ताम् प्रत्यये, च्लौ, तस्य सिचि 'आर्द्धधातुकस्येड्वलादेः

७।२।३५' इति इटि, 'ग्रहोऽलिटि दीर्घं ७।२।३७' इति दीर्घे, त्रिपादीकार्येऽडागमे उपसर्गस्य यणि प्रत्यग्रहीष्टाम् ।

**वाच्य०**—आतिथ्यनिष्णैः वनवासिमुख्यैः क्षितिपालपुत्रौ अपूजिषाताम् अपूजयिषाताम्[1] । ताभ्याम् मधुपर्कमिश्रम् आसनादि प्रत्यग्राहि ।

**शिक्षा**—'सर्वस्याभ्यागतो गुरुः' इति नीतिवाक्यादतिथि-पूजनं सर्वेषां कर्तव्यं कर्मेति शिक्षयति पद्यम् । कठोपनिषत्कथा च स्मारयति ॥२६॥

इदानीमधोष्टविधिना स्वनिवेद्यमावेदयन्ति ऋषयः—

**दैत्याऽभिभूतस्य युवामवोढं, मग्नस्य दोर्भिर्भुवनस्य भारम् ।**
**हवींषि संप्रत्यपि रक्षतं, तौ, तपोधनैरित्थमभाषिषाताम् ॥२७॥**

**अन्वयः**—( हे राजकुमारौ ) युवां दैत्याभिभूतस्य मग्नस्य भुवनस्य भारं दोर्भिः अवोढम् ( युगान्तरे ) । सम्प्रति अपि हवींषि रक्षतम् इति तपोधनैः तौ ( रामलक्ष्मणौ ) अभाषिषाताम् ।

**हिन्दी**—हे राजकुमारो, आप दोनोंने ( नर-नारायण रूपमें ) दैत्योंसे पीडित निराश्रय भुवनका भार ढोया और आज भी इस हविष्यकी रक्षा करें—इस प्रकार तपोधन ऋषियोंने उन दोनोंसे कहा ।

**व्याख्या**—हे राजकुमारौ युवाम् रामलक्ष्मणौ, दैत्याभिभूतस्य असुरसन्तापितस्य मग्नस्य निरालम्बनस्य भुवनस्य लोकस्य भारं कर्तव्यतारूपं रक्षणं, दोर्भिः बाहुभिः अवोढम्=असोढम् (युगान्तरे नरनारायणरूपत इत्यर्थः) । सम्प्रति अधुनापि हवींषि हव्यानि ( अग्नौ होतव्यद्रव्याणि ) रक्षतम्=पातम्, इत्थम् एवम् तपोधनैः ऋषिभिः तौ रामलक्ष्मणौ अभाषिषाताम् अभ्यधायिषाताम् वा अभ्यधिषाताम् ।

**समास.**—दैत्यैः अभिभूतः दैत्याभिभूतम्, तस्य । तपांसि (एव) धनानि येषां ते तपोधनाः, तैः । "संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते-" इत्युक्तेः 'ससजुषो रुः ८।२।६६' इति रुत्वे, 'हशि च ६।१।११४' इति उत्वे, गुणे तपोधन-शब्दात् भिसि रूपम् ।

**तद्धित.**—दितेः अपत्यम् पुमान् दैत्यः इति षष्ठीसमर्थात् सुबन्तात् 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ४।१।८५' इति ण्यप्रत्यये, 'तद्धितेष्वचामादेः ७।२।११७'

(१) टिप्पणी—चिण्वदिट्पक्षे तु 'असिद्धवदत्राभात् ६।४।२२' इतीटोऽसिद्धत्वा णलोपः । वलादीटि तु गुणायादेशौ ।

इति आदेरचः वृद्धौ, अन्त्यस्य इकारस्य च 'यस्येति च ६।४।१४८' इति लोपे दैत्यशब्दसिद्धिः। अनेन प्रकारेणेत्यर्थे 'इदमस्थमु. ५।३।२४' इति थमु—प्रत्यये 'एतेतौ रथो. ५।३।४' इति इदादेशे इत्थम्।

तिङन्त —वह् प्रापणे इति भौवादिक-वह्-धातोः लुङि, थसि तमादेशे, च्लौ, तस्य सिचि, हलन्त-लक्षणाया वृद्धौ, सस्य 'झलो झलि ८।२।२६' इति लोपे; 'होढः ८।२।३१' इति ढत्वे,'झषस्तथोर्धोऽधः ८।२।४०' इति धत्वे, ष्टुत्वे, ढलोपे 'सहिवहो-रोदवर्णस्य ६।३।११२' इत्योत्वे, अडागमे, अवोढम्। रक्ष पालने इति भ्वादिस्थ-रक्ष्-धातोः लोटि रक्षतम् इति।

**वाच्य०**—युवाभ्याम् भार. अवाहि। हवींषि रक्ष्यन्ताम्। तपोधना. तौ अभाषिषत ॥२७॥

सम्प्रति रामो यथोचितम् ऋषीनुत्तरयति—

**तान् प्रत्यवादीदथ राघवोऽपि, यथेप्सितं प्रस्तुत कर्म धर्म्यम्।**
**तपो-मरुद्भिर्भवतां शराग्निः, संधुक्ष्यतां नोऽरि-समिन्धनेषु ॥२८॥**

**अन्वयः**—अथ राघव अपि "यथेप्सित धर्म्यं कर्म प्रस्तुत (यूयम्), भवतां तपोमरुद्भिः नः शराग्निः अरिसमिन्धनेषु संधुक्ष्यताम्" इति तान् प्रति अवादीत्।

**हिन्दी**—आपलोग धार्मिक कार्य करें। आपके तपस्यारूपी पवनसे हमारी बाणरूपीअग्नि शत्रुरूपी इन्धनमे खूब प्रज्ज्वलित हो—ऐसा रामने भी उन लोगोंसे कहा।

**व्याख्या**—अथ ऋषियाच्ञानन्तरम् राघवः अपि तथैव (यूयम्) यथेप्सितम् यथेष्टम् धर्म्यं पुण्यम् कर्म कर्तव्यम् प्रस्तुत प्रारभध्वम्, भवताम् ऋषीणाम् तपो-मरुद्भिः तपस्यावातै. नः अस्माकम्, शराग्निः बाणवह्निः, अरिसमिन्धनेषु शत्रु-शुष्ककाष्ठेषु, सन्धुक्ष्यताम् प्रदीप्यताम् इति तान् ऋषीन् प्रति अभिलक्ष्य अवादीत् अगदीत्। अत्र तपस' मरुत्त्वेन शराणामग्नित्वेन अरीणामिन्धनत्वेन रूपणात् स्फुटं रूपकालङ्कारो 'रूपक रूपितारोपादित्यादि' लक्षणम्।

**समासः**—ईप्सितमनतिक्रम्य यथेप्सितम् इति विग्रहे 'अव्यय विभक्ति० २।१।६' इति यथार्थेऽव्ययीभावः। तपांसि एव मरुतः तपोमरुत, तैः। शर एवाग्निः। समीचीनानि इन्धनानि समिन्धनानि। प्रादिसमासे, अरय एव समिन्धनानि अरिसमिन्धनानि, 'मयूरव्यसकादयश्चेति' समास' सर्वत्र एवार्थे।

तद्धितः—रघोरपत्य पुमान् राघवः इति प्रातिपदिकात् रघुशब्दात् 'तस्यापत्यम् ४।१।९२' इति अणि, आदिवृद्धौ, 'ओर्गुणः ६।४।४६' इति गुणे, राघव । धर्मादनपेतम् इत्यर्थे 'धर्मपथ्यर्थन्यायादनपेते ४।४।९२' इति यति धर्म्यम् ।

तिङन्तः—वद व्यक्तायां वाचि इति भौवादिक-वद् धातो प्रतिपूर्वात् लुङि प्रत्यवादीत् । 'वदव्रज'० इति वृद्धि । प्रपूर्वात् ष्टुञ् स्तुतौ इति अदादिस्थ-स्तु-धातोः लोटि, मध्यमपुरुषबहुत्वे प्रस्तुतेति । धुक्ष, धिक्ष सन्दीपन-क्लेदन जीवनेषु इति धुक्ष् धातो कर्मणि लोटि, ताम्प्रत्यये रूपम् ।

वाच्य:—राघवेणापि ते प्रत्यवदिषत । युष्माभि धर्म्यं कर्म प्रस्तूयताम्, तपोमरुत शराग्निम् सन्धुक्षन्ताम् ।

शिक्षा—महान्तोऽर्थिना मनोरथ पूरयन्तीति ॥२८॥

ते तपोवना रामाज्ञया यज्ञारम्भं कुर्वन्ति तत्र रक्षांसि समुपद्रवन्ति—

**प्रतुष्टुवु कर्म तत प्रक्लृप्तैस्, ते यज्ञियैर् द्रव्य-गणैर् यथावत् ।**
**दक्षिण्य-दिष्टं कृतमार्त्विजीनैस्, तद् यातुधानैश् चिचिते प्रसर्पत्॥२९॥**

अन्वय—तत ते प्रक्लृप्तैः यज्ञियै. द्रव्यगणै यथावत् कर्म प्रतुष्टुवु, दक्षिण्यदिष्टम् आर्त्विजीनै कृतम् प्रसर्पत् तत् यातुधानै चिचिते ।

हिन्दी—उन तपोधनोने पर्य्याप्त यज्ञसामग्री सम्भारसे यथाविधि यज्ञ कर्मका प्रारम्भ किया । (पर्याप्त) दक्षिणा पाने वाले आचार्य्योसे सचालित ऋत्विक्कर्ममे कुशल होताओसे किए जाने वाले उस ( यज्ञ ) कर्मको राक्षसोने ताड लिया ।

व्याख्या—तत रामादेशानन्तरम्, ते तपोधना, प्रक्लृप्तै पर्याप्तै (प्रभूतैः) यज्ञियै. यागार्हैं द्रव्यगणै सामग्रीसम्भारैः, यथावत् यथाविधि कर्म यागाङ्ग-क्रियाकलापम्, प्रतुष्टुवु प्रारेभिरे । दक्षिण्यदिष्टम् दक्षिणार्हाचार्य्योपदिष्टम् आर्त्विजीनै ऋत्विक्कर्मार्हैं कृतम् अनुष्ठित प्रसर्पत् प्रवर्द्धमानम् तत् यागकर्म यातुधानै. राक्षसैः चिचिते बुबुधे । अत्र विभावनाध्वनि ।

कोश—दक्षिणेयो दक्षिणार्हस्तत्र दक्षिण्य इत्यपि ।

यातुधान पुण्यजनो नैरृतो यातुरक्षसी—इत्यमरः ।

समास—दक्षिण्यै दिष्टम् दक्षिण्य-दिष्टम् । द्रव्याणा गणा द्रव्यगणास्तै. । यातु. यातना धीयते अस्मिन्निति यातुधान । जातु. यातना धानम् सनिधानम् अस्येति चवर्गादिरपि जातुधानशब्द ।

तद्धित.—तस्मादिति ततः । तद्-शब्दात् 'पञ्चम्यास्तसिल् ५।३।७' इति तसिल् प्रत्यये, 'तद्धितश्चासर्वविभक्तिः १।१।३८' इत्यव्ययत्वम् । दक्षिणामर्हन्ति इति दक्षिण्याः । 'कडङ्करदक्षिणाच्छ च ५।१।६९' इति यत्प्रत्ययः । यज्ञशब्दात् ऋत्विक् शब्दाच्च 'यज्ञर्त्विग्भ्यां घखञौ ५।१।७१' इति 'तदर्हति ५।१।६३' अर्थे यथाक्रमं घ-खञ् प्रत्ययौ ।

तिङन्त.—प्रपूर्वकात् ष्टुञ् स्तुतौ इति अदादिस्थ-स्तु-धातोः लिटि, उसि, द्वित्वे,'शर्पूर्वाः खयः ७।४।६१' इति खयः शेषे 'अचि श्नुधातुभ्रुवां० ६।४।७७' इति उवङि तुष्टुवुः । चिती सञ्ज्ञाने इति भौवादिक चित्-धातोः कर्मणि लिटि चिचिते ।

वाच्य०—तैः कर्म प्रतुष्टुवे । तत् यातुधानाः चिचितुः ।

शिक्षा—'यदेव देवा अकुर्वन् तदेव राक्षसा अविघ्नन्' इति दुष्टानां बाधकत्वे सत्यपि सत्पुरुषैः स्वकर्तव्यं कर्तव्यमेवेति शिक्षयति पद्यम् ॥२९॥

विघ्नकर्तारो राक्षसा आकाशव्याप्ता अभूवन्निति सूचयति—

**आपिङ्ग-रूक्षोर्ध्व-शिरस्य-बालैः शिराल-जङ्घैर् गिरिकूट-दघ्नैः ।**
**ततः क्षपाटैः पृथु पिङ्गलाऽक्षैः खं प्रावृषेण्यैरिव चाऽऽनशेऽब्दैः ॥३०॥**

अन्वय—ततः प्रावृषेण्यैः अब्दैः इव आपिङ्गरूक्षोर्ध्वशिरस्यबालैः शिरालजङ्घैः गिरिकूटदघ्नैः पृथुपिङ्गलाक्षैः क्षपाटैः खम् आनशे च ।

हिन्दी—उसके बाद वर्षा ऋतुके मेघोके समान कुछ पीले रूखे और खडे शिरके बालवाले, शिराल जङ्घा वाले, बडी-बडी पीली आँखो वाले पर्वतके शिखरके सदृश ऊँचे (लम्बे-लम्बे) राक्षसोसे आकाश भर गया ।

व्याख्या—ततः कर्मारम्भानन्तरम्, प्रावृषेण्यैः वार्षिकैः अब्दैः मेघैः इव यथा, आपिङ्गरूक्षोर्ध्वशिरस्यबालैः ईषत्कपिशखरस्तब्धशिरोरुहैः, शिरालजङ्घैः दृश्यनाडी-प्रसृतैः, पृथुपिङ्गलाक्षैः विशालविडालनेत्रैः, गिरिकूटदघ्नैः पर्वत-शृङ्गप्रमाणैः, क्षपाटैः रात्रिचरैः, खम् गगनम् आनशे सम्बभ्रे । राक्षसानां मेघोपमानतयोपमालङ्कारः तत्स्वभाववर्णनात्स्वभावोक्त्या सङ्करः ।

कोश—जङ्घा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियाम् ।
चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः
कूटोऽस्त्री शिखरं शृङ्गम् ।

समास.—आपिङ्गा रूक्षा ऊर्ध्वंशिरस्या बालाः येषा ते, तै.—इत्यनेकपद-बहुव्रीहिः । शिराला जङ्घा येषा ते, तै । पृथूनि पिङ्गलानि अक्षीणि येषा ते, तै । अत्र 'बहुव्रीहौ० ५।४।११३' इति षचि,'नस्तद्धिते ६।४।१४४' इति टिलोप ।

तद्धित.—शिरसि भवा शिरस्या 'शरीरावयवाद्यत् ५।१।६' इति यत्प्रत्यय । शिरा सन्ति यासा ता शिराला 'प्राणिस्थादातो लजन्यतरस्याम् ५।२।९६' इति लच् प्रत्यय । गिरिकूट प्रमाण येषामिति विग्रहे गिरिकूट शब्दात् 'प्रमाणे द्वय-सज्दघ्नञ्मात्रच ५।२।३७' इति दघ्नच् । प्रावृषि भवा इत्यर्थे, 'प्रावृष एण्यः ४।३।१७' इति एण्य. ।

तिङन्त.—अशूङ् व्याप्तौ सघाते च इति स्वादिस्थ अश्-धातो लिटि, द्वित्वादिकार्ये, 'अत आदे. ७।४।७०' इति अभ्यासदीर्घे 'अश्नोतेश्च ७।४।७२' इति नुडागमे आनशे ।

वाच्य०—आ० ला , शि-घा:, गि०घ्ना', पृ०क्षा: क्षपाटा. खम् आनशिरे ।

शिक्षा —'प्रकृत्यमित्रा हि सतामसाधव:' इति नीतिं शिक्षयति पद्यम् ॥३०॥

कवि. लक्ष्मणकर्तृक तेषा वध वर्णयति—

**अधिज्य-चापः स्थिर-बाहु-मुष्टि-रुदञ्चिताऽक्षोऽञ्चित-दक्षिणोरु ।**
**तान् लक्ष्मणः सन्नत वाम-जङ्घो, जघान शुद्धेषुर-मन्द-कर्षी ॥३१॥**

अन्वय —अधिज्यचाप स्थिरबाहुमुष्टिः उदञ्चिताक्षः अञ्चितदक्षिणोरुः सन्नत-वामजङ्घ शुद्धेषुः अमन्दकर्षी लक्ष्मणः तान् ( क्षपाटान् ) जघान ।

हिन्दी —धनुष चढाए हुए, दृढ बाहू और मुट्ठीवाले, ऊपर आँख उठाए हुए, दाहिनी जानुको मोडे हुए, बाई जाघको नवाये हुए, अमोघ बाणवाले, लम्बी धनुषकी डोरीको खीचने वाले लक्ष्मणने उन सभी ( राक्षसो ) को मार डाला ।

व्याख्या—अधिज्य-चाप समारोपितधन्वा, स्थिरबाहुमुष्टि. दृढभुजमुष्टिः, उदञ्चिताक्ष. ऊर्ध्वंनयन , अञ्चितदक्षिणोरु. सङ्कोचितापसव्यजानु', सन्नतवामजङ्घः प्रह्वसव्यप्रसृत., शुद्धेषु निविडबाण: अमोघशर इति यावत्, अमन्दकर्षी दीर्घाकर्षी लक्ष्मण सौमित्रि:, तान् दृप्तान् राक्षसान् जघान जिहिंस । सरलान्वय:, प्रसादगुण:, स्वभावोक्तिरलकार । साभिप्रायविशेषणत्वात्परिकर । हननहेतोरभिधानात् काव्यलिङ्गमिति सङ्कर ।

कोशः—मौर्वी ज्या शिञ्जिनी गुणः ।

वामं शरीरे सव्यं स्यादपसव्यं तु दक्षिणे ।

समासः—अधिगता ज्या यस्मिन् तद् अधिज्यम् । अधिज्यं चापं यस्य सः अधिज्यचापः । बाहुश्च मुष्टिश्च तयोः समाहारः बाहुमुष्टि 'द्वन्द्वश्च प्राणितूर्य्य-सेनाङ्गानाम् २।४।२' इति एकवद्भावे, स्थिरं बाहुमुष्टि यस्य सः । उदञ्चिते अक्षिणी यस्य स उदञ्चिताक्षः । पिङ्गलाक्षवत्सिद्धिः। दक्षिणश्चासौ ऊरुः दक्षिणोरुः अञ्चितः दक्षिणोरुः यस्य सः । सन्नता वामजङ्घा यस्य सः । शुद्धा इषवो यस्य सः । अमन्दं कृषति तच्छील इति विग्रहे 'सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८, इति णिनिः ।

वाच्य०—लक्ष्मणेन ते जघ्निरे (सर्वत्रैव लक्ष्मण-विशेषणे तृतीया) ।

शिक्षा—न्यायपथे स्थिर एकोऽपि बहून् हन्ति इति हि (अबलीयान् बलीयां-समाशंसते धर्मेण) औपनिषदीम् शिक्षां ददाति पद्यम् ॥३१॥

रामो मारीचं रणे स्थातुमाह्वयते—

**गाधेय-दिष्टं विरसं रसन्तं, रामोऽपि मायाचणमस्त्रचुञ्चुः ।**
**स्थातुं रणे स्मेर-मुखो जगाद मारीचमुच्चैर् वचनं महार्थम् ॥३२॥**

अन्वयः—स्मेरमुखः अस्त्रचुञ्चुः रामः अपि गाधेयदिष्टं विरसं रसन्तं मायाचणं मारीचं रणे स्थातुं महार्थं वचनम् उच्चैः जगाद ।

हिन्दी—मृदु मुस्कानवाले धनुर्धारी रामने विश्वामित्र द्वारा निर्दिष्ट कटुभाषी कपट-प्रिय मायावी मारीचको रणमें स्थिर होनेकेलिए साभिप्राय ललकारा। जहाँ 'स्थास्नु' पाठ है वहाँ रामका अभिप्राय है कि तुम सेनापति हो तो सुनो जो मैं कहता हूँ ।

व्याख्या—स्मेरमुखः ईषत्स्मयमानास्यः, अस्त्रचुञ्चुः प्रहरणप्रसिद्धः रामः रामचन्द्रः अपि गाधेयदिष्टं विश्वामित्रनिर्दिष्टं, विरसं नीरसं, रसन्तं शब्दायमानं, मायाचणं छद्मप्रसिद्धं, रणे संग्रामे स्थातुम् स्थिरीभवितुम्, महार्थम् अर्थभूयिष्ठं वचनं शब्दम्, उच्चैः तारस्वरेण, जगाद = उवाच । 'स्थास्नुम्' इति पाठेऽपि स्थास्नुम् स्थितम् इति मारीचविशेषणम् । सेनापतित्वात्पूर्वत एव स्थितम् इत्यर्थः । इन्द्रवज्रा वृत्तम्, लक्षणम् ( १।२ पद्ये ) ।

कोशः—स्थास्नुः स्थिरतरः स्थेयान् ।
वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्—इत्यमरः ।

समासः—गाधेयेन दिष्टः, तम् । स्मेरं मुखं यस्य सः । महान् अर्थो यस्य तत् महार्थम् ।

तद्धितः—गाधेरपत्यम् पुमान् गाधेयः । 'द्व्यचः ४।१।१२१' इति वर्तमाने 'इतश्चानिञः ४।१।१२२' इति ढकि गाधेयः । मायया वित्तः मायाचण । अस्त्रैः वित्तः अस्त्रचुञ्चुः । 'तेन वित्तश्चुञ्चुप्चणपौ ५।२।२६' इति उभयत्र प्रत्ययौ । पृथक् पाठात् ज्ञापितानित्यत्वस्य 'चुटू १।३।७' इत्यस्याप्रवृत्तिः ।

कृदन्त –ष्मिङ् ईषद्धसने इति भौवादिक-स्मि-धातो 'नमिकम्पि० ३।२।१६७' इति रप्रत्यये, गुणे स्मेरम् । 'स्थास्नुम्' इति पाठे–'ग्लाजिस्थश्च' इति ग्स्नु–प्रत्यय., कित्वाभावात् इत्व न, क्स्नु पाठेऽपि आ प्रश्लेषान्नेत्वम् इत्यप्यन्यत् । स्थातुम् 'तुमुन्ण्वुलौ० ३।३।१०' इति तुमुन् ।

तिङन्तः—गद व्यक्तायाम् वाचि इति गद्-धातो लिटि, द्वित्वादौ 'कुहोश्चुः ७।४।६२' इति गस्य जकारे उपधावृद्धिः—जगाद ।

वाच्य०—रामेण मारीचो जगदे । विशेषणानि यथायोगमुभयत्र । तथैव 'गौणे कर्मणि दुह्यादेः' इति मारीचे प्रथमा ।

शिक्षा—महान्तं सम्बोध्य प्रहरन्ति नान्यथेति ॥३२॥

प्रवादं प्रारभमाणो रामः प्रथमं मारीचं भर्त्सयति–

**आत्मम्भरिस् त्वं पिशितैर् नराणां, फलेग्रहीन् हंसि वनस्पतीनाम् ।**
**शौवस्तिक-त्वं विभवा न येषां, व्रजन्ति तेषां दयसे न कस्मात् ॥३३॥**

अन्वयः—अरे मारीच ! नराणा पिशितैः आत्मम्भरिः त्व वनस्पतीना फलेग्रहीन् हंसि । येषा विभवाः शौवस्तिकत्व न व्रजन्ति तेषा कस्मान्न दयसे (इति हि महार्थं वचनम्) (इतः उभयोः प्रवादरूपे भर्त्साभर्त्सि चलिष्यति ।

हिन्दी –नरमाससे पेट भरनेवाले अरे नीच, तू वृक्षोके फलोसे जीवन-निर्वाह करने वालोका वध करता है ! जिनको फल खानेकी भी चिन्ता नही है, ऐसे निःस्पृह ज्ञानियोको मौतके घाट उतारते हुए तुझे दया नही आती ?

व्याख्या—अरे नीचमारीच ! नराणाम् मानवानाम्, पिशितैः मांसैः, आत्मम्भरिः कुक्षिम्भरिः त्वम् वनस्पतीनाम् तरूणा फलेग्रहीन् फलमात्राहारान् हंसि

हिनस्सि । येषाम् अकिञ्चनानाम् मुनीनाम्, विभवाः सम्पदः, शौवस्तिकत्वम् परेद्यु-स्थायुकत्वं, न व्रजन्ति न गच्छन्ति, तेषा दयापात्राणाम् कस्मात् (हेतोः) कथं न दयसे नहि अनुकम्पसे ? महानीचस्त्वमित्यर्थः। सर्वेषा विशेषणानां साभिप्रायकतया परिकरालङ्कारः । दयाहेतो. सत्त्वेऽपि तत्कार्यानुत्पादाद् विशेषोक्तिरपीति सङ्करः।

कुशूलकुम्भीधान्यो वा त्र्याहिको द्व्याहिकोऽथवा ।
जीवेद्वापि शिलोञ्छेन श्रेयानेषा परः परः ॥

इति मनूक्त्या श्रेष्ठर्षिवधेनाऽतिजघन्यस्त्वमिति तात्पर्यम् ।

कोशः—उभौ त्वात्मम्भरिः कुक्षिम्भरिः स्वोदरपूरणे ।
पिशित तरस मासं पललं क्रव्यमामिषम् ।

तद्धितः—श्वो भव इति विग्रहे 'श्वसस्तुट् च ४।३।१५' इति ठञि तुडागमे 'द्वारादीना च ७।३।४' इति ऐजागम 'ठस्येकः ७।३।५०' इति इकादेशे शौवस्तिक-शब्दात् तस्य भावस्त्वतलौ ५।१।११९' इति त्वे क्लीबत्वम् ।

कृदन्त. –'फलेग्रहिरात्मम्भरिश्च ३।२।२६' इति निपातनात् सिद्धिर्द्वयोः। दय-योगे 'अधीगर्थदयेशा कर्मणि २।३।४२' इति कर्मणि षष्ठी ।

तिङन्तः - व्रज गतौ इति भौवादिकस्य व्रजन्ति । दय दान-गति-रक्षण-हिंसा-दानेषु इत्यस्यापि भौवादिकस्यात्मनेपदे दयसे ।

वाच्य०—आत्मम्भरिणा त्वया फलेग्रह्य हन्यन्ते । विभवैः शौवस्तिकत्वं न व्रज्यते (त्वया) ते कस्मान्न दय्यन्ते ।

शिक्षा—एव जघन्या भूभारभृता वध्या एवेति शिक्षयति पद्यम् ॥३३॥

प्रवदन् मारीचो राममुत्तरयति—

**अद्मो द्विजान् देवयजीन् निहन्म, कुर्म पुरं प्रेत-नराऽधिवासम् ।**
**धर्मो ह्यय दाशरथे ! निजो नो, नैवाऽध्यकारिष्महि वेद-वृत्ते ॥३४॥**

अन्वयः—हे दाशरथे, (वयम्) द्विजान् अद्मः । देवयजीन् निहन्मः । पुरं प्रेतनराधिवासम् कुर्मः । हि यतः अय नो निजः धर्मः । (वयम्) वेदवृत्ते अध्यकारिष्महि एव न ।

हिन्दी—हे दशरथनन्दन ! (हम राक्षस) द्विजोको खाते हैं । देवपूजकोको मारते हैं । नगरोको श्मशान बनाते है । हमारा यही धर्म है । हमको वेदाचारमें अधिकार ही नही दिया गया है ।

**व्याख्या**—हे दाशरथे दशरथनन्दन ! ( वयम् राक्षसाः ) द्विजान् विप्रान् अद्मः जक्षिमः । देवयजीन् सुरयाजकान् निहन्मः हिंस्मः । पुरम् नगरम् प्रेतनराधिवासं मृतमनुष्यावासं ( श्मशानमित्यर्थः ) कुर्मः विदध्मः । हि = यतः अयम् एषः ( परद्रोह इति यावत् ) नः अस्माकं निजः स्वकीयः धर्मः आचारः । ( वयम् राक्षसाः ) वेदवृत्ते श्रुत्युक्ताचारे अध्यकारिष्महि अधिकृता एव निश्चयेन नहि नैव । कारणेन कार्यसमर्थनदर्शनादर्थान्तरन्यासोऽलङ्कारः । इन्द्रवज्रावृत्तम् ।

**कोशः**—निज आत्मीयनित्ययोः—इति विश्वः ।
हि हेताववधारणे—इत्यमरः ।

**समासः**—प्रेताश्च ते नराः प्रेतनराः, तेषाम् अधिवासः, तम् । वेदानाम् वृत्तम्, तस्मिन् ।

**कृदन्तः**—देवान् यजन्ति तच्छीलाः, कर्मोपपदे यजेः औणादिक इ प्रत्ययः । 'उपपदमतिङ् २।२।१९' इति समासे विभक्तेर्लुकि देवयजिशब्दस्य शसि रूपम् ।

**तद्धितः**—दशरथस्यापत्यं पुमान् इति विग्रहे दशरथप्रातिपदिकात् 'अत इञ् ४।१।९५' इति इञ् प्रत्यये. आदिवृद्धौ, दाशरथिशब्दस्य सम्बुद्धौ रूपम् ।

**तिङन्तः**—अद भक्षणे इति अदादिस्थ-अद्-धातोः लटि, 'कर्तरि शप् ३।१।६८' इति शपि, तस्य लुकि अद्मः । निपूर्वकात् हनोऽपि सैव सिद्धिः । षष्ठी तु शेषत्वाविवक्षया न । डुकृञ् करणे इति तनादि-कृ-धातोः 'तनादिकृञ्भ्यः उः ३।१।७९' इति उप्रत्यये, गुणे, 'अत उत्सार्वधातुके ६।४।११०' इत्युकारे, 'नित्यं करोतेः ६।४।१०८' इत्युकारलोपे कुर्मः । कृञः अधिपूर्वात् कर्मणि लुङि 'स्यसिच्सीयुट्तासि० ६।४।६२' इति चिण्वदिटि वृद्धौ अध्यकारिष्महि ।

**वाच्य०**—अस्माभिः द्विजा अद्यन्ते । देवयजयो निहन्यन्ते । पुरम् ( प्रथमान्तम् ) प्रेतनराधिवासः क्रियते । अनेन निजेन धर्मेण ( भूयते ) नाध्यकार्षीत् ( अस्मान् ब्रह्मेति शेषः ) ।

**शिक्षा**—सर्वविधैषा सात्त्विकी, राजसी, तामसी सृष्टिर्ब्रह्मणैव विहितेति मर्षणीयम् व्यवहारे सर्वैरिति शिक्षयति पद्यम् ॥ ३४ ॥

रामोऽपि प्रवदन्नेव तं प्रत्युत्तरयति—

**धर्मोऽस्ति सत्यं तव राक्षसाऽयमन्यो व्यतिस्ते तु ममाऽपि धर्मः ।**
**ब्रह्म-द्विषस् ते प्रणिहन्मि येन, राजन्य-वृत्तिर् धृतकार्मुकेषु ॥ ३५ ॥**

**अन्वयः**—अरे राक्षस ! तव अयं धर्मः अस्ति । तु मम अपि अन्यः धर्मः व्यतिस्ते । येन राजन्यवृत्तिः धृतकार्मुकेषुः ( अहम् ) ब्रह्मद्विषः ते प्रणिहन्मि ॥

**हिन्दी**—अरे राक्षस ! ठीक ठीक तुम्हारा यह धर्म है। पर मेरा धर्म इसके बिलकुल विपरीत है । अतः क्षत्रिय-वृत्ति-वश धनुष-बाणवाला मैं तुझ ब्राह्मण द्वेषीको समाप्त करता हूँ ।

**व्याख्या**—अरे नीच राक्षस ! सत्यं वस्तुतः तव राक्षसस्य अयम् ( अद्मो द्विजान् इत्यादि ) पूर्वोक्तः धर्म्मः आचारः अस्ति विद्यते । तु किन्तु मम रामस्य अपि तथा अन्यः अपरः धर्मः आचारः व्यतिस्ते व्यतिरिक्तो भवति । येन हेतुना राजन्यवृत्तिः क्षत्रियकर्मा धृतकार्मुकेषुः गृहीतधनुर्बाणः ( अहं रामः ) ब्रह्मद्विषः विप्रद्रोहिणः ते मारीचस्य प्रणिहन्मि पिनष्मि । अत्र ते इति 'जासिनिप्रहण० २।३।५६' इति षष्ठी । नेर्णत्वं च 'नेर्गद ८।४।१७' इति सूत्रेण । व्यतिस्ते इति 'कर्तरि कर्मव्यतिहारे १।३।१४' इति आत्मनेपदम् । अत्रापि पूर्वोक्तोऽलंकारः । हेतूपादानात् काव्यलिङ्गमपीति संकरः ।

**कोशः**—धर्माः पुण्य-यमन्यायस्वभावाऽचार सोमपाः ।
धनुश्चापौ धन्वशरासन-कोदण्ड-कार्मुकम्—इत्यमरः ।

**समासः**—राजन्यस्य वृत्तिः यस्य इति व्यधिकरणबहुव्रीहिः । कार्मुकं च इषवश्च कार्मुकेषवश्चेति इतरेतरद्वन्द्वः । ततः धृताः कार्मुकेषवो येन स धृत-कार्मुकेषुः । राजन्यवृत्तिरित्यत्र तत्पुरुषसमासे तु यतः राजन्यवृत्तिः धृत-कार्मुकेषुर्भवति इति वृत्तेर्विशेषणमिदम् । सप्तम्यन्तपाठे निमित्तसप्तमी ।

**कृदन्तः**—ब्रह्मणः द्वेष्टि इति विग्रहे कर्मोपपदात् द्विष अप्रीतौ इति द्विष्-धातोः अदादिस्थात् क्विपि ब्रह्मद्विष् शब्दात् 'जासिनिप्रहण० २।३।५६' इत्यत्र सङ्घातविगृहीतविपरीतग्रहणात् तद्योगे षष्ठी ।

**तद्धितः**—रक्षः एव राक्षसः तत्सम्बुद्धौ अरे राक्षस ! 'प्रज्ञादिभ्यश्च ५।४। ३८' इति स्वार्थे अणि, आदिवृद्धौ, 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति पुंस्त्वम् । राज्ञोऽपत्यं पुमान् इति विग्रहे 'राजश्वशुराद्यत् ४।१।१३७' इति यति, 'ये च० ६।४।१६८' इति प्रकृतिभावे राजन्यः क्षत्रियः ।

**तिङन्तः**—अस् भुवि इति अदादिस्थादस् धातोः तिपि, शप् तस्य लुकि अस्ति । तस्यैव धातोः व्यतिपूर्वस्य ते प्रत्यये 'श्नसोरल्लोपः ६।४।१११'

इति अल्लोपे व्यतिस्ते । प्रनिपूर्वस्य हन्तेरपि तथैव 'नेर्गद० ८।४।१७' इति णत्वमुक्तमुपरि ।

वाच्य०—अनेन धर्मेण भूयते । अन्येन धर्मेण व्यतिभूयते ( अत्रार्द्ध-धातुकत्वादस्तेर्भूः ) राजन्यवृत्तिना धृतकार्मुकेषुणा मया ब्रह्मद्विट् त्वम् प्रणिहन्यसे । तत्पुरुषसमासपक्षे राजन्यवृत्त्या धृतकार्मुकेष्वा भूयते इति पृथक् पदम् ।

शिक्षा—क्षत्रियस्य वेदाचारविरुद्धानामुज्जासनं धर्म इति ॥ ३५ ॥

मारीचं युद्धान्निरस्यन् रामः प्रवादान्त करोति—

**इत्थं-प्रवादं युधि संप्रहारं, प्रचक्रतू राम-निशा-विहारौ ।**
**तृणाय मत्वा रघु-नन्दनोऽथ, बाणेन रक्षः प्रधनान् निरास्थत् ॥३६॥**

अन्वयः—रामनिशाविहारौ युधि इत्थम्प्रवादं सम्प्रहारं प्रचक्रतुः । अथ रघुनन्दनः रक्षः तृणाय मत्वा बाणेन प्रधनात् निरास्थत् ।

हिन्दी— राम और राक्षस दोनो ऐसे परस्पर प्रवादवाले सम्प्रहार करने लगे । बादमे रामने राक्षसको तुच्छ समझ एकही बाणसे संग्रामसे दूर भगा दिया ।

व्याख्या—राम-निशाविहारौ राघव-रात्रिचरौ, युधि युद्धे, इत्थ-प्रवाद ईदृग्वाक्कलह सम्प्रहारम् अस्त्रपातम्, प्रचक्रतुः विदधतु । अथ = अनन्तरम् रघुनन्दनः राघव , रक्षः राक्षसं तृणाय मत्वा तुच्छं विज्ञाय, बाणेन शरेण (एकेनैव) प्रधनात् सग्रामात् निरास्थत् अपानैषीत् । प्रधननिरासे हेतूक्त्या काव्यलिङ्गम् ।

कोश —युद्धमायोधन जन्यं प्रधनं प्रविदारणम् ।

समास.—रामश्च निशाविहारश्च तौ । निशाया विहारो यस्य स इति व्यधिकरणबहुव्रीहिः । इत्थं प्रवादो यस्मिन् सः, तम् । रघुनन्दनः—रघूणा नन्दनः ।

कृदन्तः—नन्दयतीति विग्रहे 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३।१।१३४' इति नन्दधातोः ल्यु प्रत्यये नन्दनः । युध्यन्ते अस्याम् इति युत् युद्धभूमिः । युध सम्प्रहारे इति दिवादिस्थ-युध्-धातोः 'सम्पदादिभ्यः क्विप् ३।३।९४' इति अधिकरणे क्विप् । प्रपूर्व-कृधातो अतुसि, 'द्विर्वचनेऽचि १।१।५९' इति यणो निषेधे द्वित्वम् ।

वाच्य० —रामनिशाविहाराभ्याम् इत्थप्रवादः सम्प्रहारः प्रचक्रे । रघुनन्दनेन रक्षः निरासि ।

शिक्षा—सत्यमेव जयते नानृतम्—इति असत्पक्ष मारीच पराजित्य शिक्षयति रामः ॥ ३६ ॥

रामं-विजयफलमाख्याति—

**जग्मुः प्रसादं द्विज-मानसानि, द्यौर् वर्षुका पुष्प-चयं बभूव।**
**निर्-व्याजमिज्या ववृते वचश् च, भूयो बभाषे मुनिना कुमार ॥३७॥**

अन्वय—द्विजमानसानि प्रसादं जग्मुः। द्यौः पुष्पचयं वर्षुका बभूव। इज्या निर्व्याजं ववृते। मुनिना कुमारः भूयो वच. च बभाषे।

हिन्दी—ब्राह्मणो(शिक्षकों)के मन प्रसन्न हुए। आकाश फूल समूह बरसाने लगा। यज्ञ निर्विघ्न सम्पन्न हुआ। मुनि पुनः (फिर) राजकुमारसे बोले।

व्याख्या—विजिते राक्षसगणे, द्विजमानसानि ब्राह्मणचेतांसि, प्रसादं प्रसन्नता जग्मुः प्रापु.। द्यौः आकाशम्, पुष्पचयं सुमनस्समूहं वर्षुका ('नलोकाव्ययनिष्ठेति' षष्ठीनिषेधः) पातुका बभूव समजनि। इज्या यागः, निर्व्याजं निर्विघ्नं, ववृते सम्पेदे। मुनिना विश्वामित्रेण कुमारः किशोरः (रामः) भूयः पुनः वचः वचनम् बभाषे जगदे। विजये सर्वान्वियात् तुल्ययोगिता।

कोशः—प्रसादस्तु प्रसन्नता। चेतो हृन्मानसं मनः—इत्यमर।

समासः—द्विजानां मानसानि। पुष्पाणां चयः, तम्। निर्गतो व्याजः यस्मात् तद् यथातथेति बहुव्रीहिं कृत्वा क्रियाविशेषणं कर्तव्यम्। बभाषे–भाष् धातोः द्विकर्मकतया 'गौणे कर्मणि दुह्यादे' इति गौणे कर्मणि लिट्।

कृदन्तः—वर्षति तच्छीला वर्षुका। वृषु सेचने इति भौवादिक-वृष्-धातोः 'लषपतपद० ३।२।५४' इति उकञ् प्रत्यये, गुणे, टापि रूपम्। यजनम् इज्या इत्यर्थे 'व्रजयजोर्भावे क्यप् ३।३।९८' इति भावे स्त्रीलिङ्गे क्यपि 'वचिस्वपि०' इति सम्प्रसारणे इज्यशब्दात् टाप्।

तिङन्तः—गम्लृ गतौ इति भौवादिक-गम्-धातोः कर्तरि लिटि, द्वित्वादिकार्ये, 'गमहन'० इत्युपधालोपे जग्मुः। भू सत्तायाम् इति कर्तरि लिटि 'भुवो वुग्लुङ्लिटोः ६।४।८८' इति वुगागमे द्वित्वादौ बभूव। वृतु वर्तने इति भौवादिकस्यात्मनेपदे कर्तरि लिटि ववृते। कर्मणि लिटि बभाषे।

वाच्य०—द्विजमानसैः प्रसादः जग्मे। दिवा पुष्पचयं वर्षुकया बभूवे ( भावे लिट् )। इज्यया निर्व्याजं यथा तथा ववृते। मुनिः कुमारं वचः बभाषे।

शिक्षा—सत्कार्य्ये जाते सात्विकैः प्रसादो व्यञ्जनीयः। एवं हि सत्कार्य्यं-कर्त्तुरुत्साहो वर्द्धतेऽन्येऽपि च तद्दर्शादर्शि सत्कार्य्यं कुर्वन्ति इति ॥३७॥

पुनर्मुनिः कुमारं प्रशंसति—

**महीय्यमाना भवताऽतिमात्रं, सुराऽध्वरे घस्मर-जित्वरेण।**
**दिवोऽपि वज्राऽऽयुध-भूषणाया, हृणीयते वीर-वती न भूमिः ॥३८॥**

अन्वयः—सुराध्वरे घस्मरजित्वरेण भवता अतिमात्रम् महीय्यमाना वीरवती भूमिः वज्रायुधभूषणायाः दिवः अपि न हृणीयते।

हिन्दी—देवयज्ञमें उपद्रवियोंको जीतने वाले आपके द्वारा सम्मानित वीरप्रसविनी यह भूमि इन्द्रभूषणवाली अमरावतीसे अपनेको कम नहीं समझती अर्थात् पृथ्वी स्वर्गसे स्पर्धा करती है।

व्याख्या—सुराध्वरे देवयागे, घस्मरजित्वरेण अमरजयिना भवता (रामेण), महीय्यमाना समर्च्यमाना, वीरवती प्रशस्तवीरशालिनी भूमिः क्षितिः, वज्रायुध-भूषणायाः इन्द्रालङ्कारायाः दिवः अमरावत्या अपि न हृणीयते लज्जते ( तामेव लज्जापयतीति ध्वनिः )। उपेन्द्रवज्रावृत्तम्।

कोशः—यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः।
ह्रियां ह्रीच्छति जिह्रेति लज्जते च हृणीयते—( भट्टमल्लः )।

समासः—सुराणाम् अध्वरः, तस्मिन्। घस्मराणां जित्वरः, तेन। वज्रम् आयुधम् यस्य सः। वज्रायुध इन्द्रः भूषणं यस्याः सा, तस्याः।

तद्धितः—प्रशस्तः वीरः अस्ति यस्यां सा वीरवतीति विग्रहे मतुबन्तात् 'उगितश्च ३।१।६' इति ङीपि वीरवती।

कृदन्तः—घसतीति विग्रहे घस्लृ अदने इति भौवादिकात् घस्-धातोः 'सृघस्यदः क्मरच् ३।२।१६०' इति क्मरचि घस्मरः। जयतीति विग्रहे जि जये इति भौवादिकात् जि–धातोः 'इण्नश्जिसर्तिभ्यः क्वरप् ३।२।१६३' इति क्वरप् प्रत्यये 'ह्रस्वस्य पिति कृति तुक् ६।१।७१' इति तुकि जित्वरः। महीङ् पूजायाम् इति कण्ड्वादि महीय-धातोः कर्मणि लटि, शानचि, 'सार्वधातुके यक् ३।१।६७' इति यकि, अतो लोपे महीय्य+आन इत्यत्र 'आने मुक् ७।२।८२' इति मुगागमे टापि महीय्यमाना।

तिङन्त:—हृणीङ् रोषणे लज्जायाञ्चेति हृणीय-धातोर्यगन्तात् लटि हृणीयते। मतान्तरे ह्लिणीङ् इत्यपि धातु:।

वाच्य०—महीय्यमानया वीरवत्या भूम्या न हृणीय्यते।

शिक्षा—कृतज्ञताप्रकाशने कर्तुरुत्साहवृद्धि: प्रकाशकस्य चोपकर्तु: प्रत्युपकर्तव्यतया भारापगम इत्यादि बहुलाभात् उपकारं प्रत्युपकारेण योजयेदिति ॥३८॥

भूयो रामं प्रशंसति मुनि:—

**बलिर् बबन्धे, जल-धिर् ममन्थे, जह्रेऽमृतं, दैत्य-कुलं विजिग्ये।**
**कल्पाऽन्त-दु:स्था वसुधा तथोहे, येनैष भारोऽपि-गुरुर् न तस्य ॥३९॥**

अन्वय:—हे राघव! येन (भवता) बलि: बबन्धे, जलधि: ममन्थे, अमृतम् जह्रे, दैत्यकुलं विजिग्ये तथा कल्पान्तदु:स्था वसुधा ऊहे, तस्य (भवत:) एष भार: अतिगुरु: न।

हिन्दी—जिसने बलि बांधा, समुद्र मथा, अमृत हरा, दैत्यवंशको जीता, प्रलयान्तमें हिरण्याक्षसे हरली गयी वसुधाका पुन: उद्धार किया, ऐसे असाधारण कार्य करने वाले आपके लिये यह भार कोई बड़ा भार नहीं है।

व्याख्या—हे राघव, येन भवता बलि: विरोचनसुत: बबन्धे (वामनरूपे) संयेमे। जलधि: समुद्र: ममन्थे मथित: (कच्छपावतारे)। अमृतं सुधा जह्रे अहारि (मोहिनीरूपेण)। दैत्यकुलम् दानववंश: विजिग्ये वशं निन्ये (अनेकधा)। तथा कल्पान्तदु:स्था प्रलयापहृता (हिरण्याक्षेण) वसुधा पृथ्वी, ऊहे=उद्धृते (वराहरूपेण)। तस्य भवत: एष यागरक्षारूप: भार: कार्य्यम् अतिगुरु: महाप्रयास: न नास्ति। येनेदृशमद्भुतं कर्म कृतम् तस्य कृते इदं यज्ञसंरक्षणं कर्म तु वामहस्तक्रीडनमित्यर्थ:। अर्थापत्त्या सह एकस्यानेकक्रियायोगाद् दीपकमपि।

कोश:—असुरा दैत्यदैतेय-दनुजेन्द्रारिदानवा:।
वंशो वेणौ कुले वर्गे पृष्ठाद्यवयवेऽपि च।

समास:—दैत्यानां कुलम्। कल्पस्य अन्त:, तस्मिन् दु:स्था। अत्यन्त: गुरु: अतिगुरु:। अत्युपर्गेण सह 'कुगतिप्रादय: २।२।२०' इति समास:।

तिङन्त:—बन्ध बन्धने इति धातो: कर्मणि लिट् 'असंयोगाल्लिट् कित् १।२।५' इति लिटोऽकित्त्वात् अनुनासिक-लोपाभाव:। ममन्थेऽत्रापि तदेव। हृधातो: लिटि द्वित्वादि कार्यम्। जिधातोर्लिटि द्वित्वादौ 'सन् लिटोर्जे: ७।३।

५७' इति कुत्वम् । 'एरनेकाचोऽसयोगपूर्वस्य ६।४।८२' इति यण् । ऊहे इत्यत्र वह् धातो. सम्प्रसारणे द्वित्वम् ।

वाच्य०— य: बलि बबन्ध । जलधि ममन्थ । दैत्यकुल विजिगाय । कल्पान्त-दु:स्था वसुधाम् उवाह । तस्य अनेन भारेण अतिगुरुणा न भूयते ॥३९॥

सम्प्रति मुनि: रामं मिथिला नयति—

**इति ब्रुवाणो मधुरं हितञ्च, तमाञ्जिहत्[1] मैथिल-यज्ञ-भूमिम् ।**
**रामं मुनि प्रीत-मना मखाऽन्ते, यशांसि राज्ञां निजिघृक्षयिष्यन् ॥४०॥**

अन्वय.—मखान्ते प्रीतमना: इति मधुर हित च ब्रुवाण: मुनि: राज्ञां यशांसि निजिघृक्षयिष्यन् तं राम मैथिलयज्ञभूमिम् आञ्जिहत् ।

हिन्दी—यज्ञोपरान्त प्रसन्न-चित्त, मधुर और हितकी बातें करते हुए राजाओके यशोको रामचन्द्रके द्वारा अभिभूत करानेको इच्छा करते हुए मुनि रामचन्द्रको मैथिलराज विदेहकी यज्ञभूमिमे ले गये ।

व्याख्या – मखान्ते -यज्ञावसाने, प्रीतमना: प्रसन्नचेता इति इत्थ पूर्वोक्तं मधुर मनोहरं हितं पथ्य च ब्रुवाण: निगदन् मुनि: विश्वामित्र: राज्ञा नृपाणां यशासि कीर्ती: निजिघृक्षयिष्यन् अभिबिभावयिषिष्यन् त पूर्वोक्त राघवं, मैथिलयज्ञभूमिम् विदेहराजाध्वरशालाम् आञ्जिहत् अजीगमत् । एकस्य मुने-रनेकक्रियायोगाद्दीपकम् ।

कोश:—यज्ञ: सवोऽध्वरो याग: सप्ततन्तुर्मख: क्रतु:—( ३८ श्लोके ) ।
यश: कीर्ति: समज्ञा च 'इत्यमर:

समास:—मैथिलस्य यज्ञभूमि: । प्रीत मन यस्य प्रीतमना: । मखस्य अन्त मखान्त:, तस्मिन् ।

कृदन्त:—ब्रूञ् व्यक्तायां वाचि इति अदादिस्थस्य ब्रूधातो शानचि 'अचिश्नु ६।४।७७' इति उवङि, णत्वे, सौ ब्रुवाण. । ग्रह्धातो: 'सनिग्रहगुहोश्च'

---

[1] टिप्पणी—आञ्जिहत् इस प्रयोगकी सिद्धि मे ऊपर द्विर्वचनेऽचि १।१।५९' इस सूत्रका- द्वित्वनिमित्ते अचि अच आदेशो न स्याद् द्वित्वे कर्तव्ये यही अर्थ लिया गया है । वह सरल पडता है । स्थानिवद्भावपक्षवाला नही । तथा अट् आट् आगम भी प्रारम्भमे कर देनेसे लिखने मे गौरवके कारण अन्तमें किया जाने वालाही पक्ष रखा है ।

इतीण्निषेधे, 'सन्यङोः' इति द्वित्वादिकार्ये, 'सन्यतः ७।४।७९' इति अभ्यासस्येत्वे, 'रुदविद० १।२।८' इति सनः कित्वात् 'ग्रहिज्या० ६।१।१६' इति सम्प्रसारणे, हस्य ढत्वे, भष्भावेन गस्य घत्वे 'षढोः कः सि ८।२।४१' ढस्य कत्वे, 'आदेश-प्रत्यययोः ८।३।५९' इति षत्वे, जिघृक्षन्तं प्रेरयिष्यति इति विग्रहे णिचि, जिघृक्षि-धातोः लृटि, 'लृटः सद्वा ३।५।१४' इति शतृ प्रत्यये, स्य विकरणे, 'आर्द्धधा० ७।२।३५' इति इटि, गुणादिकार्ये नि—इत्युपसर्गयोगे निजिघृक्षयिष्यदित्यतः सौ रूपम् निजिघृक्षयिष्यन् ।

तद्धितः—मिथिलानां राजेति विग्रहे, 'जनपदशब्दात् क्षत्रियादञ् ४।१।१६८' इति तस्य राजन्यपत्यवदिति निर्देशात् अञि, आदिवृद्धौ, मैथिलो राजा, तस्य यज्ञभूमिः ।

तिङन्तः—अहि गतौ इति भौवादिकात् लुप्तानुबन्धात् अह् इत्यतः 'इदितो नुम् ७।१।५८' इति नुमि, ततो ण्यन्तात् धातोः लुङि, तिपि, च्लौ, तस्य 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३।१।४८' इति चङि 'द्विर्वचनेऽचि १।१।५९' इति णिलोपं निषिध्य 'चङि ६।१।११२' इति हि-शब्दस्य द्वित्वादिकार्ये ततो 'णेरनिटि ६।४।५१ इति णिलोपे, आडागमे, वृद्धौ, आञ्जिहत् ।

वाच्य०—ब्रुवाणेन मुनिना प्रीतमनसा निजिघृक्षयिष्यता स रामो मैथिलभूमिम् आंहि ।

शिक्षा—अवश्यभव्येष्वनवग्रह० ( नैषध १।१२० ) । 'मतिरुत्पद्यते तादृग्व्यवसायोऽपि तादृशः' इत्यादि नीति-वाक्यानि शिक्षयति ॥४०॥

मिथिलानगरीस्था जना रामलक्ष्मणौ वीक्ष्य वितर्कयन्ति-

**इतः स्म मित्रावरुणौ किमेतौ, किमश्विनौ सोम रसं पिपासू ।**
**जनं समस्तं जनकाऽऽश्रम-स्थ रूपेण तावौजिहतां नृसिंहौ ॥४१॥**

अन्वयः—नृसिंहौ तौ रूपेण ( स्वकीयेन ) जनकाश्रमस्थं समस्तं जनम् एतौ सोमरसं पिपासू मित्रावरुणौ इतः स्म किम् ? ( आहो ) अश्विनौ ( इतः स्म ) किम् ? इति औजिहताम् ।

हिन्दी—उन नरसिंहोंने अपने सौन्दर्य्यसे जनक-नगर निवासी जनों को ऐसा तर्क करनेकेलिये विवश कर दिया कि क्या ये दो सोमरस पीनेकी इच्छा वाले मित्रावरुण देव हैं या अश्विनीकुमार ही आगये हैं ?

**व्याख्या**—नृसिंहौ पुरुषश्रेष्ठौ तौ प्रसिद्धौ रामलक्ष्मणौ, रूपेण स्वीय—सौन्दर्येण जनकाश्रमस्थं विदेहनगरनिवासिनं समस्तं सम्पूर्णं जनं लोकम् एतौ ( समागतौ ) इमौ सोमरसं यज्ञभागरूपं सोमलतासारं पिपासू = पानेच्छू मित्रावरुणौ आदित्याप्पती ( मित्रावरुणसंज्ञकौ ) देवौ किम् ? इति प्रश्ने, आहो अश्विनौ अश्वनीकुमारौ किम् इतः स्म आगच्छतः स्म ( इति ) औजिहताम् अतितर्कताम् । सोमरसमित्यत्र 'न लोकाव्यय० २।३।६९' इति षष्ठीनिषेधः । सन्देहालङ्कारः ।

**समासः**—मित्रश्च वरुणश्चेति 'देवताद्वन्द्वे च ६।३।२६' इति आनङि मित्रावरुणौ । जनकस्य आश्रमस्थः जनकाश्रमस्थः, तम् । नरौ सिंहौ इव 'उपमितं व्याघ्रादिभिः २।१।५६' इति समासः ।

**कृदन्तः**—पातुमिच्छतः पिपासू = पा पाने इति भौवादिकात् पा-धातोः सनि, द्वित्वे, अभ्यासकार्य्ये, पिपास धातोः 'सनाशंसभिक्ष उः ३।२।१६८' इति उप्रत्यये अतो लोपे पिपासू द्विवचनरूपम् । जनकाश्रमे सुबन्ते उपपदे 'सुपि स्थः ३।२।४' इति क प्रत्यये उपपदसमासे द्वितीयान्तं रूपम् ।

**तिङन्तः**—ऊह वितर्के इति ण्यन्ताल्लुङि तसि,तामादेशे, च्लौ,तस्य 'णिश्रि० ३।१।४८' चङि,'द्विर्वचनेऽचि १।१।५९' इति णिलोपं निरुध्य द्वित्वे कर्तव्ये 'चङि ६।१।११' इत्यनेन अजादेर्द्वितीयस्येति हि-शब्दस्य द्वित्वेऽभ्यासकार्ये, ततो णिलोपे, आडागमे वृद्धौ औजिहताम् इति ।

**वाच्य०**—पिपासुभ्यामेताभ्यां मित्रावरुणाभ्यामश्विभ्यामीयतेस्म किम् इति जनकाश्रमस्थः समस्तः जनः ताभ्यां नृसिंहाभ्याम् औहि । ण्यन्तस्याण्यन्तस्य च कर्मणि समानमेव रूपमिति ण्यन्तस्येदं ज्ञेयम् । प्रयोज्यकर्तुः बुद्ध्यर्थधातुयोगात् कर्मत्वं तस्मिन्नेव प्रयोज्यकर्मणि लुङ् ।

**शिक्षा**—यत्राकृतिस्तत्र गुणा वसन्तीति गुणमूलकमेवैवं जनानुमानम् । अतश्च सन्तानसौन्दर्योत्पादने मातापितृभ्यां प्रयतितव्यमिति ॥ ४१ ॥

जनककर्तृकधनुष्प्रदानं रामकर्तृकतद्भङ्गमप्याख्याति कविः—

**अजिग्रहत् तं जनको धनुस् तद्, येनार्ऽदिदद् दैत्य-पुरं पिनाकी ।**
**जिज्ञासमानो बलमस्य बाह्वोर्, हसन्नभाङ्क्षीद् रघुनन्दनस् तत् ॥४२॥**

**अन्वयः**—जनकः अस्य बाह्वोः बलं जिज्ञासमानः तं तद् धनुः अजिग्र-हत् येन ( धनुषा ) पिनाकी दैत्यपुरम् आर्दिदत् । हसन् रघुनन्दनः तत् अभाङ्क्षीत् ।

**हिन्दी**—जनकजीने उनका बाहुबल जाननेकी इच्छासे रामको वह धनुष ग्रहण कराया जिससे शिवजीने त्रिपुरासुरके तीनों पुरोंका दाह किया था । हँसते हँसते रामचन्द्रने उसे तोड़ दिया ।

**व्याख्या**—जनको विदेहो राजा, अस्य रामस्य, बाह्वोः भुजयोः, बलं पौरुषं, जिज्ञासमानः बुभुत्समानः, तं रामं, तद् प्रसिद्धं धनुः चापम् अजिग्रहत् आर्पिपत्, येन धनुषा पिनाकी शिवः दैत्यपुरम् त्रिपुरासुरनगरम् आर्दिदत् अधाक्षीत् । हसन् स्मयमानः रघुनन्दनः रामः तद् प्रसिद्धं घोरम् धनुः ( शिवस्य ) अभाङ्क्षीत् अभनक् भग्नवानित्यर्थः । रामातिशयसम्पत्तिवर्णनादुदात्तालङ्कारः ।

**कोशः**—शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः ।
मृत्युञ्जयः कृत्तिवासाः पिनाकी प्रमथाधिपः ।
पिनाकोऽजगवं धनुः । इति ।

**समासः**—दैत्यानां पूः दैत्यपुरम् 'ऋक्पूरब्धूः पथामानक्षे ५।४।७४' इति अ-प्रत्ययः । स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिशेरते इति नपुंसकत्वम् । एकवचनमतन्त्रम्, दैत्यपुराणीत्यर्थः ।

**कृदन्तः**—जिज्ञासमानः-ज्ञातुमिच्छति इत्यर्थे क्र्यादिस्थ-ज्ञा-धातोः सनि, द्वित्वादिकार्य्ये, 'ज्ञाश्रुस्मृदृशां सनः १।३।५७' इत्यात्मनेपदे, शानचि, 'आने मुक्' इति मुगागमे रूपम् । हसन्निति शतरि, पुंलिङ्गे 'उगिदचाम् ७।१।७०' इति नुमि सुलोपे संयोगान्तलोपे ।

**तिङन्तः**—ग्रह धातोः 'हेतुमति च ३।१।२६' इति णिचि उपधावृद्धौ, ग्राहीत्यस्य धातुत्वाल्लुङि, तिपि, च्लौ, तस्य 'णिश्रिद्रुस्रुभ्यः० ३।१।४८' इति चङि, 'णेरनिटि--६।४।५१' इति णिलोपे, 'णौ चङ्युपधाया ह्रस्वः ७।४।१' इति ह्रस्वे 'चङि ६।१।११' इति द्वित्वे, अभ्यासकार्ये 'सन्वल्लघुनि चङ्परेऽ-नग्लोपे ७।४।९३' इति सन्वद्भावे 'सन्यतः ७।४।६' इतीत्वे, अडागमे, अजिग्रहत् । आर्दिदत् इति—अर्द हिंसायाम् इति चौरादिकात् ण्यन्तात् आर्दि-इत्यतो

लुङि, अजादेर्द्वितीयस्येति रेफवर्जितस्य, दिमात्रस्य द्वित्वे, अभ्यासकार्ये, पश्चाद् णिलोपे, अडागमे, वृद्धौ आर्दिदत् । अभाङ्क्षीत्-मञ्जो आमर्दने इति रुधादिस्थ मञ्ज्-धातोर्लुङि, सिचि, अपृक्तस्येटि'वदव्रजहलन्तस्याचः ७।२।३' इति वृद्धौ, चोः कौ, सस्य षत्वेऽडागमे रूपम् ।

**वाच्यपरि०**—जनकेन जिज्ञासमानेन स तत् धनुः अग्राहि, येन पिनाकिना दैत्यपुरम् आर्दि । हसता रघुनन्दनेन तत् अभाजि अभञ्जि वा ।

**शिक्षा**—'कोऽतिभारः समर्थानाम्' 'किं दूरं व्यवसायिनाम्' 'को विदेशः सविद्यानां' 'कः परः प्रियवादिनाम्'—इति समर्थानां कृते न किमपि दुष्करम् इति शिक्षयति पद्यम् ॥४२॥

ततो विदेहो दशरथाह्वानाय दूतान् प्रणिहोति—

**ततो नदीष्णान् पथिकान् गिरिज्ञानाह्वायकान् भूमिपतेरयोध्याम् ।**
**दित्सुः सुतां योधहरैस् तुरङ्गैर्, व्यसर्जयन् मैथिल-मर्त्य-मुख्यः ॥४३॥**

**अन्वयः**--ततः सुतां दित्सुः मैथिलमर्त्य-मुख्यः भूमिपतेः आह्वायकान् नदीष्णान् गिरिज्ञान् पथिकान् योधहरैः तुरङ्गैः अयोध्याम् व्यसर्जयत् ।

**हिन्दी**—तब अपनी पुत्रीका विवाह रामचन्द्रके साथ करनेकी इच्छा वाले मिथिलाधिपति जनकने महाराज दशरथको बुलानेके लिये कुशल तैराक, प्रबल पर्वतरोही तथा चतुर घुड़सवारोंको अयोध्या भेजा ।

**व्याख्या**—ततः धनुर्भङ्गतः पश्चात्, सुतां दुहितरं दित्सुः अर्पिपिषुः, मैथिलमर्त्यमुख्यः ( जनकः ) विदेहनरेन्द्रः भूमिपतेः राज्ञः ( दशरथस्य ), आह्वायकान् आकारकान्, नदीष्णान् नदीतरणक्षमान्, गिरिज्ञान् पर्वत-पथज्ञान् पथिकान् दूतान्, योधहरैः भटवाहकैः, तुरङ्गैः हयैः, अयोध्यां कोशलराजधानीम् व्यसर्जयत् प्राहिणोत् । दूतप्रेषणहेतोरुक्त्या काव्यलिङ्गं, साभिप्रायविशेषणतया परिकरोऽपि ।

**कोशः**—पान्थः पथिक इत्यपि । महायोधाश्च योद्धारः ।
घोटसैन्धवगन्धर्वा हयवाजितुरङ्गमाः—इति रभसः ।

**समासः**—मर्त्येषु मुख्यः, मैथिलश्चासौ मर्त्यमुख्यः मैथिलमर्त्यमुख्यः । नद्यां स्नान्तीति सप्तम्यन्त-पूर्वात् स्ना-धातोः 'सुपि स्थः ३।२।४' इत्यत्र सुपि इति

योगविभागसूत्रेण कप्रत्यये, आलोपे,'उपपदमतिङ् २।२।१९' इति समासे, उभयथा प्रातिपदिकतया सुपो लुकि, 'निनदीभ्यां स्नातेः कौशले ८।३।८९' इति षत्वे नदीष्णशब्दात् शसि रूपम् । भूमेः पतिः भूमिपतिः, तस्य ।

कृदन्तः—दातुमिच्छति इत्यर्थे 'सनि मीमाघु० ७।४।५४'इत्यादिना सिद्धाद् दित्स इति सन्नन्तात् उप्रत्यये दित्सुः। गिरिं जानन्ति इति गिरि-ज्ञास्तान् गिरिज्ञान् । गिरिम् इति कर्मोपपदात्-ज्ञा-धातोः'इगुपधज्ञाप्रीकिरः कः ३।१।१३५'इति कप्रत्ययः। आह्वयन्ति इति विग्रहे आङ्पूर्वकात् ह्वेञ्-धातोः भौवादिकात् 'आदेच उपदेशे ऽशिति ६।१।४५' इति एच आत्वे आह्वा इत्यतः 'ण्वुल्तृचौ ३।१।१३३' इति ण्वुलि 'युवोरनाकौ ७।१।१' इति अकादेशे 'आतोयुक् चिण्कृतोः ७।३।३३' इति युकि-आह्वायकशब्दस्य शसि रूपम् । युध्यन्ते इति योधाः । युध् धातोः पचाद्यचि योधान् हरन्ति इति विग्रहे 'वयसि च ३।२।१०' इत्यचि, गुणे, हर इत्यनेनोपपदे समासे विभक्तेर्लुकि योधहराः, तैः ।

तद्धितः—पन्थानं गच्छन्ति इति पथिकाः । पथिन् शब्दात् 'पथःष्कन् ५।१ ७५' इति ष्कन् । मुखमेव मुख्यः इत्यर्थे 'शाखादिभ्यो यत् ५।३।१० इति यत् । पथकान् इति पाठे 'तत्र कुशलः पथः ५।२।६३' इति वुन् ।

तिङन्तः—विपूर्वकात् सृज विसर्गे इति तौदादिक सृज्-धातोः विसर्जि इति ण्यन्ताल्लङि व्यसर्जयत् ।

वाच्य०—सुता दित्सुना मैथिलमर्त्यमुख्येन नदीष्णाः पथिका गिरिज्ञा आह्वयका अयोध्यां व्यसर्ज्यन्त ।

शिक्षा—'नामन्त्रमक्षरं किञ्चिन्नहि द्रव्यमनौषधम्','नायोग्यः पुरुषः कश्चिद् योक्ता तत्र सुदुर्लभः'—इत्यभियुक्तोक्तेः यथायोग्यमेव कार्यं करणीयमिति शिक्षयति पद्यम् ॥४३॥

सम्प्रति राज्ञो दशरथस्य मिथिलाप्रस्थानमाख्याति—

**क्षिप्रं ततोऽध्वन्य-तुरङ्ग-यायी, यविष्ठवद्-वृद्ध तमो ऽपि राजा ।**
**आख्यायकेभ्यः श्रुत-सुनुवृत्तिरग्लान-यानो मिथिलामगच्छत् ॥४४॥**

अन्वयः—ततः आख्यायकेभ्यः श्रुतसूनुवृत्तिः अध्वन्यतुरङ्गयायी अग्लानयानः वृद्धतमः अपि राजा यविष्ठवत् क्षिप्रं मिथिलाम् अगच्छत् ।

हिन्दी—दूतोंसे पुत्र-समाचार पाकर अत्यन्त वृद्ध होते हुए भी राजा नवयुवकके समान शीघ्रगामी घोड़ोंके रथपर चढ़कर शीघ्र मिथिलाको चल दिये।

अन्वयः—ततः अनन्तरम्, आख्यायकेभ्यः कथकेभ्यः दूतेभ्यः श्रुतसूनुवृत्तिः आकर्णितसुतोदन्तः, अध्वन्यतुरङ्गयायी शीघ्रगाश्वगामी, अग्लानयानः दृढरथः, वृद्धतमः अत्यन्तस्थविरः अपि यविष्ठवत् अत्यन्तनवयुवकवत्, क्षिप्रम् शीघ्रम्, मिथिलां जनकनगरीम्, अगच्छत् अयात्। यविष्ठवत् द्रुतगमनाभिधानात् वृद्धतमस्यापि गतिः यविष्ठवदस्तीत्युपमालङ्कारः।

कोशः—घोटके पीतितुरगतुरङ्गाश्व-तुरङ्गमाः।

समासः—सूनोः वृत्तिः। श्रुता सूनुवृत्तिः येन सः। अध्वन्याश्च ते तुरङ्गाः, तैः याति तच्छीलः अध्वन्यतुरङ्गयायी। अग्लानं यानं यस्य सः।

कृदन्तः—आख्यान्ति इत्यर्थे आङ्पूर्वकात् ख्या धातोः 'ण्वुल्तृचौ ३।१।१३३' इति ण्वुलि, युगागमे आख्यायक-शब्दात् पञ्चमीबहुत्वे रूपम्। कृतात्वाद् ग्लै-धातोः 'निष्ठा ३।२।१०२' इति क्त-प्रत्यये 'संयोगादेरातो धातोर्यण्वतः ८।२।४३' इति तस्य नत्वे ग्लानः।

तद्धितः—अध्वानमलं गच्छन्ति इति विग्रहे 'अध्वनो यत्खौ ५।२।१६' इति यति 'ये चाभावकर्मणोः ६।४।१६८' इति प्रकृतिभावे अध्वन्याः। अतिशयितो युवा इति विग्रहे युवन् शब्दात् 'अतिशायने तमबिष्ठनौ ५।३।५५' इति इष्ठनि, 'स्थूलदूर० ६।४।१५६' इति यणादिपरलोपे पूर्वस्य च गुणे यविष्ठ-शब्द-सिद्धिः।

तिङन्तः—गम्लृ गतौ इति भौवादिक गम् धातोः लङि, 'इषुगमियमां छः ७।३।७७' इति छत्वे अडागमे अगच्छत् इति

वाच्य०—श्रुतसूनुवृत्तिना अध्वन्यतुरङ्ग-यायिना वृद्धतमेन अग्लानयानेन राज्ञा मिथिला अगम्यत।

शिक्षा—उत्साहेन बलवृद्धिर्जायतेऽतएव वृद्धतमेऽपि यविष्ठप्रवृत्तिः इति दर्शयन् नास्त्युद्यमसमो बन्धुरित्यादिनीतिं शिक्षयति पद्यम् ॥४४॥

जनककर्तृकं दशरथसत्कारमाख्याति—

**वृन्दिष्ठमार्चीद् वसुधाऽधिपानां, तं प्रेष्ठमेतं गुरु-वद् गरिष्ठम्।**
**सद्दृङ्-महान्तं सुकृताऽधिवासं बंहिष्ठ-कीर्तिर्यशसा वरिष्ठम् ॥४५॥**

अन्वयः—सदृक् बंहिष्ठकीर्तिः सः ( जनकः ) वसुधाधिपानां वृन्दिष्ठं प्रेष्ठं गुरुवद् गरिष्ठम् सुकृताधिवासं यशसा वरिष्ठम् एतं महान्तम् तम् ( दशरथम् ) आर्चीत् ।

हिन्दी—सबको एक समान देखने वाले कीर्तिशाली महाराज जनकने राजाओंमें श्रेष्ठ, अत्यन्त प्रिय, गुरुके समान पूज्य, धर्मके आधारभूत आए हुए महायशस्वी राजा दशरथकी पूजा की ।

व्याख्या—सदृक् समदृष्टिः, बंहिष्ठकीर्तिः बहुलतमयशाः, सः प्रसिद्धः जनको राजा, वसुधाधिपानां राज्ञां वृन्दिष्ठं वृन्दारकतमं ( मुख्यमित्यर्थः ) प्रेष्ठं प्रियतमम् गुरुवद् आचार्यवत् गरिष्ठं गुरुतमं, सुकृताधिवासं धर्मस्थानम् यशसा कीर्त्या वरिष्ठम् उरुतमम्, एतम् समागतम् महान्तम् महोदयम् तं प्रसिद्धं दशरथं राजानम्, आर्चीत् अपूपुजत् । अर्चनहेतोर्वाक्यगतत्वात्काव्यलिङ्गं साभिप्राय-विशेषणतया परिकरेण संकरः ।

कोशः—वसुधोर्वी वसुन्धरा । वृन्दारकौ रूपि-मुख्यौ ।

समासः—बंहिष्ठा कीर्तिः यस्य सः । वसुधायाः अधिपाः, तेषाम् । सुकृतस्य अधिवासः, तम् ।

तद्धितः—वृन्दारक प्रिय-गुरु-बहुलोरूणाम् अतिशयेऽर्थे 'अतिशायने तम-बिष्ठनौ ५।३।५५' इति इष्ठनि प्रत्यये 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्र-प्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगवर्षित्रब्द्राघिवृन्दाः ६।४।१५७' इति वृन्दप्रग-बंहवर् इत्यादेशे वृन्दिष्ठ-प्रेष्ठ-गरिष्ठ-बंहिष्ठ-वरिष्ठ इति रूपाणि ज्ञेयानि ।

कृदन्तः—समानं पश्यति इति विग्रहे समानपूर्वकात् दृश्-धातोः 'समानान्य-योश्च ३।२।६०' इति वार्तिकेन क्विपि 'दृग्दृशवतुषु ६।३।८९' इति समानस्य सादेशे सदृश् शब्दात् सौ सदृक् इति । अधिवसति अस्मिन् इति अधिकरणेऽर्थे 'हलश्च ३।३।१२१' इति घञि 'अत उपधायाः ७।२।११' इति वृद्धौ अधिवास-शब्दसिद्धिः ।

वाच्य०—सदृशा बंहिष्ठकीर्तिना वृन्दिष्ठः प्रेष्ठः गरिष्ठः सुकृताधिवासः एषः महान् वरिष्ठः राजा आर्चि ।

शिक्षा—अतिथिः सर्वथाऽर्चनीयः । 'षडर्घ्या भवन्ति' इति श्रुतिरपि उप-दिशति इति शिक्षेतः पद्यात् लभ्यते ॥४५॥

सम्प्रति जनको दशरथं स्तौति—

**त्रि-वर्गपारीणमसौ भवन्तमध्यासयन्नासनमेकमिन्द्रः ।**
**विवेक-दृश्व-त्वमगात् सुराणां, तं मैथिलो वाक्यमिदं बभाषे ॥४६॥**

**अन्वयः**—असौ इन्द्रः त्रिवर्गपारीणं भवन्तम् एकम् आसनम् अध्यासयन् सुराणां विवेक-दृश्वत्वम् अगात् । इदं वाक्यम् मैथिलः (जनकः) तम् (दशरथम्) बभाषे ।

**हिन्दी**—त्रिवर्गपारीण आपको एक आसनपर बैठाने वाले इन्द्र देवताओं-के बीचमें विवेकदर्शी माने गये-यह वाक्य जनकने दशरथजीसे ( अभिनन्दन रूपमें ) कहा ।

**व्याख्या**—असौ विप्रकृष्टः इन्द्रः देवराजः, त्रिवर्गपारीणम् धर्मार्थ-कामोत्तीर्णम् भवन्तम् दशरथम् एकम् अभिन्नम् आसनम् स्तरणम् अध्यासयन् उपवेशयन् (अर्धासनं स्वीयं भवते दत्त्वा) सुराणां देवानां विवेकदृश्वत्वम् विचार-शीलत्वम्, अगात् अगच्छत् । इदम् पूर्वोक्तं वाक्यम्, मैथिलः मिथिलाधिपतिः राजा जनकः, तम् दशरथं राजानं, बभाषे उवाच । प्रस्तुते दशरथेऽप्रस्तुतेन्द्र-वर्णनात् समासोक्तिः, अप्रस्तुतप्रशंसया सन्देह-सङ्करः ।

**कोशः** त्रिवर्गो धर्म-कामार्थाः—इत्यमरः ।

**समासः**—त्रिवर्गस्य पारीणः, तम् त्रिवर्गपारीणम् ।

**कृदन्तः**—विवेकं दृष्टवान् इति विग्रहे विवेकम् इति कर्मोपपदात् दृश्—धातोः 'दृशेः क्वनिप् ३।२।९४' इति क्वनिपि उपपदसमासे विवेकदृश्वन् शब्दस्य सिद्धौ ततः भावे त्वप्रत्यये सौ रूपम् ।

**तद्धितः**—विवेकदृश्वनो भावः इत्यर्थे 'तस्य भावस्त्वतलौ ५।१ ११९' इति त्वप्रत्यये विवेक-दृश्वत्वम् । पारं गामीत्यर्थे 'अवारपारात्यन्तानु-कामं गामी ५।२।११ इति सूत्रे विपरीत-विगृहीत-विपर्यस्त-ग्रहणात् पारशब्दादपि खप्रत्यये 'आयनेयीनीयियः० ७।१।२' खस्येनादेशे पारीण-शब्दसिद्धिः ।

**तिङन्तः**—'इणो गा लुङि २।४।४५' इति इणो गादेशे 'गातिस्था० २।४।७७' इति सिचो लुकि अगात् ।

**वाच्य०**—अमुना इन्द्रेण अध्यासयता विवेकदृश्वत्वम् आगायि । इदं वाक्यं मैथिलेन स बभाषे ।

शिक्षा—'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः' इति गुणसंग्रहः कार्य इति ॥ ४६ ॥

अधुना रामाय मैथिलसुताप्रदानमाख्याति—

**हिरण्मयी साल-लतेव जङ्गमा, च्युता दिवः स्थास्नुरिवाऽचिर-प्रभा।**
**शशाङ्क-कान्तेरधिदेवताऽऽकृतिः, सुता ददे तस्य सुताय मैथिली ॥४७॥**

अन्वयः—( जनकेन ) हिरण्मयी जङ्गमा साललता इव दिवः च्युता स्थास्नुः अचिरप्रभा इव शशाङ्ककान्तेः अधिदेवताकृतिः मैथिली सुता तस्य (दशरथस्य) सुताय ददे।

हिन्दी—स्वर्णमयी जङ्गमा शालवृक्षकी लताकी तरह आकाशसे गिरी स्थिर तडिल्लताकी तरह चन्द्रकान्तिकी अधिष्ठात्री देवीसी आकृति वाली मैथिली लड़की उनके पुत्रको दी ( अर्थात् सीताका रामके साथ विवाह कर दिया गया )।

व्याख्या—( जनकेन राज्ञा ) हिरण्मयी स्वर्णनिर्मिता, जङ्गमा चरिष्णुः, शालतता शालवृक्षवल्ली इव, दिवः द्योः च्युता पतिता, स्थास्नुः स्थायिनी अचिर-प्रभा विद्युल्लता इव यथा शशाङ्ककान्तेः कौमुद्याः अधिदेवताकृतिः अधिष्ठातृदेव्याकारा मैथिली मैथिलराजजाता सुता दुहिता, तस्य दशरथस्य सुताय सूनवे, ददे वितेरे। अत्र एकत्वमुपलक्षणम्। चतस्रः सुताः चतुर्भ्यः सुतेभ्यः ददिरे। तथाहि रामाय सीता, भरताय माण्डवी, लक्ष्मणाय उर्मिला, शत्रुघ्नाय श्रुतकीर्तिः इति क्रमः। उपेन्द्रवज्राछन्दः। उपमानादुपमेयाधिक्याद् व्यतिरेकः। सुतायाः सुतेन समोऽप्यलङ्कार इति सङ्कर एव।

कोशः—आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे—इत्यमरः।

समासः—शालस्य लता शालतता। अचिरं प्रभा यस्याः सा। अधिष्ठात्री चासौ देवता अधिदेवता। अत्र 'विशेषणं विशेष्येण बहुलम् २।१।५७' इति सूत्रेण समासे, ततः अधिदेवताया आकृतिरिव आकृतिर्यस्याः सा इति विग्रहे 'सप्तम्युपमान-पूर्वपदस्योत्तरपदलोपश्च वाच्यः' इति वार्तिकबलात् उपमानलोपपूर्वकसमासे अधिदेवताकृतिः सुता-विशेषणम्।

तद्धितः—हिरण्यस्य विकारः स्त्रीचेत् हिरण्मयी। विकारार्थे मयटि

'दाण्डिनायनहास्ति० ६।४।१४७' इति टि-यलोपनिपातनात् साधुः। मैथिलस्य अपत्यं स्त्री मैथिली इत्यर्थे मैथिल शब्दात् 'अत इञ् ४।१।९५' इति इञ् प्रत्यये मैथिलि शब्दात् 'इतो मनुष्य जातेः ४।१।६५' इति ङीपि मैथिली।

कृदन्तः– सूयते स्म इति सुतः सुता च। षु प्रसवैश्वर्ययोः इति कर्मणि निष्ठाक्त-प्रत्यये सुतः। ततश्च स्त्रीलिङ्गे टापि सुता। अत्यर्थं भूयो भूयो गच्छतीति विग्रहे गम् धातोः यङि,'नुगतोऽनुनासिकस्य ७।४।८५'इति नुकि जङ्गम्य-धातोः पचाद्यचि 'यङोऽचि च २।४।७४' इति यङो लुकि, जङ्गमशब्दात् टापि जङ्गमा। आक्रियते ऽनयेति विग्रहे 'अकर्तरि च कारके संज्ञायाम् ३।३।१९' इति अनुवर्तमाने 'स्त्रियां क्तिन् ३।३।९४' इति क्तिन् प्रत्यये, कित्वात् गुणाभावे आकृतिः।

तिङन्तः—दा धातोः कर्मणि लिटि, द्वित्वादिकार्ये 'आतो लोप इटि च ३।३।६४' इत्यालोपे ददे।

वाच्य०—हिरण्मयीं शाललताम् इव जङ्गमाम् च्युतां स्थास्नुम् अचिरप्रभाम् इव अधिदेवताकृतिम् सुताम् ददौ (जनकः)।

शिक्षा—'योग्यं योग्याय योजयेत्' इत्येव शिक्षयति पद्यम् ॥४७॥

कन्यादानानन्तरम् रामकर्तृकं पाणिग्रहणसंस्कारविधिं वक्ति—

**लब्धां ततो विश्वजनीन-वृत्तिस् तामात्मनीनामुदवोढ रामः।**
**सद्-रत्न-मुक्ताफलभर्म-भूषां, सम्बंहयन्तीं रघुवर्ग्य-लक्ष्मीम् ॥४८॥**

अन्वयः—ततः विश्वजनीनवृत्तिः रामः लब्धाम् आत्मनीनाम् सद्रत्नमुक्ताफलभर्मभूषां रघुवर्ग्यलक्ष्मीं सम्बंहयन्तीं ताम् उदवोढ।

हिन्दी—तब सबके हित-साधनकर्ता रामने अपना हित करनेवाली अच्छे रत्न मोती सोनेके गहने वाली, रघुवंशकी श्रीको खूब बढ़ानेवाली उस सीताका पाणिग्रहण संस्कार किया। योंही अन्य भाइयोंने भी अपनी-अपनी भार्य्याओंका पाणिग्रहण संस्कार किया।

व्याख्या—ततः दानानन्तरम् ( कन्यादानानन्तरमेवाग्निसाक्षिकं सप्तपदी-क्रमणान्तम् आर्य्याणां पाणिग्रहणसंस्कारविधिर्भवति तं सूचयति ), विश्वजनीन-वृत्तिः सकल-जनहित-व्यापारः, रामः राघवः, लब्धाम् जनकद्वारा कन्यादान-विधिना प्राप्ताम्, आत्मनीनां स्वहितसम्पादिकां, सद्रत्नमुक्ताफलभर्मभूषाम्

बहुमूल्यमणिमौक्तिकहीरकालङ्कारम्, रघुवर्य्यलक्ष्मीं रघुवंशश्रियम् संबहयन्तीम् संवर्द्धयन्तीम् ताम् पूर्वोक्तां सीताम् उदवोढ पर्यणैषीत्। इन्द्रवज्रावृत्तम्। अत्रापि राम-कर्तृकोद्वहनमुपलक्षणम् सर्वभ्रातॄणां स्वस्वभार्योद्वहनमूह्यम्। उद्वहनहेतूल्लेखात्काव्यलिङ्गम्। विश्वजनीनस्यात्मजनीनताऽर्थात् सिद्धेति अर्थापत्त्या संकरः।

कोशः—स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्।
तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम्।

समासः—रत्नानि च मुक्ताफलानि च भर्माणि च इति द्वन्द्वे, सन्ति च तानि रत्नमुक्ताफलभर्माणि सद्रत्न-मुक्ताफलभर्माणि इति कर्मधारयः। ततः सद्रत्न-मुक्ताफलभर्मणां भूषा यस्याः सा इति व्यधिकरणबहुव्रीहिः। रघुवर्य्या चासौ लक्ष्मीः रघुवर्य्य-लक्ष्मीः, ताम्। कर्मधारयः।

तद्धितः—विश्वजनेभ्यः हिता विश्वजनीना 'आत्मन्विश्वजनभोगोत्तरपदात् खः ५।१।६' इति खप्रत्यये, ईनादेशे। आत्मने हिता आत्मनीना, अत्रापि तथैव। रघुवर्गे भवा रघुवर्ग्या 'वर्गान्ताच्च ४।३।६३' इत्यनुवृत्तौ 'अशब्दे यत्खावन्यतरस्याम् ४।३।६४' इति यति रघुवर्ग्यशब्दात् टापि रघुवर्ग्या इति।

कृदन्तः—बहुलां करोति बंहयति इति विग्रहे बहुला शब्दात् 'तत्करोति तदाचष्टे' इति णिचि, इष्ठवद्भावात् पुंवद्भावे, 'प्रियस्थिर० ६।४।१५७' इति बहुलशब्दस्य बंहादेशे च पश्चात् समुपसर्गयोगेन संबंहि धातोः लटि तस्य शत्रादेशे शपि गुणे संबंहयत् शब्दात् 'उगितश्च ४।१।६' इति ङीपि 'शप्श्यनोर्नित्यम् ७।१।६१' इति नुमि संबंहयन्तीम्।

तिङन्तः—उत्पूर्वकात् स्वरितेतो वह्-धातोः लुङि 'झलो झलि ८।२।२६' इति सलोपे 'होढः ८।२।३१' इति ढत्वे 'झषस्तथोर्धोऽधः ८।२।४०' इति तस्य धत्वे, ष्टुत्वेन धस्य ढत्वे, ढलोपे, 'सहिवहोरोदवर्णस्य ६।३।११२' इति ओत्वे, अडागमे, उपसर्गयोगे उदवोढ।

वाच्य०—विश्वजनीनवृत्तिना रामेण लब्धा आत्मनीना सद्रत्नमुक्ताफलभर्म-भूषा संबंहयती सा उदवाहि।

शिक्षा—'स सन्धार्यः प्रयत्नेन स्वर्गमक्षय्यमिच्छता। सुखं चेहेच्छता नूनं योऽधार्य्यो दुर्बलेन्द्रियैः' इति मनूक्ति शिक्षयति पद्यम्॥४८॥

कृतोद्वाहानां रामादीनाम् अयोध्याप्रस्थानमाख्याति—

**सु-प्रातमासादित-संमदं तद्, वन्दारुभिः संस्तुतमभ्ययोध्यम् ।**
**अश्वीय-राजन्यक-हास्तिकाऽऽढ्यमगात् स-राजं बलमध्वनीनम् ॥४६॥**

अन्वयः—सुप्रातम् आसादितसंमदं वन्दारुभिः संस्तुतम् अश्वीयराजन्यक-हास्तिकाढ्यम् अध्वनीनं तद् बलम् सराजम् अभ्ययोध्यम् अगात् ।

हिन्दी—शोभन प्रातःकालमें हर्षमें डूबी मार्ग चलनेमें निपुण हाथी-घोड़ोंसे तथा राजाओंके समूहसे युक्त बन्दीगणोंसे प्रशंसित होती हुई वह सेना अयोध्याकी ओर चल पड़ी ।

व्याख्या—सुप्रातम् सुप्रभातम्, आसादितसम्मदम् प्राप्तप्रमोदम् वन्दारुभिः वन्दिभिः संस्तुतम् प्रशंसितम्, अश्वीय-राजन्यकहास्तिकाढ्यम् हय-क्षत्रिय-हस्ति-समूहसंवलितम् अध्वनीनम् मार्गगमनप्रवीणम् तद् दाशरथं प्रसिद्धं बलं सैन्यं, सराजं सभूपम् ससुतदशरथोपेतम् अभ्ययोध्यम् अयोध्याभिमुखम् अगात् अगमत् । परिकरालङ्कारः ।

कोशः—मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः ।
वन्दारुरभिवादके । वृन्दे त्वश्वीयमाश्ववत् ।
अथ राजकं, राजन्यकं च नृपति-क्षत्रियाणां गणे क्रमात् ।
अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ।

समासः—शोभनं प्रातर्यस्य तत् सुप्रातम् । बहुव्रीहौ 'सुप्रातसुश्व० ५।४।१२०' इति समासान्तोऽच् टिलोपश्च निपात्येते । अश्वीयञ्च राजन्यकञ्च हास्तिकञ्च तेषां समाहारः अश्वीय-राजन्यक-हास्तिकम् 'द्वन्द्वश्च प्राणि० २।४।२' इत्येकवद्भावः । तेन आढ्यम् इति 'तृतीया २।१।३०' इति योगविभागसूत्रेण समासः । राज्ञा युगपत् राज्ञः वा इति विग्रहे यौगपद्ये पश्चादर्थे वा 'अव्ययं विभक्ति० २।१।६' इति समासे 'अव्ययीभावे चाकाले ६।३।८१' इति सहस्य सादेशे 'अनश्च ५।४।१०८' इति समासान्ते टचि 'नस्तद्धिते ६।४।१४४' इति टिलोपे, नपुंसके सराजम् । अयोध्याम् अभिलक्ष्य इति विग्रहे 'लक्षणेनाभिप्रती आभिमुख्ये २।१।१४' इति समासे अव्ययस्य पूर्वनिपाते 'गोस्त्रियोरुपसर्जनस्य १।२।४८' इति ह्रस्वे, नपुंसके अभ्ययोध्यम् ।

तद्धितः—अश्वानां समूहः अश्वीयम् । 'केशाश्वाभ्यां यञ्छौ० ४।२।४८'

इति वैकल्पिके छे, तस्य ईयादेशे अश्वीयम्। राज्ञो जातिः इति विग्रहे 'राज-श्वशुराद्यत् ४।१।१३७' इति यति 'नस्तद्धिते ६।४।१४४' इति टि-लोपस्य 'ये चाभावकर्मणोः ६।४।१६८' इति प्रकृतिभावे राजन्यः क्षत्रियः, तेषां समूहः इति विग्रहे 'गोत्रोक्षोष्ट्रोरभ्र० ४।२।३९' इति वुञि, अकादेशे 'प्रकृत्याके राजन्यमनुष्ययुवानः ४।२।३९' इति वार्तिकेन यलोपाभावे राजन्य-कम्। हस्तिनां समूहः हास्तिकम् इति विग्रहे 'अचित्तहस्तिधेनोष्ठक् ४।२।४७' इति ठकि, इकादेशे, आदिवृद्धौ, टिलोपे हास्तिकम्। अध्वानम् अलं गच्छतीति विग्रहे अध्वन् शब्दात् 'अध्वनो यत् खौ५।२।१६' इति खे ईनादेशे 'आत्माध्वानौ खे ६।४।१६९' इति प्रकृतिभावात् टेरलोपे अध्वनीनम्।

कृदन्तः—'प्रमदसम्मदौ हर्षे ३।३।६८' इति निपातनम्। वन्दन्ते तच्छीला वन्दारवः 'शृवन्द्योरारुः ३।२।१७२' इति आरु प्रत्यये वन्दारवः, तैः।

वाच्य०—सुप्रातेन आसादितसम्मदेन संस्तुतेन अश्वीयराजन्यकहास्तिका-ढ्येन तेन बलेन अभ्ययोध्यम् अगायि।

शिक्षा—कार्य्ये साफल्ये प्रसन्नता द्योतनीयैव भवति इति ॥ ४९ ॥

परशुरामसम्पर्कमाख्याति मार्गे—

**[1]विशङ्कटो वक्षसि बाण-पाणिः, संपन्न-ताल-द्वयसः पुरस्तात्।**
**भीष्मो धनुष्मानुपजान्वरत्नि-रैति स्म रामः पथि जामदग्न्यः ॥५०॥**

अन्वयः—वक्षसि विशङ्कटः बाणपाणिः सम्पन्नतालद्वयसः भीष्मः धनुष्मान् उपजान्वरत्निः जामदग्न्यः रामः पथि पुरस्ताद् ऐति स्म।

हिन्दी—विशाल वक्षःस्थलवाले हाथमें बाण लिये हुए पूर्ण ताल पेड़के समान ऊँचे भयङ्कर धनुर्धारी, विशाल बाहु, जमदग्नि ऋषिके पुत्र, परशु-रामजी मार्गमें आगे मिले।

---

१ टिप्पणी—परशुरामजीके गुरु शिवजीका वह धनुष राजा निमिके समयसे ही जनकके यहां रखा था। जब उसके टूटनेका शब्द सुन पड़ा तो गुरुकी वस्तुके विनाशसे क्रुद्ध होना तथा विनाशकारीको दण्ड देना परशु-रामजीके लिये अनिवार्यसा हो गया, अतः वे क्रोधसे तमतमाये हुए आ पहुँचे।

**व्याख्या**—वक्षसि उरसि विशङ्कटो विशालः बाणपाणिः शरकरः, सम्पन्नतालद्वयसः पूर्णतालतरुप्रमाणः भीष्मः भयङ्करः, धनुष्मान् चापधरः, उपजान्वरत्निः आजानुबाहुः जामदग्न्यः जमदग्निसुतः, रामः परशुरामः, पथि अध्वनि, पुरस्तात् अग्रतः ऐतिस्म प्राप्तोऽभूत् । पूर्वोक्तः परिकरोऽलङ्कारः ।

**कोशः**—विशङ्कटं पृथु बृहद् विशालं पृथुलं महत् ।
अरत्निस्तु निष्कनिष्ठेन मुष्टिना ।
बाणो बलिसुते शरे— इत्याद्यमरः ।

**समासः**—बाणः पाणौ यस्य स बाणपाणिः (प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ) इति परत्वं पाणेः । सम्पन्नश्चासौ तालः ततः 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः ५।२।३७' इति द्वयसच् प्रत्ययः । जानुनोः समीपम् इति समीपार्थेऽव्ययीभावे उपजानु, अरत्नी लक्षणया बाहू यस्य सः उपजान्वरत्निः—इति बहुव्रीहिः ।

**तद्धितः**—'वेः शालच्छङ्कटचौ ५।२।२८' इति शङ्कटच् प्रत्यये विशङ्कटशब्दः, तेनैव शालच् प्रत्यये विशालशब्दः सिध्यति । उभयोरपि महान् एवार्थः । धनुः अस्ति अस्य इति संसर्गेऽर्थे मतुप् । जमदग्नेरपत्यम् इत्यर्थे 'गर्गादिभ्यो यञ् ४।१।१०५ इति यञि ।

**कृदन्तः**—भीयतेऽस्मादिति विग्रहे 'भियः षुग्वा' इत्यौणादिसूत्राद् वैकल्पिके षुगागमे 'भीमादयोऽपादाने ३।४।७४' इत्यपादाने निपातनात् भीष्मः भीमः इत्यादयः सिध्यन्ति ।

**तिङन्तः**—इण् गतौ इति आदादिकाद् इ धातोः लटि सार्वधातुकार्द्धधातुकयोः ७।३।८४' इति गुणे आङा योगे 'एत्येधत्यूठ्सु ६।१।८९' इति वृद्धौ ऐति स्मेति निपाताव्ययसंसर्गः ।

**वाच्य०**—विशङ्कटेन बाणपाणिना सम्पन्नतालद्वयसेन भीष्मेन धनुष्मता उपजान्वरत्निना ईयते स्म ।

**शिक्षा**—अपकारी दण्डनीय एव सामर्थ्यशालिनेति परशुरामागमनेन शिक्षयति पद्यम् ।। ५० ।।

कविः परशुरामाह्वानं दशरथानुनयश्चोभयमाख्याति—

**उच्चैरसौ राघवमाह्वतेदं धनुः स-बाणं कुरु, माऽतियासीः ।**
**पराक्रम-ज्ञः प्रिय-सन्ततिस् तं, नम्रः क्षितीन्द्रोऽनुनिनीषुरूचे ।।५१।।**

अन्वयः—असौ ( परशुरामः ) 'इदं धनुः सबाणं कुरु मा अतियासीः' इति राघवम् उच्चैः आह्वत । पराक्रमज्ञः प्रियसन्ततिः अनुनीषुः नम्रः क्षितीन्द्रः तम् ऊचे ।

हिन्दी—परशुरामने 'इस धनुषपर बाण चढ़ा दो, हमें लांघकर आगे मत बढ़ो' इस प्रकार राघवको ललकारा। उनके पराक्रमके ज्ञाता प्रिय-सन्तान वाले अनुनय करनेकी इच्छासे नम्र राजाने परशुरामसे कहा।

व्याख्या-असौ परशुरामः,'इदं एतत् धनुः कार्मुकं सबाणं सशरं कुरु विधेहि, मा अतियासीः मा अतिक्रमीः' ( इति वाक्यम् ) राघवं रामम् उच्चैः उन्नत-स्वरम् आह्वत आह्वास्त। पराक्रमज्ञः परशुरामशक्तिपरिचितः; प्रियसन्ततिः अभीष्टापत्यः, अनुनीषुः अनुनेतुमिच्छुः, नम्रः विनीतः, क्षितीन्द्रः नृपः ( दशरथः ) तम् परशुरामम् ऊचे उवाच। अनुनयहेतूल्लेखात् काव्यलिङ्गम्।

कोशः—अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्।

समासः—बाणेन सहेति विग्रहे 'तेन सहेति तुल्ययोगे २।२।२८ इति समासे 'वोपसर्जनस्य ६।३।८२' इति सादेशे सबाणम्। प्रिया सन्ततिः यस्य स प्रिय-सन्ततिः। पराक्रमस्य ज्ञः पराक्रमज्ञः। क्षितेः इन्द्रः क्षितीन्द्रः।

तिङन्तः-आङ् पूर्वकात् ह्वेञ् धातोः लुङि 'स्पर्द्धायामाङः १।३।३१' इत्यात्मनेपदे, त प्रत्यये, च्लौ, तस्य 'आत्मनेपदेष्वन्यतरस्याम् ३।१।५४' इति अङि, 'आतो लोप इटि च ६।४।६४' इत्यालोपे आह्वत। मातियासीः इत्यत्र या धातोः लुङि 'न माङ्योगे ६।४।७३' इति अडागमनिषेधे 'यमरमनमातां सक् च ७।२।७३' इति सगागमे सिचश्च इटि, सामान्यकार्ये मातियासीः। कृधातोः लोटि हिप्रत्यये 'तनादिकृञ्भ्य उः ३।१।७९' इति उप्रत्यये 'उतश्च प्रत्ययादसंयोगपूर्वात् ६।४।१०६' इति हेर्लुकि कुरु। ब्रूञ् व्यक्तायां वाचि इति आदादिक ब्रूधातोः लिटि, ए प्रत्यये, 'ब्रुवो वचिः २।४।५३' वच्यादेशे सम्प्रसारणे द्वित्वेऽभ्यासकार्य्ये ऊचे।

वाच्य०-अमुना राघवः आह्वायि। त्वया इदं धनुः सबाणं क्रियताम् मा अतियायि। पराक्रमज्ञेन प्रियसन्ततिना नम्रेण अनुनीषुणा क्षितीन्द्रेण स ऊचे।

शिक्षा—अहो सन्ततिस्नेहः। यद्वशाद्राजा दशरथः स्वक्षत्रियत्वाभिमानं त्यक्त्वा परशुराममनुनयति इति सन्ततिकृते मानवः सर्वं त्यजतीति शिक्षयति॥५१॥

राज्ञोऽनुनयप्रकारं दर्शयति--

**अनेक-शो निर्जित-राजकस् त्वं, पितॄनतार्प्सीर् नृप-रक्त-तोयैः।**
**संक्षिप्य संरम्भम-सद्-विपक्षं, का ऽऽस्थाऽर्भकेऽस्मिंस्तव राम! रामे॥५२॥**

अन्वयः--हे राम! (परशुराम!) अनेकशः निर्जितराजकः त्वम् नृपरक्ततोयैः पितॄन् अतार्प्सीः। असद्विपक्षं संरम्भं सक्षिप्य अर्भके रामे तव का आस्था इति।

हिन्दी--हे परशुरामजी! आपने तो अनेक बार राजसमूहोंको परास्तकर उनके खूनरूपी जलसे पितरोंका तर्पण किया है। आपके कोपका पात्र यहाँ कोई है ही नहीं। अतः इस क्रोधको रोकिये। बालक राममें आप क्या आस्था करते हैं।

व्याख्या--हे राम! परशुराम! अनेकशः बहुशः निर्जितराजकः परास्तराजसमूहः, नृपरक्ततोयैः राजरुधिरसलिलैः, पितॄन् स्वपूर्वपुरुषान्, अतार्प्सीः अपारीः। असद्विपक्षम् अविद्यमानप्रतिभटं, संरम्भं कोपं, संक्षिप्य संहर, अर्भके बाले, रामे राघवे, तव प्रसिद्धवीरस्य भवतः का आस्था कः अभिनिवेशः? (तवाऽग्रेऽयमकिञ्चित्कर इत्यर्थः)। उदात्तालङ्कारः।

कोशः--द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः। पोतः पाकोऽर्भको डिम्भः इत्याद्यमरः। संरम्भः सम्भ्रमः कोपे--इति विश्वः।

समासः--न एकशः अनेकशः नञ्समासः। निर्जितं राजकं येन सः (बहुव्री०)। नृपाणां रक्तानि एव तोयानि 'मयूरव्यंसकादयः २।१।७२' इति समासः, तैः। असन् विपक्षः यस्य सः असद्विपक्षः, तम्।

तद्धितः--एकवारम् एकशः इत्यर्थे 'संख्यैकवचनाच्च वीप्सायाम् ५।४।४३' इति शस् प्रत्यये, एकश इत्यव्ययम्। राज्ञां समूहः राजकम् 'गोत्रोक्षोष्ट्रो० ४।२।३९' इति वुञि, अकादेशे 'नस्तद्धिते ६।४।१४४ इति टिलोपे राजकम्।

तिङन्तः--तृप प्रीणने इति दैवादिकात् तृप् धातोर्लुङि 'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः' इति वैकल्पिके सिचि 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ६।१।५९' इति अमभावपक्षे 'वदव्रजहलन्तस्याचः ७।२।३' इति वृद्धौ अतार्प्सीः। संपूर्वकात् दैवादिकात् क्षिप् प्रेरणे इति धातोः लोटि श्यनि 'अतो हेः ६।४।१०५' इति हेर्लुकि संक्षिप्येति।

वाच्य०—हे राम ! निर्जितराजकेन त्वया पितरः अतर्पिषत अतृप्सत वा । असद्विपक्षः संरम्भः संक्षिप्यताम् । रामे तव कया आस्थया भूयते इति ॥ ५२ ॥

दशरथ-वाक्यानादरे तं रामचन्द्रः पराजितवानिति दर्शयति—

**अजीगणद् दाशरथं न वाक्यं, यदा स दर्पेण तदा कुमारः ।**
**धनुर् व्यकार्क्षीद् गुरु-बाण-गर्भं लोकानलावीद् विजितांश्च तस्य ॥५३॥**

अन्वयः—यदा सः ( परशुरामः ) दर्पेण दाशरथं वाक्यम् न अजीगणत् तदा कुमारः गुरुबाणगर्भं ( तदीयम् ) धनुः व्यकार्क्षीत् । तस्य विजितान् लोकान् च अलावीत् ।

हिन्दी—जब परशुरामने अपने ( उत्कट ) दर्पसे दशरथजीके वाक्यकी परवाह नहीं की तो रामने उनके धनुषको चढा दिया और उनके ( पुण्यसे ) जीते हुए लोकोंको भी काट दिया ।

व्याख्या—यदा यस्मिन् काले, स परशुरामः, दर्पेण क्रोधेन, दाशरथं दशरथसम्बन्धिवाक्यं पदसमूह न अजीगणत् नैव अग्रहीत्; तदा तस्मिन् काले कुमारः राजकिशोरः ( रामः ), गुरुबाणगर्भं दुर्भरशरवत् धनुः ( तदीयम् ) व्यकार्क्षीत् ततज्यम् अकार्षीत् । विजितान् स्वायत्तीकृतान् तस्य परशुरामस्य लोकान् पुण्यप्रदेशान् च अलावीत् अच्छिदत् । तदाज्ञयैव तज्जातम्, रामकर्तृक-चापाकर्षणस्यामोघत्वादिति भावः । अनुप्रासच्छटा विमृश्या ।

तद्धितः- दशरथस्येदं दाशरथम् 'तस्येदम् ४।३।१२०' इत्यणि आदिवृद्धौ रूपसिद्धिः । राजकुमारस्थाने कुमारशब्दः 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः ५।३।८१' इति वार्तिकोदाहरणम् ।

तिङन्त.—गण संख्याने इति चौरादिकाददन्ताद् स्वार्थे णिचि गणि इत्यस्य लुङि, 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३।१।४८' इति च्लेः चङि, 'चङि ६।१।११ इति द्वित्वे 'ई च गणः ७।४।९७ इत्यभ्यासस्य ईत्वे अजीगणत् । कृष आकर्षणे तौदादिक कृष्-धातोर्लुङि 'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः ३ १।४४' इति सिच्पक्षे षस्य कत्वे व्यकार्क्षीत् ।

**वाच्य०**—यदा तेन वाक्य न अगणि तदा कुमारेण धनुः अकर्षि, तस्य विजिता लोका अलाविषत ।

**शिक्षा**—'अति सर्वत्र वर्जयेत्' परशुरामोऽतिदर्पात् रामेण हततेजा जातः ॥ ५३ ॥

परशुराम-गर्वविनिपाते सेनाप्रयाणमाह—

**जिते नृपाऽरौ, सुमनीभवन्ति शब्दायमानान्य-शनैर-शङ्कम् ।**
**वृद्धस्य राज्ञोऽनुमते बलानि जगाहिरे ऽनेक-मुखानि मार्गान् ॥५४॥**

**अन्वयः**—नृपारौ जिते वृद्धस्य राज्ञ अनुमते सति सुमनीभवन्ति अशङ्कम् अशनैः शब्दायमानानि अनेकमुखानि बलानि मार्गान् जगाहिरे ।

**हिन्दी**—परशुरामजीके परास्त हो जाने पर हर्षविमोर हो निःशङ्क-भावसे रामकी जय जयकार करती हुई सेना वृद्ध राजाकी अनुमति पा अनेक मार्गोंसे आगे बढी ।

**व्याख्या**—नृपारौ क्षत्रियान्तकरे परशुरामे, जिते पराभूते, वृद्धस्य स्थविरस्य राज्ञो नृपस्य अनुमते सति सुमनीभवन्ति प्रसन्नचेतांसि सन्ति, अशङ्कम् नि.शङ्कम् अशनैः उच्चै. शब्दायमानानि ध्वनन्ति, अनेकमुखानि विविधदिगास्यानि सन्ति मार्गान् पथ जगाहिरे प्रविविशु. । अनुप्रासस्तु प्रतिपद्य मृग्यम् ॥ ५४ ॥

**कोश**—अयन वर्त्म मार्गाध्वपन्थान· पदवी सृति· ।
रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृद.-इत्याद्यमरः ।

**समासः**—असुमनासि सुमनासि भवन्ति इति सुमनीभवन्ति 'अरुर्मनश्चक्षुश्चेतो० ५।४।५१' इति च्वौ, अन्तस्य लोपे च 'अस्य च्वौ ७।४।३२' इति ईत्वे ततो भूधातोः लटः शत्रादेशे नपुसके जसि रूपम् ।

**कृदन्तः**—शब्द कुर्वन्ति इति शब्दायमानानि 'शब्दवैरकलहाभ्र० ३।१।१७' इति क्यङि, ततः शानचि नपुंसके ।

**वाच्य०**—सुमनीभवद्भि· शब्दायमानैः अनेकमुखैः बलैः मार्गा जगाहिरे ।

**शिक्षा**—विजये उत्साहवृद्धिः स्वाभाविको धर्मः । अतश्च मानवैर्यथावस्थ व्यवहर्तव्यम् इति शिक्षयति पद्यम् ॥ ५४ ॥

सेनागमनप्रकारं वर्णयन्नयोध्योपस्थितिं वर्णयति—

**[1]अथ पुरुजव-योगान् नेदयद् दूर-संस्थं**
**दवयदतिरयेण प्राप्तमुर्वी-विभागम्।**
**क्लमरहितमचेतन् नीरजीकारितक्ष्मां,**
**बलमुपहितशोभां तूर्णमायादयोध्याम् ॥ ५५ ॥**

**अन्वय**—अथ पुरुजवयोगात् दूरसंस्थम् उर्वीविभागं नेदयत् प्राप्तं च अतिरयेण दवयद् क्लमरहितम् अचेतत् बलम् नीरजीकारितक्ष्माम् उपहितशोभाम् अयोध्याम् तूर्णम् आयात्।

**हिन्दी**—राजाकी आज्ञा पाकर अतिवेगसे चली सेना दूरको नजदीक और नजदीकको दूर करती हुई बिना थकावटके तथा दूर नजदीकके ज्ञानसे शून्य सीची-सिचाई एवं खूब-सजाई अयोध्यामे शीघ्र आ पहुँची।

**व्याख्या**—अथ विजयानन्तरम्, प्रस्थितं विविधमार्गगं रामबलम्, पुरुजवयोगात् भूरिवेगसम्पर्कात्, दूरसंस्थम् उर्वीविभागम् विप्रकृष्टं पृथ्वीप्रदेशं नेदयत् समीपस्थं कुर्वत्, प्राप्तम् आसन्नं च अतिरयेण अधिकवेगेन दवयत् दूरस्थं विदधत्, क्लमरहितम् अश्रान्तम् अचेतत् अजानत् (कियद्गतं कियदवशिष्टमिति) बलम् रामवरयात्रासैन्यम्, नीरजीकारितक्ष्माम् निर्धूलिसम्पादितमहीम् (सिक्तसम्मृष्टधरामिति यावत्) उपहृतशोभाम् आसक्तसुषमाम् (पुष्पमाल्यध्वजादिभिः) अयोध्याम् तन्नामिकां नगरीम् तूर्णम् आशु आयात् आगच्छत्। सैवाऽनुप्रासच्छटाऽनुभाव्या। यथासंख्यमर्थालङ्कारो हेतुगर्भविशेषणे यथोत्तरो वेति सन्देहसंकरः।

**कोशः**—प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु।
पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च।
सत्वरं चपलं तूर्णमविलम्बितमाशु च—इत्याद्यमरः।

**समासः**—निर्गतं रजः यस्याः सा नीरजाः। अनीरजा नीरजाः सम्पादिता

---

१. टिप्पणी—सर्गान्तेऽविच्छिन्नं सर्गत्रयावधि मालिनीछन्दोऽभिनिवेशात् 'नो नाकश्च सुखप्रद०' इति सुखप्रदवैदुष्यजनकत्वं प्रकीर्णकाण्डस्य ध्वन्यते—इत्यवश्यध्येयं छात्रैः भट्टिमहाकाव्यमिति महाकवेराशय इत्यलम्।

इति नीरजीकारिता क्ष्मा यस्यां सा, ताम् । उपहिता शोभा यस्याम् सा, ताम्—इत्यादि स्वयमूह्यम् ।

तद्धितः—अन्तिकं करोतीति विग्रहे 'तत्करोति तदाचष्टे वा' 'प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च' इति इष्ठन्प्रत्यये यथा प्रातिपदिकस्य पुंभावरभावटिलोप-विन्-मतुब्लोपयणादिपर-लोप-प्रस्थस्फाद्यादेशास्तद्वण्णार्वपि स्युरित्यादेशात् 'अन्तिकबाढयोर्नेदसाधौ५।३।६३ इति अन्तिकस्य नेदादेशे नेदि धातोः लटि, तस्य शत्रादेशे नेदयत् रूपम् । एवं दूरं करोतीति विगृह्य णिचि इष्ठवद्भावेन 'स्थूलदूर० ६।४।१५६' इति यणादिपररलोपे पूर्वस्य च गुणे दवि धातोः पूर्ववत् लटः शत्रादेशे दवयदिति ।

तिङन्तः—आयात् इति या—प्रापणे इत्यादादिकस्य लङि शपो लुकि रूपम् ।

वाच्य०—नेदयता दवयता क्लमरहितेन अचेतता बलेन उपहितशोभा नीरजीकारितक्ष्मा अयोध्या आयायत ।

शिक्षा—आनन्दातिरेके क्लमापगमो भवति । उत्सवे सर्वं विभूषणीय-मिति ॥५५॥

इति श्रीभट्टिमहाकाव्ये प्रकीर्णकाण्डे सीतोद्वाहनामा
द्वितीयः सर्गः समाप्तः ।

# ॥ अथ तृतीयः सर्गः ॥

सम्प्रति प्रकीर्णकाण्ड एव रामाभिषेकप्रसङ्गे तस्य प्रजाप्रियत्वमाख्याति—

**वधेन संख्ये पिशिताऽशनानां, क्षत्राऽन्तकस्याऽभिभवेन चैव ।**
**आढ्यम्भविष्णुर् यशसा कुमारः, प्रियंभविष्णुर् न स यस्य नाऽऽसीत्॥१॥**

अन्वयः—संख्ये पिशिताशनानां वधेन क्षत्रान्तकस्य अभिभवेन च एव यशसा आढ्यम्भविष्णुः कुमारः यस्य प्रियम्भविष्णुः न स न आसीत् ।

हिन्दी—संग्राममें राक्षसोंका वध करडालने तथा क्षत्रियोंके अन्त करने वाले परशुरामको परास्त कर देनेके कारण महायशस्वी रामचन्द्र अयोध्यामें जिसके प्रिय न थे, ऐसा वहाँ कोई नहीं था । अर्थात् सर्वप्रिय थे ।

व्याख्या—संख्ये मृधे, पिशिताशनानां राक्षसानां, वधेन विघातेन, क्षत्रान्तकस्य क्षत्रियान्तकरस्य परशुरामस्य, अभिभवेन पराजयेन च, एव=निश्चयेन, यशसा कीर्त्या आढ्यम्भविष्णुः समृद्धो भवन्, कुमारः राजकिशोरः रामः यस्य जनस्य प्रियंभविष्णुः वल्लभः भूतः न नहि, सः न आसीत् न अभवत् । अत्रापि सर्गे उपजातिच्छन्दः । मध्ये क्वापि इन्द्रवज्रोपेन्द्रवज्रे अपि स्याताम् । अत्र सम्बन्धेऽसम्बन्धरूपाऽतिशयोक्तिस्तत्रैव मन्थरासत्त्वात् ।

कोशः—मृधमास्कन्दनं संख्यं समीकं सम्परायकम् ।
यशः कीर्तिः समज्ञा च स्तवः स्तोत्रं स्तुतिर्नुतिः—इत्याद्यमरः ।

समासः—पिशितम् अशनम् येषां ते, तेषाम् । क्षत्राणाम् अन्तकः क्षत्रान्तकः, तस्य ।

कृदन्तः—अनाढ्यः आढ्यः भवतीति आढ्यम्भविष्णुः । अप्रियः प्रियः भवतीति प्रियम्भविष्णुः । उभयत्रापि 'कर्तरि भुवः खिष्णुच्खुकञौ ३।२।५७' इति खिष्णुचि, धातोश्च 'सार्वधातुकार्धधातुकयोः ७।३।८४' इति गुणे, अवादेशे आढ्य+सु भविष्णु+सु इति स्थितौ 'उपपदमतिङ् २।२।१९' इति समासे, प्रातिपदिकतया 'सुपो धातुप्रातिपदिकयोः २।४।७१' इति सुपो लुकि, 'अरुर्द्विषदजन्तस्य मुम् ६।३।६७' इति मुमि, अनुस्वारपरसवर्णयोः प्रातिपदिकत्वात् सौ आढ्यम्भविष्णुः इत्यादि ।

तिङन्तः—अस् भुवि इति आदादिकस्य अस् धातोः लङि 'अस्ति सिचोऽपृक्ते ७।३।९६' इति ईटि 'आडजादीनाम् ६।४।७२' इति आडागमे आसीत् ।

वाच्य०—आढ्यम्भविष्णुना कुमारेण यस्य प्रियम्भविष्णुना न अभूयत तेन न अभूयत ।

शिक्षा—'गुणैर्हि सर्वत्र पदं निधीयते ।' तस्माद् 'गुणेषु यत्नः पुरुषेण कार्य्यो न किञ्चिदप्राप्यतमं गुणानाम् । गुणप्रकर्षादुडुपेन शम्भोरलङ्घ्यमुल्लङ्घितमुत्तमाङ्गम् ॥' इत्यादिनीतिं शिक्षयति पद्यम् ॥ १ ॥

नृपकर्तृक-रामाभिषेकघोषणया पौरप्रसन्नतामाख्याति—

**ततः सुचेतीकृत-पौर-भृत्यो, राज्ये ऽभिषेक्ष्ये सुतमित्य-नीचैः ।**
**आघोषयन् भूमि-पतिः समस्तं भूयोऽपि लोकं सुमनीचकार ॥ २ ॥**

अन्वयः—ततः "राज्ये सुतम् अभिषेक्ष्ये" इति अनीचैः आघोषयन् सुचेतीकृतपौरभृत्यः भूमिपतिः भूयः अपि समस्तं लोकं सुमनीचकार ।

हिन्दी—'सुत रामका राज्याभिषेक करूंगा' इस प्रकार उच्च घोषणा कराने वाले राजा दशरथने एक बार और पौरजनों एवं भृत्योंको प्रसन्न कर दिया ।

व्याख्या - ततः प्रजाप्रसन्नतासम्पादनानन्तरम्, "राज्ये प्रजाधिपत्ये सुतं ज्येष्ठसूनुं रामम् अभिषेक्ष्ये अभिषेक्ष्यामि" इति इत्थम् अनीचैः उच्चैः आघोषयन् घोषणां कारयन्, सुचेतीकृतपौरभृत्यः सुमनीकृतजानपदजनवर्गः भूमिपतिः क्षितीन्द्रः दशरथः, भूयः पुनः अपि समस्तं कृत्स्नं लोकं जनं, सुमनीचकार प्रसन्नचेतसं विदधौ । सुमनीकरणहेतोरुल्लेखात् काव्यलिङ्गम् ।

कोशः—चेतो हृन्मानसं मनः । लोकस्तु भुवने जने ।

विश्वमशेषं कृत्स्नसमस्तनिखिलानि निःशेषम्—इत्याद्यमरः ।

समासः—शोभनं चेतः येषां ते सुचेतसः ( बहु० ) । सुचेतीकृताः पौरभृत्याः येन स सुचेतीकृतपौरभृत्यः ( पुनश्च बहु० ) । मध्ये न सुचेतसः असुचेतसः ( नञ् ) ।

कृदन्तः—असुचेतसः सुचेतसः कृता इति सुचेतीकृता इति विग्रहे अभूततद्भावे 'अरुर्मनश्चक्षु० ५।४।५१' इति च्वौ, सलोपे, ईत्वे साधुः । आङ् पूर्वकात् घोषीति ण्यन्ताद् लटि तत्स्थाने शत्रादेशे, शपि, गुणादिना रूपसिद्धिः ।

तिङन्तः—असुमनसः सुमनसः कृताः इति सुमनीचकार इति विग्रहे सुमनस् पूर्वकात् कृधातोः पूर्ववत् च्वौ, सलोपे, ईत्वे, लिटि, द्वित्वादिकार्य्ये सुमनीचक्र+अ इत्यत्र 'अचो ञ्णिति ७।२।११५' इति वृद्धौ रूपम् ।

वाच्य०— सुतोऽभिषेक्ष्यते' इति आघोषयता भूपतिना सुचेतीकृतपौरभृत्येन समस्तः लोकः सुमनीचक्रे ।

शिक्षा—'जितेन्द्रियत्व विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते । गुण-प्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः॥' इति पूर्वकाले राजानो जितेन्द्रिया येऽभवन् त एव गुणिनो विनयिनो जनानुरागशालिनो राज्येऽभिषिक्ताश्च प्रजानुरक्त्यैव भवन्तिस्म । नोच्छृङ्खलराजतन्त्रमासीत् । नियन्त्रितराजतन्त्रं राज्यं प्रजातन्त्रमेवेति ॥ २ ॥

सम्प्रति राज्याभिषेकार्थं राजसिंहासननिर्माणमाख्याति—

**[1]आदिक्षदादीप्त-कृशानुकल्पं, सिंहासनं तस्य स-पाद-पीठम् ।**
**सन्तप्त-चामीकर-वल्गु-वज्रं, विभाग-विन्यस्त-महार्घरत्नम् ॥ ३ ॥**

**अन्वयः**—( दशरथो राजा ) तस्य ( रामस्य ) आदीप्तकृशानुकल्पम् सन्तप्तचामीकर-वल्गुवज्रम् विभागविन्यस्त-महार्घरत्नम् सपादपीठम् सिंहासनम् ( निर्मातुम् ) आदिक्षत् ।

**हिन्दी**—दशरथने आज्ञा दी कि बहुमूल्य हीरे-पन्नोंसे जड़ित प्रज्वलित अग्निके समान चमकने वाला सोनेका एक सपादपीठ राजसिंहासन तैयार किया जाय ।

**व्याख्या**—राजा दशरथः, तस्य रामस्य, आदीप्तकृशानुकल्पम् प्रोज्ज्वलितानल-तुल्यम्, सन्तप्तचामीकर-वल्गुवज्रम् उत्तप्तहाटक-सुन्दरहीरकम्, विभाग-विन्यस्त-महार्घरत्नम् समुचित-प्रदेशप्रत्युप्त-बहुमूल्यमणिकम्, सपादपीठं पादपीठोपेतम् सिंहासनम् सौवर्णम् राज्यासनम् निर्मातुमिति शेषः, आदिक्षत् अजिज्ञपत् । उदात्तालङ्कारः ।

---

[1] **टिप्पणी**—यद्यपि राजसिंहासन तो पहलेका परम्परासे आने वाला था ही, तथापि अभिषिच्यमान राजाके नामपर विशेष राजसिंहासन बनानेकी प्रथा थी, यहाँ उसीका उल्लेख है ।

कोशः—चामीकरं जातरूपं महारजतकाञ्चने—इत्यमरः ।

समासः—आदीप्तश्चासौ कृशानुः आदीप्तकृशानुः, तेन तुल्यम् आदीप्तकृशानुकल्पम् 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ५।३।६७' इति कल्पप् । सन्तप्तानि चामीकराणि वल्गूनि वज्राणि यस्मिन् तत् सन्तप्तचामीकर-वल्गु-वज्रम् ( बहु० ) । वर्णमिति पाठान्तरे ऽप्येवम् । पादपीठेन सह वर्तते इति सपादपीठम् ( बहु० ) । विभागेन विन्यस्तानि विभागविन्यस्तानि । महानर्घः येषां तानि महार्घाणि । विभागविन्यस्तानि महार्घाणि रत्नानि यस्मिन् तत् ( बहु० ) ।

तिङन्तः—आङ् पूर्वकात् दिश् धातोः तौदादिकात् लुङि, तिङि, च्लौ, तस्य 'शल इगुपधादनिटः क्सः ३।१।४५' इति क्सादेशे, 'व्रश्चभ्रस्जसृज० ८।२।३६' इति शस्य षत्वे, 'षढोः कः सि ८।२।४१' इति कत्वे 'आदेशप्रत्यययोः ८।३।५९' इति षत्वे, अडागमे, सवर्णदीर्घे आदिक्षत् ।

वाच्यपरि०—तेन आदीप्तकृशानुकल्पं विभागविन्यस्तमहार्घरत्नं सपादपीठं सिंहासनमादेशि ।

शिक्षा -'योग्यं योग्येन योजयेत्' 'अनुरूपमेव शोभते' 'चकास्ति योग्येन हि योग्यसङ्गमः' इत्यादि ॥ ३ ॥

सम्प्रति अभिषेकार्थं तीर्थजलानयनमाख्याति—

**प्रास्थापयत् पूग कृतान् स्व-पोषं, पुष्टान् प्रयत्नाद् दृढ-गात्र-बन्धान् ।**
**स-भर्म-कुम्भान् पुरुषान् समन्तात् पत्काषिणस् तीर्थ-जलाऽर्थमाशु ॥४॥**

अन्वयः—( सः ) पूगकृतान् स्वपोषं पुष्टान् दृढगात्रबन्धान् सभर्मकुम्भान् पत्काषिणः पुरुषान् तीर्थ-जलार्थम् प्रयत्नात् समन्तात् आशु प्रास्थापयत् ।

हिन्दी—दशरथने बलशाली पद यात्रा करनेमें समर्थ स्वाश्रित जनोंको स्वर्णकलश हाथोंमें देकर तीर्थोंका जल लानेके लिये एक संघ रूपमें भेजा ।

व्याख्या—राजा दशरथ., पूगकृतान् सङ्घीकृतान्, स्वपोषं पुष्टान् निजधनेन पालितान्, दृढगात्रबन्धान् वज्रसंहननसन्धीन् ( भारोद्वहनक्षमानित्यर्थः ), सभर्मकुम्भान् सुवर्णकलसहस्तान्, पत्काषिणः पदातीन् पुरुषान् पुंसः, तीर्थजलार्थम् पवित्रनदीसलिलसञ्चयनाय ( अभिषेकार्थम् ), प्रयत्नात् उत्साहात्, समन्तात् सर्वभागेषु, आशु त्वरितम् प्रास्थापयत् प्रातिष्ठिपत् । वाक्यगतहेतुकं काव्यलिङ्गम् )

कोशः—गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ।

स्वर्णं सुवर्णं कनक हिरण्यं हेम हाटकम् ।
तपनीयं शातकुम्भ गाङ्गेय भर्म कर्बुरम्—( इत्यमरः ) ।
तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु ।
अवतारर्षिजुष्टाम्बुस्त्रीरज.सु च कीर्तितम्—( इति विश्वः ) ।

समास.—अपूगाः पूगा. कृताः इति पूगकृताः, तान् । 'श्रेण्यादय. कृतादिभिः २।१।५९' इत्यनेन 'श्रेण्यादिषु च्व्यर्थवचन कर्तव्यम्' इति वचनात् च्व्यर्थे समासे, समासत्वात् प्रातिपदिकतया विभक्तेर्लुकि पूगकृतशब्दाच्छसि रूपम् । गात्राणां बन्धः गात्रबन्धः, दृढ' गात्रबन्धो येषा ते दृढगात्रबन्धा , तान् । भर्मण. कुम्भाः भर्मकुम्भा. , भर्मकुम्भै सह वर्तन्ते इति सभर्मकुम्भा', तान्. पूर्ववद् बहुव्रीहिः । तीर्थाना जलानि तीर्थजलानि, तेभ्य इदमिति तीर्थजलार्थम् 'अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्' इति वचनात् 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः २।१।३६' इति समासे विभक्तेर्लुकि तीर्थजलार्थम् ।

कृदन्तः—स्वेन पुष्ट्वा इत्यर्थे पुष् धातो 'स्वे पुषः ३।४।४०' इति णमुलि, गुणे, स्वेन पोषम् इति जाते 'अमैवाव्ययेन २।२।२०' इति समासे, विभक्तेर्लुकि स्वपोषम् इत्यत. 'कषादिषु यथाविध्यनुप्रयोग ३।४।३६' इति पुषोऽनुप्रयोगे स्व-पोष पुष्टान् इति क्तान्तस्य शसि साधु । पादौ कषन्ति तच्छीला: पत्काषिण. । अत्र कर्मणि उपपदे कष् धातोः सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८' इति णिनि प्रत्यये 'अत उपधाया. ७।२।११६' इति वृद्धौ, उपपदसमासे, विभक्तेर्लुकि, 'हिम-काषिहतिषु च ६।३।५४' इति पादशब्दस्य पदादेशे पत्काषिन् शब्दात् शसि पदम् ।

तिङन्तः—प्रपूर्वकात् स्थापि—णिजन्तात् लङि रूपम् प्रास्थापयत् ।

वाच्य०—पूगकृता. पुरुषाः प्रास्थाप्यन्त । तेनेति शेषः ।

शिक्षा—महत्त्वम् महता सहाय्येनैव सम्पादयितुं शक्यते इति ॥ ४ ॥

महोत्सवे नगरालङ्करणमपि आवश्यक कर्मेति तदाख्याति—

**उक्षाम्प्रचक्रुर् नगरस्य मार्गान् ध्वजान् बबन्धुर् मुमुचुः खधूपान् ।**
**दिशश्च पुष्पैश्चकरुर् विचित्रै-रर्थेषु राज्ञा निपुणा नियुक्ताः ॥५॥**

अन्वयः—राज्ञा अर्थेषु नियुक्ता निपुणा ( कर्मकरा. ) नगरस्य मार्गान् उक्षाम्प्रचक्रु', ध्वजान् बबन्धुः, खधूपान् मुमुचु , दिशश्च विचित्रै. पुष्पैः चकरुः ।

**हिन्दी**—महाराज दशरथ द्वारा कर्तव्य कर्ममें लगाये गये कुशल कर्मचारियोंने नगरके मार्गोंको सींचा, ध्वजाएँ-पताकाएँ बाँधीं, आकाशदीप ( गुब्बारे ) छोड़े और दिशाओंको तरह तरहके पुष्पोंसे सजाया।

**व्याख्या**—राज्ञा दशरथेन, अर्थेषु कर्तव्यकर्मसु नियुक्ता अधिकृता निपुणाः कुशलाः कर्मकराः, नगरस्य पुरस्य, मार्गान् पथः, उक्षाम्प्रचक्रुः प्रसिषिचुः ( रजःप्रमार्जनार्थमित्यर्थः)। उक्षान् इति पाठे उक्षा अस्ति एषामिति विगृह्य अर्शआदित्वादचि मार्गविशेषणं ज्ञेयम्। ध्वजान् केतून् बबन्धुः उच्छ्राययाम्बभूवुः, खधूपान् आकाशदीपान् मुमुचुः तत्यजुः। दिशश्च आशाश्च विचित्रैः विविधवर्णैः पुष्पैः सुमनोभिः चकरुः आच्छादयाञ्चक्रुः। कारकस्यैकस्यानेकक्रियायोगाद्दीपकालङ्कारः।

**कोशः**— प्रवीणे निपुणाभिज्ञ-विज्ञ-निष्णात-शिक्षिताः।
दिशश्च ककुभः काष्ठा आशाश्च हरितश्च ताः।

**समासः**—खे धूपाः खधूपाः, तान्। विविधानि चित्राणि येषु तानि विचित्राणि, तैः (बहु०)।

**तिङन्तः**—उक्ष सेचने इति भौवादिक धातोः लिटि, 'इजादेश्च गुरुमतोऽनृच्छः ३।१।३६' इति आमागमे, ततः प्रपूर्वकस्य कृञः 'कृञ्चानुप्रयुज्यते लिटि ३।१।४०' इत्यनेन अनुप्रयोगे, द्वित्वादि कार्ये उक्षाम्प्रचक्रुः इत्यादि रूपाणि। आमन्तात् कृञोऽनुप्रयोगस्तु व्यवधानेऽपि कविभिः कृतो दृश्यते। 'तं पातयां प्रथममास' 'प्रभ्रंशयां यो नहुषं चकार' इत्यादि। बन्ध बन्धने इति क्र्यादिस्थधातोः लिटि द्वित्वादौ बबन्धुः। मुच्लृ मोचने इति तौदादिक मुच्-धातोः लिटि मुमुचुः। कॄ विक्षेपे इति तौदादिकस्य लिटि द्वित्वादौ 'ऋच्छत्यॄताम् ७।४।११' इति गुणे चकरुः।

**वाच्य०**—नियुक्तैः निपुणैः मार्गा उक्षाम्प्रचक्रिरे। ध्वजा बबन्धिरे। खधूपाः मुमुचिरे। दिशश्च पुष्पैः विचकरिरे।

**शिक्षा**— महोत्सवे सर्वेऽपि पदार्थाः परिजनपुरजनादयोऽपि परिष्कर्तव्याः पुरस्कर्तव्या इति शिक्षयति नगरालङ्करणमिषेणेति ॥५॥

सम्प्रति केकयीकर्तृकं रामवनवासवरप्रस्ताव प्रस्तौति—

**मातामहाऽऽवासमुपेयिवांसं मोहादपृष्ट्वा भरतं तदानीम्।**
**तत् केकयी सोढुमशक्नुवाना ववार रामस्य वनप्रयाणम् ॥६॥**

अन्वयः—मोहात् तत् सोढुम् अशक्नुवाना केकयी तदानीं मातामहावासम् उपेयिवांसं भरतम् अपृष्ट्वा रामस्य वनप्रयाणं ववार।

हिन्दी—अज्ञानवश रामाभिषेचन महोत्सवको न सहने वाली कैकेयीने ननीहाल गये भरतकी राय न लेकर ( दशरथसे ) वर रूपमें रामका वनवास मांग लिया।

व्याख्या—मोहात् अज्ञानात्, तत् रामाभिषेचनं सोढुम् मर्षितुम् अशक्नुवाना असमर्था केकयी राजप्रिया तन्नाम्नी राज्ञी, तदानीं तस्मिन् काले, मातामहावासम् मातामहनिवासम् उपेयिवांसम् प्राप्तम् भरतम् स्वपुत्रम् अपृष्ट्वा असम्मन्त्र्य, रामस्य रामचन्द्रस्य (अतिप्रियस्यापि), वनप्रयाणम् काननप्रस्थानम्, ववार वृतवती ( पूर्वदत्तनिजवरमेवादातुमियेषेत्यर्थः )। सहेतुककार्योपन्यासात् काव्यलिङ्गम्।

कोशः—अटव्यरण्यं विपिनं गहनं काननं वनम्।
अथ मोहो नृलिङ्गः स्यादविद्यायां च मूर्च्छने—(इति मेदिनी)।

तद्धितः—'पितृव्य-मातुल-मातामह-पितामहाः ४।२।३६' इति मातापितृभ्यां पितरि डामहच्' इत्यर्थे मातृशब्दात् डामहच् प्रयये डित्त्वाट्टिलोपे मातामहशब्द-सिद्धिः। तस्य आवासः मातामहावासः, तम्।

कृदन्तः—अपृष्ट्वा इति प्रच्छ् धातोः 'समानकर्तृकयोः पूर्वकाले ३।४।२१' इति क्त्वा प्रत्ययेऽनुबन्धलोपे 'व्रश्चभ्रस्जसृज० ८।२।३६' इति छस्य षत्वे, तकारस्य टकारे 'क्त्वातोसुन्कसुनः १।१।४०' इति अव्ययसंज्ञायाम् रूपम्। 'शकधृषज्ञा० ३।४।६५' इति तुमुनि, 'सहिवहोरोदवर्णस्य ६।३।११२' इति ओत्वम् सोढुमिति। शक्लृ शक्तौ इति स्वादिस्थ—शक्धातोः 'ताच्छील्यवयो० ३।२।१२९' इति चानशि सार्वधातुकत्वात् 'स्वादिभ्यः श्नुः ३।१।७३' इति श्नु-विकरणे 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ ६।४।७७' इति उवङि शक्नुवानशब्दात् टापि शक्नुवानेति।

तिङन्तः—वृञ् धातोः लिटि, णलि, द्वित्वादिकार्य्ये 'अचो ञ्णिति ७।२।११५' इति वृद्धौ ववार।

वाच्य०—अशक्नुवानया केकय्या वनप्रयाणम् वव्रे।

शिक्षा–प्रियतममपि रामं वनं प्रेषयति। अनिच्छन्तमपि भरतं राज्येऽभिषेचयति—इत्युभयमपि केकयी स्वशिरसि कलङ्कमासञ्जयतीत्यहो विधिविलसितमित्येवाद्भुतं शिक्षणम् ॥६॥

सम्प्रति केकयीवरपरिणाममाख्याति—

**कर्ण-जपैराहित-राज्य-लोभा, स्त्रैणेन नीता विकृतिं लघिम्ना।**
**राम-प्रवासे व्यमृशन् न दोषं, जनाऽपवादं स-नरेन्द्र-मृत्युम् ॥७॥**

अन्वयः—कर्णजपैः आहितराज्यलोभा स्त्रैणेन लघिम्ना विकृतिं नीता (कैकयी) रामप्रवासे सनरेन्द्रमृत्युं जनापवादं दोषं न व्यमृशत् ।

हिन्दी—चुगलखोरों द्वारा राज्यलोभके व्यामोहमें फँसाई गई स्त्रीसम्बन्धी हीनभावोंसे ग्रस्त कैकयीने रामके वनवास पर राजाकी मृत्युके साथ-साथ लोकापवाद रूपी दोषोंका विचार नहीं किया !

व्याख्या—कर्णजपैः सूचकैः (मन्थरादिभिः), आहितराज्यलोभा जनितराज्यतृष्णा, स्त्रैणेन नारीसम्बन्धिना लघिम्ना लाघवेन, विकृतिं विकारं नीता प्रापिता केकयी ( राजनीतिज्ञा राज्ञी ), रामप्रवासे राघवनिर्वासने, सनरेन्द्रमृत्युं दशरथराजनिधनसहितं जनापवादं लोकनिन्दात्मकं दोषं दूषणं, न व्यमृशत् न व्यचीचरत् । काव्यलिङ्गमेव वरहेतूल्लेखात् ।

कोशः—कर्णेजपः सूचकः स्यात् । अवर्णाक्षेप-निर्वाद-परीवादापवादवत् । उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे—इत्याद्यमरः ।

समासः—आहितो राज्यलोभो यस्याः सेति (बहु०)। राज्यस्य लोभः राज्यलोभ इति षष्ठीतत्पुरुषः । रामस्य प्रवासः, तस्मिन् । जनानाम् अपवादः जनापवादः, तम् । नराणामिन्द्रः नरेन्द्रः । नरेन्द्रस्य मृत्युः नरेन्द्रमृत्युः । नरेन्द्रमृत्युना सह वर्तते इति सनरेन्द्रमृत्युः 'तेन सहेति० २।२।२८' इत्यनेन समासे, समावे सनरेन्द्रमृत्युम् । बहुधा कृतोऽयं समासः तत्र तत्र द्रष्टव्यः ।

तद्धितः—स्त्रीषु भवः स्त्रैणः ।'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ४।१।८७इति नञि,आदिवृद्धौ स्त्रैणः, तेन । लघोर्भावो लघिमा'पृथ्वादिभ्य इमनिज्वा ५।१।१२२' इति इमनिचि, अनुबन्धनिवृत्तौ, टिलोपे लघिमा, तेन ।

कृदन्तः कर्णे जपन्ति इति विग्रहे 'स्तम्बकर्णयोरमिजपोः ३।२।१३' इति

सप्तम्यन्ते कर्णे उपपदे जप् धातोः अचि प्रत्यये 'तत्पुरुषे कृति बहुलम् ६।३।१४' इति सप्तम्या अलुकि कर्णेजपाः, तैः ।

तिङन्तः मृश आमर्शने इति तौदादिकधातोर्लङि 'तुदादिभ्यः शः ३।१।७७' इति शविकरणे ङित्वात् 'क्ङिति च १।१।५' इति गुणनिषेधे, अडागमे, व्युपसर्गयोगे व्यमृशत् ।

वाच्य०—आहितराज्यलोभया विकृतिं नीतया सनरेन्द्रमृत्युः जनापवादः दोषः न व्यमृश्यत ।

शिक्षा—'मतिर्दोलायते सत्यं साधोरपि खलोक्तिभिः' इत्यादिनीतिं शिक्षयति । यतो हि अतिप्रियोऽपि रामस्तयाऽतिवाहित एवेति ॥७॥

सम्प्रति राज्ञो विवशतामाख्याति—

**वसूनि देशांश्च निवर्तयिष्यन्, रामं नृपः संगिरमाण एव ।**
**तयाऽवजज्ञे, भरताऽभिषेको, विषाद-शङ्कुश्च मतौ निचख्ने ॥८॥**

अन्वयः— रामं निवर्तयिष्यन् वसूनि देशांश्च सङ्गिरमाण एव नृपः तया अवजज्ञे मतौ भरताभिषेकः विषादशङ्कुश्च निचख्ने ।

हिन्दी—रामके वनगमनको रोकनेके लिए धन तथा अनेक देश देनेका संकल्प करने वाले राजाको कैकयीने फटकार दिया और उनकी बुद्धिमें भरतके राज्याभिषेक रूपी दूसरी कील ठोंक दी ।

व्याख्या—रामं राघवं, निवर्तयिष्यन् परावर्तयिष्यन् (वनगमनादित्यर्थः), वसूनि धनानि, देशान् जनपदान् च सङ्गिरमाणः प्रतिजानान एव निश्चयेन तया केकय्या अवजज्ञे अवमेने ( अस्वीकारादित्यर्थः )। मतौ बुद्धौ विवशतया), भरतस्याभिषेकः केकयीपुत्रस्यैव राज्यारोहणम् विषादशङ्कुः शोकशल्यं च निचख्ने न्यखन्यत । राज्ञः सर्वमपि प्रस्तावं तिरस्कृत्य केकयी भरताभिषेकं राम-विवासनमिति वरद्वयमेवाजग्राह नान्यत् किञ्चन शुश्रावेति निष्कर्षः । रूपकालङ्कारः ।

कोशः—रिक्थमृक्थं धनं वसु ।

वा पुंसि शल्यं शङ्कुर्ना शर्वला तोमरोऽस्त्रियाम्—इत्यमरः ।

समासः—भरतस्य अभिषेकः भरताभिषेकः। विषाद एव शङ्कुः विषादशङ्कुः । सर्वत्र षष्ठीतत्पुरुषः । उत्तरत्र मयूरव्यंसकादिसमासः ।

**कृदन्तः**—निवर्तयिष्यतीति विग्रहे वर्ति-णिजन्तधातोः 'लृटः सद्वा ३।३।१४' इति सत्प्रत्यये, शतरि,'स्यतासी लृलुटोः ३।१।३३' इति स्ये विकरणे, इडागमे, गुणे "अतो गुणे ६।१।९७' पररूपे, सौ रूपम् । सम्पूर्वकात् गॄ निगरणे इति गॄधातोः तौदादिकात् शानचि, शे ॠत इत्वे आने मुगागमेन सौ रूपम् ।

**तिङन्तः**— नि पूर्वकात् खन् धातोः अवपूर्वकात् ज्ञाधातोः कर्मणि लिटि, द्वित्वादिकार्य्ये 'गमहनजनखनघसां लोपः क्ङित्यनङि ६।४।९८' इत्यलोपे, अन्यत्र 'आतो लोप इटि च ६।४।६४' इति आलोपे निचख्ने अवजज्ञे च ।

**वाच्य०**—निवर्तयिष्यन्तं सङ्गिरमाणं नृपं सा अवजज्ञौ । भरताभिषेकं विषादशङ्कुं च मतौ निचखान ।

**शिक्षा**—आपदामापतन्तीनां हितोऽप्यायाति हेतुताम् ।
मातृजङ्घा हि वत्सस्य स्तम्भीभवति बन्धने ॥

केकय्याः प्रियतरोऽपि रामोऽत्र वने तत्कारणादेव याति । अपरश्च सपत्नीर्ष्या सर्वप्रबला भवति । अन्यच्च अस्थिरा हि स्त्रीबुद्धिः । पूर्वन्तु मन्थरां निन्दति भर्त्सयति, पश्चाच्च तदाज्ञावशवर्तिनी सर्वं विलोममेवाचरति । एकः पक्षस्तु केकयीं बहु प्रशंसति । यतो हि सा दृढतया सर्वसामञ्जस्यं सम्पादयति । तथा हि—

सत्यप्रतिज्ञोऽभवदाजिराजो रामोऽपि लोके स्थिरकीर्तिरासीत् ।
नीतिं च नेतॄन् समशिक्षयद् या, केकय्युपज्ञं किल वाल्मिकीयम् ॥

सा केकयी किल जनैरभिनन्दनीया, यस्तां विनिन्दति नरः स हि निन्दनीयः ।
प्राणप्रियं त्यजति या रघुनन्दनं तं, नीतिज्ञतां वहति वेत्ति न लोकनिन्दाम् ॥

इत्यादि बहु शिक्षयति पद्यम् ॥८॥

सम्प्रति राजकर्तृकं निश्चितकर्तव्यमाख्याति—

**ततः प्रविव्राजयिषुः कुमारमादिक्षदस्याऽभिगमं वनाय ।**
**सौमित्रि-सीताऽनुचरस्य राजा, सुमन्त्र-नेत्रेण रथेन शोचन् ॥ ९ ॥**

**अन्वयः**—ततः शोचन् कुमारं प्रविव्राजयिषुः राजा सौमित्रिसीतानुचरस्य अस्य सुमन्त्रनेत्रेण रथेन वनाय अभिगमम् आदिक्षत् ।

**हिन्दी**—( विवश हो ) रामको वनवास देनेकी इच्छासे शोकाकुल नरेशने लक्ष्मण और सीताके अनुचरणके साथ सुमन्त्र सारथीके रथसे प्रस्थानकी आज्ञा दी ।

**व्याख्या**—ततः केकयी दुराग्रहानन्तरम्, शोचन् परिदेवयमानो ( विवशः ) कुमारं रामं प्रविव्राजयिषुः प्रविवासयिषुः राजा दशरथः, सौमित्रि-सीतानुचरस्य लक्ष्मणजानकीसहायस्य,अस्य पुरोदितस्य प्रिय-पुत्रस्य, सुमन्त्रनेत्रेण सुमन्त्राख्यसारथिना रथेन स्यन्दनेन, वनाय काननाय, अभिगमं प्रयाणम्, आदिक्षत् आजिज्ञपत् । रथेन सह शुचा सहेति वा सहोक्तिरलङ्कारः ।

**कोशः**—नेत्रमधिगुणे वस्त्रे तरुमूले विलोचने ।

नेत्रं रथे च नाडयां च नेत्रो नेतरि भेद्यवत्—( इति विश्वः )

**समासः**—सौमित्रिश्च सीता चेति सौमित्रिसीते, सहचरत्वे सौमित्रेरभ्यर्हितत्वात् पूर्वं निपातः । अनुचरश्च अनुचरी च तौ अनुचरौ 'पुमान् स्त्रिया १।२।६७' इति पुंस एकशेषे, सौमित्रि-सीते अनुचरौ यस्य स सौमित्रिसीतानुचरः, तस्य । ताभ्याम् अनुचर्यते इति कर्मणि अच्प्रत्ययेनापि साधुः चरेष्टः ३।२।१६' प्रकरणे 'भिक्षासेना० ३।२।१७' इत्यत्र चकारादनुपूर्वस्यापिट- विधानाद्वा । सुमन्त्रः नेत्रो (नेता) यस्य स सुमन्त्रनेत्रः, तेन ।

**तद्धितः**—सुमित्राया अपत्यं पुमान् सौमित्रिः इत्यत्र सुमित्रा-शब्दात् 'बाह्वादिभ्यश्च ४।१।९६' इति इञि 'तद्धितेष्वचामादेः ७।२।११७' इत्यादेरचो वृद्धौ 'यस्येति च ६।४।१४८' इत्याकारलोपे सौमित्रिः ।

**कृदन्तः**—प्रविव्राजयिषतीति प्रविव्राजयिषुः, व्राजीति ण्यन्तात् सन्, ततः 'सनाशंसभिक्ष उः ३।२।१६८' इति उप्रत्ययः । 'ग्रहवृदृनिश्चिगमश्च ३।३।५८' इत्यप् अभिगमः । 'दाम्नी० ३।२।१८२' इति ष्ट्रनि नेत्रम् ।

**तिङन्तः**—आङ् पूर्वकात् दिश् धातोः लुङि, च्लौ, तस्य 'शल इगुपधादनिटः क्सः ३।१।४५' इति क्सादेशे, 'व्रश्चभ्रस्ज०' इति शस्य षत्वे, 'षढोः कः सि ८।२।४१' षस्य कत्वे, सत्य षत्वे, क्षकारे, अडागमे आदिक्षत् ।

**वाच्य०**—प्रविव्रजयिषुणा शोचता तेन अभिगम आदेशि ।

**शिक्षा**—धर्म-पाश-बद्धो राजा यन्त्रवत् स्वेच्छाविरुद्धं सर्वं करोति । विधिः कारयति—इत्यहो विधेः प्राबल्यम् । 'विधिरहो बलवानिति मे मतिः'॥९॥

आकस्मिकायां रामाभिषेकविधातघटनायां विविधं जनताभावमाह—

**केचिन् निनिन्दुर् नृपम-प्रशान्तं, विचुक्रुशुः केचन साऽस्रमुच्चैः ।**
**ऊचुस् तथाऽन्ये भरतस्य मायां, धिक् केकयीमित्यपरो जगाद ॥१०॥**

**अन्वयः**—केचित् अप्रशान्तं नृपं निनिन्दुः। केचन सास्रम् उच्चैः विचुक्रुशुः। तथा अन्ये भरतस्य मायाम् ऊचुः। अपरः केकयीम् धिक् इति जगाद।

**हिन्दी**—रामके वनवासकी चर्चा सुनते ही कुछ लोगोंने अशान्त नरेश की निन्दाकी तो कुछ फूट-फूटकर रोने लगे, कुछने उसे भरतकी काली करतूत बताथी तो कुछ कैकयीको ही धिक्कारने लगे।

**व्याख्या०**—सर्वथा जनतेच्छाविघाते जाते—केचित् जनाः अप्रशान्तं अशान्तकामवृत्ति ( केकयीवशगमित्यर्थः ) नृपं दशरथं निनिन्दुः जगर्हिरेः। केचन नराः सास्रं सबाष्पम् उच्चैः स्फारम् विचुक्रुशुः चक्रन्दुः ( हा रामेति वदन्तः ) तथा एवम् अन्ये इतरे ( नीतिज्ञाः ) भरतस्य केकयीजातस्य मायां छद्म ऊचुः कथयामासुः। अपरः अन्यः केकयीम् ताम् मध्यमां राज्ञीं धिक् धिक्कारः इति इत्थं जगाद उवाच। अत्र धिग्योगे केकयी शब्दे द्वितीया—'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते।' कर्मण एकस्यानेकत्वं ग्रहीतृभेदात् इत्युल्लेखालकारः।

**कोशः**—धिक् धिङ् निर्भर्त्सननिन्दयोः ( इति विश्वः )।
दृग्दृष्टी चास्रु नेत्राम्बु रोदनं चास्रमश्रु च—इत्यमरः।
अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते ( इति मेदिनी )।

**समासः**—प्रकर्षेण शान्तः प्रशान्तः। 'कुगतिप्रादयः २।२।१८' इति प्रादिसमासे, न प्रशान्तः अप्रशान्तः इति 'नञ् २।२।६' इति नञ्समासे रूपम्।

**तिङन्तः**—णिदि कुत्सायाम् इति भौवादिक निन्द् धातोः लिटि, द्वित्वादौ निनिन्दुः। क्रुश आह्वाने रोदने च इति धातोः लिटि 'असंयोगाल्लिट् कित् १।२।५' इति कित्वात् 'क्ङिति च १।१।५ इति गुणनिषेधे, द्वित्वादि कार्य्यम्। ब्रूञ् व्यक्तायां वाचि इति ब्रूधातोः लिटि विधीयमाने, पूर्वमेवार्द्धधातुकविवक्षायाम् 'ब्रुवो वचिः २।४।५३' इति वचादेशे, 'सम्प्रसारणं तदाश्रयं च कार्यं बलवद्' इति परिभाषातः 'वचिस्वपियजादीनां किति ६।१।१५' इति सम्प्रसारणे ततो द्वित्वे, ऊचुः। गद व्यक्तायां वाचि इति धातोर्लिटि द्वित्वेऽभ्यासकार्य्ये 'अत उपधायाः ७।२।११६' इति वृद्धिः जगाद।

वाच्य०—कैश्चिदप्रशान्तो नृपो निनिन्दे। कैश्चन चुक्रुशे। अन्यैर्भरतस्य माया ऊचे। अपरेण इति जगदे।

शिक्षा—अनेकरूपाः खलु चित्तवृत्तयः। कार्य्यस्यैकविधत्वेऽपि चित्तवृत्तिभेदाद्द्विविधत्वमायातीति लोकव्यवहारं शिक्षयति ॥१०॥

तत्रैवान्यजनताभावमाख्याति—

**गतो वनं श्वो भवितेति रामः, शोकेन देहे जनताऽतिमात्रम्।**
**धीरास् तु तत्र च्युत-मन्यवो ऽन्ये, दधुः कुमाराऽनुगमे मनांसि ॥११॥**

अन्वयः—जनता 'रामः श्वो वनं गतो भविता' इति शोकेन अतिमात्रं देहे। तत्र अन्ये धीराः तु च्युत-मन्यवः सन्तः कुमारानुगमे मनांसि दधुः।

हिन्दी—'कल राम वन चले जायेंगे' इस चिन्ताग्निसे जनता जल उठी, पर वहाँ उपस्थित कुछ धीर जनोंने यह कहकर संतोषकी सांस ली कि हम रामका अनुगमन करेंगे।

व्याख्या—जनता जनसमूहः, 'रामः राघवः श्वः आगामिनि दिने वनं काननं गतः प्रस्थितः भविता वर्तिता' इति अस्मात्कारणात् शोकेन मन्युना अतिमात्रम् अत्यन्तं देहे दग्धा। तत्र अयोध्यायां,तु किन्तु, अन्ये अपरे धीराः धैर्य्यशालिनः पुरुषाः च्युतमन्यवः विगतशोकाः सन्तः, कुमारानुगमे किशोरानुव्रजने मनांसि चेतांसि दधुः दधिरे। शोकदाहे वनगमो हेतुः, अनुगमो मन्युच्योते हेतुरिति काव्यलिङ्गम्।

कोशः—चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः।
मन्युशोकौ तु शुक् स्त्रियाम्—इत्यमरः।

समासः—च्युतः मन्युः येषां ते च्युतमन्यवः (बहु०)। कुमारस्य अनुगमः कुमारानुगमः, तस्मिन्।

तद्धितः—'ग्रामजनबन्धुभ्यस्तल् ४।२।४३' इति तलि, टापि, जनता।

कृदन्तः—गम्धातोः 'निष्ठा ३।२।१०२' इति निष्ठासञ्ज्ञके क्तप्रत्यये, 'अनुदात्तोपदेशवनति० ६।४।३७' इति मकारलोपे गतः। 'धातुसम्बन्धे प्रत्ययाः ३।४।१' इति सूत्रबलात् गत इति भूतकालः श्वो भवितेति भविष्यत्कालेन सम्बध्यमानः साधुः।

तिङन्तः—भू सत्तायाम् इति धातोः लुटि, 'स्यतासी लृलुटोः ३।१।३३'

इति तासिप्रत्यये, 'लुटः प्रथमस्य डारौरसः २।४।८५' इति तिपः डादेशे, टेः ६।४।१४३' इति टिलोपे, 'आर्द्धधातुकस्येड् वलादेः ७।२।३५' इति इटि, गुणे, अवादेशे भविता। दह भस्मीकरणे इति धातोः लिटि, आत्मनेपदे, कर्मणि द्वित्वादिकार्ये 'अत एकहल्मध्येऽनादेशादेर्लिटि ६।४।१२०' इति एत्वेऽभ्यासलोपे च देहे। डुधाञ् धारणपोषणयोः इति धाधातोर्लिटि, द्वित्वादिकार्ये, 'आतो लोप इटि च ६।४।६४' इति आलोपे दधुः।

**वाच्य०**—'वनं गतेन रामेण भविता' इति शोकः जनतां ददाह। अन्यैः च्युतमन्युभिः धीरैः मनांसि दधिरे।

**शिक्षा**—शोककरणापेक्षया कुमारानुगमो वरीयानिति धीरोक्त्या यथाप्राप्तं कर्तव्यम् शिक्षयति ॥११॥

कुमारयोर्धैर्यप्रभावाज्जनतासान्त्वनां प्रस्तौति कविः—

**प्रस्थास्यमानावुपसेदुषस् तौ, शोशुच्यमानानिदमूचतुस् तान्।**
**किं शोचतेहाऽभ्युदये बताऽस्मान्, नियोग-लाभेन पितुः कृतार्थान्॥१२॥**

**अन्वयः**—प्रस्थास्यमानौ तौ उपसेदुषः शोशुच्यमानान् तान् पितुः नियोग-लाभेन कृतार्थान् अस्मान् इह अभ्युदये बत ( यूयम् ) किं शोचत इदम्-ऊचतुः।

**हिन्दी**—वनकी ओर प्रस्थान करनेवाले राम-लक्ष्मणने अपने निकट आये शोक-संतप्त लोगोंसे कहा कि पिताकी आज्ञाको पालनकर कृतार्थ होते समय आप हम लोगोंके लिये शोक करें यह आश्चर्यकी बात है।

**व्याख्या**—प्रस्थास्यमानौ प्रवत्स्यन्तौ तौ रामलक्ष्मणौ, उपसेदुष उपढौकितवतः ( समीपस्थितान् इत्यर्थः ) शोशुच्यमानान् अतिशयेन भृशं शोकं कुर्वाणान्, तान् अयोध्याजनान्, पितुः जनकस्य नियोगलाभेन आदेशप्राप्त्या, कृतार्थान् सफलान् अस्मान् नः अशोच्यान्, इह अस्मिन् अभ्युदये समृद्धिकाले बत खेदास्पदम् यूयम् किं किमर्थं शोचत शोकं कुरुत। अहो! आश्चर्यमिदं यदभ्युदये शोकः।

**कोशः**—अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु।

अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्—इत्यमरः।

**कृदन्तः**—'समवप्रविभ्यः स्थः १।३।२२' इति तङि, लृटि, शानचि, प्रस्थास्यमानौ। उपपूर्वकात् सद् धातोः लिटि 'भाषायां सदवसश्रुवः ३।२।१०८' इति क्वसु-प्रत्यये उपसेदिवस् शब्दात् शसि 'वसोः सम्प्रसारणम् ६।४।१३१' इति

सम्प्रसारणे निमित्ताभावाद् नैमित्तिकस्य इटोऽप्यभावे 'सम्प्रसारणाच्च ६।१।१०८' इति पूर्वरूपे, षत्वे, उपसेदुषः। शुच्-धातोः यङन्तत्वाल्लटि, शानचि शोशुच्यमानान्। अशोके शोको यथा तथैव कृतार्थेऽकृतार्थतेति असम्भवसम्भवातिशयोक्तिः।

वाच्य०—प्रस्थास्यमानाभ्यां ताभ्याम् उपसेदिवांसः शोशुच्यमानास्ते इदम् ऊचिरे 'कृतार्था वय किं शोच्यामहे' इति।

शिक्षा—यत्र सर्वा जनता शोकमग्ना तत्रैव रामलक्ष्मणौ अ-शोशुच्यमानौ आस्ताम् इत्यहो धैर्यम् तयोः। 'सम्पदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम्' इत्यादि शिक्ष्यम् ॥१२॥

पितृपकारं तौ स्पष्टयतः—

**असृष्ट यो यश्च भयेष्वरक्षाद्, यः सर्वदाऽस्मानपुषत् स्व-पोषम्।**
**महोपकारस्य किमस्ति तस्य, तुच्छेन यानेन वनस्य मोक्षः ॥१३॥**

**अन्वयः**—यः अस्मान् असृष्ट। यश्च भयेषु अस्मान् अरक्षीत्। यः अस्मान् सर्वदा स्वपोषम् अपुषत्। महोपकारस्य तस्य तुच्छेन वनस्य यानेन मोक्षः अस्ति किम्? नहीति काकुः।

**हिन्दी**—जिस पिताने जन्म दिया, भयसे रक्षा की और अपनी क्षमताके अनुरूप लालन-पालनकर बड़ा किया; क्या जरासा वनवास - रूप उनकी आज्ञाका पालन करने मात्रसे हम उऋण हो सकते है? (नहीं)।

**व्याख्या**—यः पिता, अस्मान् रामादीन्, असृष्ट अजीजनत्। यश्च भयेषु भीतिषु अस्मान् अरक्षीत् अगोपीत्। यश्च अस्मान् सर्वदा स्वपोषम् निजधनानुसारम् अपुषत् अपासीत्। महोपकारस्य अतिशयोपकृतेः तस्य पितुः, तुच्छेन अकिञ्चित्करेण, वनस्य काननस्य यानेन गमनेन, मोक्षः ऋणविमुक्तिः अस्ति किम्-इति प्रश्ने नहीत्युत्तरम्। न्यूनेन महतो विनिमयरूपा परिवृत्तिरलङ्कृतिः।

**समासः**—महान् उपकारो यस्य स महोपकारः (बहु०)। 'आन्महतः० ६।३।४६' इति आत्वम्।

**कृदन्तः**—स्वपोषम् (३-४ पद्ये)। या-धातोर्भावे ल्युटि यानम्, तेन।

**तिङन्तः**—सृज विसर्गे इति दैवादिकस्य आत्मनेपदित्वात् तङि, सिचि, 'झलो झलि ८।२।२६' इति सिचो लोपे, 'व्रश्चभ्रस्ज० ८।२।३६' षत्वे, ष्टुत्वे,

असृष्ट । रक्ष् धातोः लुङि, सेटः धातोः सिद्धिवत् सिद्धिः। पुष् धातोः'पुषादिद्युता-द्य्लृदितः परस्मैपदेषु ३।१।५५' इति च्लेरङि अपुषत् ।

**वाच्य०**—येन वयम् असृक्ष्महि । येन अरक्षिष्महि। येन अपुक्ष्महि । किम् तस्य मोक्षेण भूयते ?

**शिक्षा**—'सर्वार्थसम्भृतो देहो जनितः पोषितो यतः । किं तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा' ॥ १४ ॥

पितुरादेशपालनमेवान्यथापि पुनः समर्थयति—

**विद्युत्-प्रणाशं स वरं प्रनष्टो, यद्वोर्ध्व-शोषं तृण-वद् विशुष्कः ।**
**अर्थे दुरापे किमुत प्रवासे, न शासनेऽवास्थित यो गुरूणाम् ॥१४॥**

**अन्वयः**—प्रवासे किमुत, दुरापेऽपि गुरूणां शासने अर्थे यः न अवास्थित स विद्युत्प्रणाशं प्रनष्टः वरम् । यद्वा तृणवद् ऊर्ध्वशोषं विशुष्कः वरम् ।

**हिन्दी** - वनवासमें तो धराही क्या है ? इससे भारी, अत्यंत कष्ट - साध्य आदेश मिलने पर भी जो गुरु-अवज्ञा करते हैं, उनका बिजुलीके समान तत्काल नष्ट होना या तृण-तुल्य सूख जाना ही उत्तम है ।

**व्याख्या**—प्रवासे वनगमने, किमुत न किञ्चित् इत्यर्थः, दुरापेऽपि दुर्लभेऽपि, गुरूणां पित्रादीनां, शासने आदेशे अर्थे कर्तव्यविषये, यः जनः न अवास्थित नहि दृढतया अवृतत् । स जनः विद्युत्प्रणाशं तडिदिव विनश्य प्रनष्टः प्रलयं गतः चेद्वरम् मनाक् श्रेष्ठम् । यद्वा अथवा तृणवत् शुष्कतुच्छकाष्ठतुल्यम् निःसारवत् ऊर्ध्वशोषम् उपरितः शुष्यन्, विशुष्कः शोषं गतः, वरम् ईषत् श्रेष्ठम् । उपमालङ्कारः ।

**कोशः** – देवावृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक् प्रियम् ।
तडित्सौदामनी विद्युच्चञ्चला चपला अपि ।
शष्पं बालतृणं घासो यवासं तृणमर्जुनम्—इत्याद्यमरः ।

**कृदन्तः**—दुःखेन आप्यते इति विग्रहे दुरुपसर्गपूर्वकात् आप्लृ व्याप्तौ इति स्वादिस्य आप्-धातोः 'ईषद्दुःसुषु कृच्छ्राकृच्छार्थेषु खल् ३।३।१२६' इति खलि दुरापः, तस्मिन् । विद्युदिव प्रणश्य इति विग्रहे 'उपमाने कर्मणि च ३।४।४' इति चकारात् कर्त्रोर्जीवपुरुषयोः० ३।४।४३' इत्यतः कर्तृग्रहणानुवृत्तौ उपमाने विद्युच्छब्दे उपपदे प्रपूर्वकात् नश् धातोः णमुलि 'उपसर्गादसमासेऽपि णोपदेशस्य ८।४।१४' इति णत्वे विद्युत्प्रणाशम् । 'कषादिषु यथाविध्यनुप्रयोगः

३।४।४६' इत्यनुप्रयोगे प्रनष्ट इति । ऊर्ध्वं शुषित्वा इत्यर्थे ऊर्ध्वं इत्युपपदे शुष् धातोः 'ऊर्ध्वे शुषिपूराः ३।४।४४' इति णमुलि ऊर्ध्वंशोषम् ।'कषादिषु० ३।४।४६' इति यथाविध्यनुप्रयोगे क्तप्रत्यये, 'शुषः कः ८।२।५१' इति ककारे शुष्कः ।

वाच्य०—येन न अवास्थायि तेन प्रनष्टेन विशुष्केण भूयताम् ॥१४॥

रामोपदिष्टं जनता-कर्तव्यमाख्याति—

**पौरा निवर्तध्वमिति न्यगादीत्, तातस्य शोकाऽपनुदा भवेत ।**
**मा दर्शताऽन्यं भरतं च मत्तो निवर्तयेत्याह रथं स्म सूतम् ॥१५॥**

अन्वयः—हे पौराः ! यूयम् निवर्तध्वम् । तातस्य शोकापनुदा भवेत । भरतं मत्तः अन्यं मा दर्शत—इति रामः न्यगादीत् । रथं निवर्तय इति सूतं च आहस्म ।

हिन्दी—हे पौरजनो ! आप लोग लौटें, पिताजीके शोकको दूर करें और भरतको मुझसे भिन्न न मानें—ऐसा अनुरोध करते हुए रामने सारथिसे भी लौट जानेको कहा ।

व्याख्या—हे पौराः हे नागरिकाः ! यूयं निवर्तध्वम् प्रतियात । तातस्य मज्जनकस्य शोकापनुदाः मन्यूपहर्तारः भवेत स्यात । भरतं मम प्रियभ्रातरम्, मत्तः मत्सकाशात् अन्यम् भिन्नं, मा दर्शत मा द्राष्ट ( न पश्यत ) इति न्यगादीत् अवादीत् । रथं स्यन्दनं, निवर्तय परावर्तय इति इदम् सूतम् सारथिम् (सुमन्त्रम्) च पुनः आह स्म कथितवान् । अभेदे भेदोपन्यासात्तथा पौराणामनेकक्रियायोगादतिशयोक्तिदीपकसंकरः ।

कोशः - मन्युशोकौ तु शुक् स्त्रियाम् ।
यानं चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः—इत्याद्यमरः
रथः पुमानवयवे स्यन्दने वेतसेऽपि च—(इति मेदिनी) ।

कृदन्तः—शोकम् अपनुदति इत्यर्थे 'तुन्दशोकयोः परिमृजापनुदोः ३।२।५' इति क-प्रत्यये 'उपपदमतिङ् २।२।१९' इति समासे, अमो लुकि, दीर्घे, शोकापनुदाः । मत्तः—मद् इत्यर्थे अस्मच्छब्दात् 'पञ्चम्यास्तसिल् ५।३।७' इति तसिलि 'प्रत्ययोत्तरपदयोश्च ७।२।९८' इति मदादेशे, चर्त्वे, अव्ययत्वम् ।

तिङन्तः—भू धातोः विधिलिङि 'यासुट् परस्मैपदेषूदात्तो ङिच्च ३।४।१०३' इति यासुडागमे, 'लिङः सलोपोऽनन्त्यस्य ७।२।७९' इति सलोपे 'अतो येयः

७।२।८०' इति इयादेशे 'लोपोव्योर्वलि ६।१।६६' इति यलोपे भवेत। दृशेर्माङि लुङि, च्लौ, तस्य 'इरितो वा ३।१।५७' इत्यङि 'ऋदृशोऽङि गुणः ७।४।१६' इति गुणे, 'न माङ्योगे ६।४।७४' इति अडभावे दर्शत। आह स्म इत्यत्र ब्रू धातोः 'लट् स्मे ३।२।११८' इति लटि, 'ब्रुवः पञ्चानामादित आहो ब्रुवः ३।४।८४' इति आहादेशे, प्रत्ययस्य च णलि सिद्धिः।

वाच्य०—हे पौराः, युष्माभिः निवृत्यताम्। शोकापनुदैर्भूयेत। भरतो मत्तोऽन्यो मा दर्शि इति रामेण न्यगादि। सूतश्च रथो निवर्त्यताम् इति उच्यतेस्म।

शिक्षा—महत्यामपि विपत्तौ गिरिवदकम्पनो रामः सर्वान् स्वकर्तव्यं शिक्षयतीति 'विपदि धैर्यमथाभ्युदये क्षमेत्यादि नीतिं, शिक्षयति ॥१५॥

सम्प्रति रामकर्तृकं पौरजनपरित्यागपूर्वकं छलेन वनप्रस्थानमाह—

**ज्ञात्वेङ्गितैर् गत्वरतां जनाना-मेकां शयित्वा रजनीं स-पौरः।**
**रक्षन् वने-वास-कृताद् भयात् तान्, प्रातश् छलेनाऽपजगाम रामः ॥१६॥**

अन्वयः—रामः इङ्गितैः जनानां गत्वरतां ज्ञात्वा सपौरः एकां रजनीं शयित्वा वने-वासकृताद् भयात् तान् रक्षन् प्रातः छलेन अपजगाम।

हिन्दी—नागरिकोंके न लौटने तथा अपने साथ आगे चलनेकी भावनाको समझकर रामने वनवासजन्य भयसे रक्षा करते हुए पूरी रात उनके साथ बिताई और सुबह जल्दी उठकर आवश्यक कार्योंसे निवृत्त होने आदिके बहाने वहाँसे निकल भागे।

व्याख्या—रामः राघवः, इङ्गितैः चेष्टितैः, जनानां नागरिकलोकानां, गत्वरतां स्वानुगमशीलतां ज्ञात्वा विदित्वा, सपौरः सनागरिकः, एकां प्रथमां, रजनीं रात्रिं, शयित्वा सुप्त्वा, तान् नागरिकान्, वनेवासकृताद् काननिवासजनिताद् भयात् हिंस्र-प्राणिभीतेः रक्षन् गोपायन्, प्रातः अवशेषरात्रौ, छलेन व्याजेन (शौच-स्नानादिछद्मना), अपजगाम अपससार ॥१६॥

कोशः—विभावरीतमस्विन्यौ रजनी यामिनी तमी।
तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चन्द्रिकयान्विता।
आकारस्त्विङ्ग इङ्गितम्—इत्याद्यमरः।

समासः—वने वासः=वनेवासः। सप्तमीति योगविभागेन समासः। 'शय-

वासवासिष्वकालात् ६।३।१८' इति सप्तम्या वैकल्पिके अलुकि वनेवासेन कृतम् वनेवासकृतम्, तस्मात्। अत्रापि तृतीयेति योगविभागेन समासः। 'भीत्रार्थाना भय-हेतुः १।४।२५' इति अपादान-सञ्ज्ञायाम् 'अपादाने पञ्चमी २।३।२८ इति पञ्चमी। एका रजनी शयित्वा इत्यत्र 'कालाध्वनोरत्यन्तसंयोगे २।३।५' इति द्वितीया।

कृदन्तः—शीङ् स्वप्ने इति अदादिस्थधातोः 'समानकर्तृकयोः पूर्वकाले ३।४।२१' इति क्त्वा प्रत्यये, 'न क्त्वा सेट् १।२।१८' इति कित्वप्रतिषेधात् गुणे शयित्वा।

वाच्य०—सपौरेण रामेण रक्षता अपजग्मे।

शिक्षा – स्वकार्य्यं साधयेद्धीमान् कार्य्यध्वंसो हि मूर्खता' इति नीतिः ॥१६॥

सम्प्रति कविरपक्रान्ते रामे पौरजनकृत्यमाख्याति—

**अस्राक्षुरस्र करुण रुवन्तो, मुहुर्मुहुर् न्यश्वसिषु कवोष्णम्।**
**हा राम! हा कष्टमिति ब्रुवन्त., पराङ्मुखैस् ते न्यवृतन् मनोभिः ॥१७॥**

अन्वयः—ते करुण रुवन्त. अस्रम् अस्राक्षु। मुहुः मुहुः कवोष्णं न्यश्वसिषुः। हा राम! हा कष्टम् इति ब्रुवन्तः पराङ्मुखै. मनोभि. न्यवृतन्।

हिन्दी—( रामके खिसक जाने पर ) दीन हीन बने नागरिक रोते, रक्ताश्रु बहाते तथा गरम-गरम सास छोडनेके साथ-साथ यह कहते हुए घरोको लौट चले कि हा राम! आप कहाँ है? घोर अनर्थ हो गया ( जो आपको खोकर भी हम जोवित है )।

व्याख्या—ते पौराः, करुणं दीनं, रुवन्त शब्दायमानाः, अस्रम् वाष्पम् अस्राक्षु' अमुचन्। मुहुः मुहु' पुनः पुनः, कवोष्णं कदुष्ण न्यश्वसिषु. निश्वसित-वन्तः,। हा राम ( अस्मान् विहाय क्व गतोऽसि ), हा कष्टम् दु.खम् इति ब्रुवन्तः विलपन्तः, पराङ्मुखैः रामासक्तैः मनोभिः चेतोभिः, न्यवृतन् न्यवर्तिषत। पराङ्-मुखस्य निवर्तनासम्भव इत्यकारणे कार्योत्पत्तिर्विभावना।

कोशः—कोष्ण कवोष्ण मन्दोष्ण कदुष्णं त्रिषु तद्वति।
हा विषादशुगर्तिषु—इत्याद्यमर.।

समासः—ईषदुष्णम् कवोष्णम्। अत्र ईषदर्थे वर्तमानेन कुशब्देन 'कुगति-प्रादयः २।२।१८' इति नित्यसमासे, 'कव चोष्णे ६।३।१०७' इति कोः वैकल्पिके

कवादेशे, कादेशे च कोष्णम् कवोष्णम् । 'कोः कत्तत्पुरुषेऽचि ६।३।१०१' इति कदादेशे च कदुष्णम् इति रूपत्रयं भवति । पराक् मुखं येषां तानि, तैः ।

**कृदन्तः**—रुवन्तः–रुशब्दे इति अदादिस्थ रु धातोः, ब्रुवन्तः इति ब्रूधातोश्च तद्गणस्थस्यैव शतरि 'अचिश्नुधातु०' इति उवङि, जसि, 'उगिदचां सर्वनामस्थानेऽधातोः ७।१।७०' इति नुमि रूपे ।

**तिङन्तः**—सृज विसर्गे इति तौदादिकस्य परस्मैपदिनः 'सृजिदृशोर्झल्यमकिति ६।१।५८' इति अमागमे, 'वदव्रजहलन्तस्याचः ७।२।३' इति वृद्धौ, 'सिजभ्यस्तविदिभ्यश्च ३।४।१०९, इति झेर्जुसि अस्राक्षुः । न्यश्वसिषुः–हलन्तलक्षणाया वृद्धेः 'नेटि ७।२।४' इति निषेधे 'अतो हलादेर्लघोः ७।२ ७' इति वृद्धेरपि 'ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ७।२।५' इति प्रतिषेधो ज्ञेयः । न्यवृतन् इति 'द्युद्भ्यो लुङि १।३।९१' इति वैकल्पिकपरस्मैपदित्वात् द्युतादित्वादङि रूपम् ।

**वाच्य०**—तैः रुवद्भिः अस्रम् असर्जि, न्यश्वसि, ब्रुवद्भिः न्यवर्ति ।

**शिक्षा**—'शोकक्षोभे च हृदयं प्रलापैरेव धार्य्यते' इति ॥ १७ ॥

वृद्धस्य सुमन्त्रस्य सारथेरपि तादृशीं दशां वर्णयति—

**सूतोऽपि गङ्गा-सलिलैः पवित्वा, सहाऽश्वमात्मानमनल्प-मन्युः ।**
**स सीतयो राघवयोरधीयन्, श्वसन् कदुष्णं पुरमाविवेश ॥ १८ ॥**

**अन्वयः**—अनल्पमन्युः सूतः अपि सहाश्वम् आत्मानम् गङ्गासलिलैः पवित्वा ससीतयोः राघवयोः अधीयन् कदुष्णं श्वसन् पुरम् आविवेश ।

**हिन्दी**—गंगाजलसे अपनी शुद्धिकर रामलक्ष्मण-जानकीका स्मरण करते हुए शोकसंतप्त सारथी सुमन्त्रने अयोध्यामें कदम रखा ।

**व्याख्या**—अनल्पमन्युः अत्यधिकशोकः, सूतः सारथिः, अपि तथा सहाश्वम् सहयम्, आत्मानम् स्वम्, गङ्गासलिलैः दिव्य-नदीजलैः, पवित्वा शोधयित्वा, ससीतयोः सीतादेवीसहितयोः राघवयोः रामलक्ष्मणयोः, अधीयन् स्मरन्, कदुष्णं मन्दोष्णं श्वसन् प्राणन् पुरं नगरम्, आविवेश प्रविष्टवान् । सहोक्तिरलङ्कारः । गङ्गास्नानाद्रामविसर्जनपापनिवृत्तिरिति ध्वनिश्च ।

**कोशः**—गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा ।
भागीरथी त्रिपथगा स्वर्णदी ( सुरदीर्घिका ) भीष्मसूरपि ।
सूतः क्षत्ता च सारथिः ।
आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च—इत्याद्यमरः ।

**समासः**—न अल्पः अनल्पः, अनल्पः मन्युः यस्य स अनल्पमन्युः। गङ्गायाः सलिलानि गङ्गासलिलानि, तैः।

**कृदन्तः**—अधिपूर्वकात् इक् स्मरणे इति अदादिस्थधातोः शतरि अधीयन्, तद्योगे 'अधीगर्थदयेशां कर्मणि २।३।५२' इति कर्मणि षष्ठी राघवयोरिति। एवं श्वसन्नित्यपि शतृप्रत्यये।

**तिङन्तः**—आविवेश इति विश प्रवेशने इति तौदादिक विश्-धातोः लिटि, द्वित्वादिना सामान्यसिद्धिरेव।

**वाच्य०**—सूतेन अनल्पमन्युना अधीयता श्वसता पूः आविविशे।

**शिक्षा**—'मनःपूतं समाचरेत्' इत्यात्मानं पापिनं रामप्रवासनाद् मन्यमानः सूतः गङ्गासलिलैः स्वशुद्धिं कृत्वा पश्चात्तपन् प्रविशतीति प्रायश्चित्तशुद्धिमुपदिशति सर्वेभ्यः॥ १८॥

सम्प्रति रामवियुक्तायाः पुरो दीनां दशामाख्याति—

**प्रतीय सा पूर् ददृशे जनेन, द्यौर् भानु-शीतांशु-निराकृतेव।**
**राजन्य-नक्षत्रसमन्विताऽपि शोकाऽन्धकार-क्षत सर्व-चेष्टा॥१९॥**

**अन्वयः**—जनेन प्रतीय शोकान्धकारक्षतसर्वचेष्टा सा पूः राजन्यनक्षत्रसमन्विता अपि भानुशीतांशुनिराकृता द्यौः इव ददृशे। 'प्रतीयुषा सा ददृशे' इति पाठे प्रतीयुषा जनेनेति ज्ञेयम्।

**हिन्दी**—रामके पीछे पीछे जानेवाले लोगोंको लौटकर आनेपर प्रतीत हुआ कि रामलक्ष्मणके अभावमें समस्त क्षत्रिय वर्गके रहने पर भी शोकान्धकारने अयोध्याको उतना श्रीहत बना दिया है, जितना सूर्य-चन्द्र-हीन नक्षत्रोंसे भरा आकाश हो।

**व्याख्या**—जनेन रामानुगमननिवृत्तलोकेन, प्रतीय प्रतिनिवृत्य, शोकान्धकार-क्षत-सर्वचेष्टा शुक्तमोहतसमस्तव्यापारा, सा प्रसिद्धा पूः अयोध्या नगरी, राजन्य नक्षत्र-समन्विता क्षत्रियोडुयुक्ता अपि, भानुशीतांशु-निराकृता सूर्यचन्द्ररहिता, द्यौः गगनम् इव यथा ददृशे अवालुलोके। उपमारूपकयोः सङ्करः।

**कोशः**—मूर्द्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्।
नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम्।
द्यो-दिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम्।
हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः—इत्याद्यमरः।

**समासः**—शोक एव अन्धकारः शोकान्धकार इति रूपके 'मयूरव्यंसकादयश्च २।१।७२' इति समासः। शोकान्धकारेण क्षता सर्वचेष्टा यस्याः सा शोकान्धकारक्षतसर्वचेष्टा। राजन्या एव नक्षत्राणि, तैः समन्विता राजन्यनक्षत्रसमन्विता। भानुश्च शीतांशुश्च ताभ्यां निराकृता भानुशीतांशुनिराकृता। अत्र भानुशीतांशुस्थानीयौ रामलक्ष्मणौ ज्ञेयौ। राजन्या नक्षत्राणि इवेति उपमापि। विनाकृतेति पाठेऽप्येवं समासादिः।

**कृदन्तः**—प्रतीय इत्यत्र ईङ् गतौ इत्यस्य क्त्वा प्रत्यये ल्यपि रूपं, न तु पुनरिणः, तस्य तु 'षत्वतुकोरसिद्धः ६।१।८६' इति एकादेशस्यासिद्धया प्रतीत्येति स्यात्। प्रतीयुषेति पाठे 'उपेयिवान्० ३।२।१०९' इति क्वसुः।

**तद्धितः**—राज्ञोऽपत्यानि इति विग्रहे 'राजश्वशुराद्यत् ४।१।१३७' इति यति 'ये चाऽभावकर्मणोः ६।४।१६८' इति प्रकृतिभावे राजन्याः क्षत्रियाः।

**तिङन्तः**—दृश् धातोः कर्मणि लिटि, द्वित्वादौ ददृशे। कर्मण उक्तत्वात् पूः इत्यत्र प्रथमा।

**वाच्य०**—जनः राजन्यनक्षत्रसमन्विताम् शोकान्धकारक्षतसर्वचेष्टां तां पुरं भानुशीतांशुनिराकृताम् दिवमिव ददर्श।

**शिक्षा**-तदेव वस्तु प्रधानपुरुषाभावे निःशोभं भवति यथा निर्जीवो मानवदेह इति हि प्राकृतो धर्म इति ॥ १९ ॥

सम्प्रति रामवियोगे दशरथदशां दर्शयति—

**विलोक्य रामेण विना सुमन्त्रमच्योष्ट सत्वान् नृ-पतिश् च्युताऽऽशः।**
**मधूनि नैषीद् व्यलिपन् न गन्धैर् मनो-रमे न व्यवसिष्ट वस्त्रे ॥२०॥**

**अन्वयः**—रामेण विना सुमन्त्रं विलोक्य च्युताशः नृपतिः सत्वाद् अच्योष्ट, मधूनि न ऐषीत्, गन्धैः न व्यलिपत्, मनोरमे वस्त्रे न व्यवसिष्ट।

**हिन्दी**—रामके बिना अकेले सुमन्त्रको देखकर निराश नरेश अपनी स्वभावावस्थासे विचलित हो गये। उन्होंने प्रिय वस्तुओंकी चाह न की, गन्धादि लेप लगाना बंद कर दिया और मनोरम वस्त्र धारण करना छोड़ दिया।

**व्याख्या**—रामेण राघवेण विना शून्यं सुमन्त्रं सारथिं विलोक्य वीक्ष्य, च्युताशः निराशः ( निर्गतस्थैर्यः ) नृपतिः राजा दशरथः, सत्त्वात् बलाद् अच्योष्ट

च्युतोऽभूत् । मधूनि प्रियवस्तूनि न ऐषीत् नहीष्टवान् । गन्धैः सुगन्धद्रव्यैः चन्दन-कुङ्कुमादिभिः (कोशाद्बहुत्वम्) न व्यलिपत् नहि लिप्तवान् (अङ्गानीति शेषः), मनोरमे चेतोहारिणी वस्त्रे वसने उत्तरीयाधरीये इत्यर्थः, नहि व्यवसिष्ट पर्यधात् । पूर्वार्द्धे काव्यलिङ्गम्, उत्तरार्द्धे क्रियादीपकम् ।

कोशः—सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः—( इति विश्वः ) ।

गन्धस्तु सौरभे मृत्यौ गन्धने गर्व-लेपयोः ।
स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृत ।
वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम् — इत्यमरः ।

समासः—च्युता आशा यस्य सः । 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् २।३।३२' इति विनायोगे रामे तृतीया ।

तिङन्तः—च्युङ् गतौ इति भौवादिकस्य धातोः कर्माविवक्षयाऽकर्मकत्वाल्लुङि तङि अनिट्कत्वात् अच्योष्ट । इषु इच्छायाम् इति तौदादिकस्य सेट्कत्वाद् 'नेटि ७।२।४' इति वृद्धिनिषेधे आडागमे वृद्धौ ऐषीत् । लिप उपदेहे इति तौदादिकाद् विपूर्वकाद् लुङि 'लिपिसिचिह्वश्च ३।१।५३' इति च्लेरङि अलिपत् । वस आच्छादने इति आदादिकस्य सेटः तङि व्यवसिष्ट ।

वाच्य०—नृपतिना च्युताशेन अच्यावि । मधूनि न ऐषिषत । गन्धैर्न व्यलेपि अङ्गमिति शेषः । मनोरमे वस्त्रे न व्यवसिषाताम् ।

शिक्षा—च्युताशस्य सर्वं नश्यति । अतः सर्वदा सोत्साहस्तिष्ठेदिति ॥२०॥

सम्प्रति शोकाग्निना दशरथस्य महाप्रयाणमाख्याति –

**[1]आसिष्ट नैकत्र शुचा, व्यरंसीत्, कृताऽकृतेभ्यः क्षिति-पाल-भाग्-भ्यः ।**
**स चन्दनोशीर-मृणाल दिग्धः, शोकाऽग्निनाऽगाद् द्यु निवास-भूयम् ॥२१॥**

अन्वयः—स शुचा एकत्र न आसिष्ट । क्षितिपालभाग्भ्यः कृताकृतेभ्यः व्यरंसीत् । चन्दनोशीरमृणालदिग्धः शोकाग्निना द्युनिवासभूयम् अगात् ।

हिन्दी—दूत-प्रेषणादि राजकार्योंसे विरतहो शोकाग्निमें जलनेवाले महाराज दशरथको चन्दन, उशीर ( खस ) मृणाल ( कमलके डंठल ) इत्यादिका लेपभी शान्ति नहीं दे सका और वे स्वर्ग लोकको प्रस्थान कर गये ।

---

१ टिप्पणी—राजा दशरथको श्रवण-पिताका शाप था कि पुत्रवियोगसे ही तुम्हारी मृत्यु होगी । वह सच हो गया । विधिके विधानको कौन काट सका है ?

**व्याख्या**—स दशरथः, शुचा शोकेन, एकत्र एकस्मिन् स्थाने न आसिष्ट नहि उपाविशत् । अनियतासनोऽभवत् । क्षितिपालभाग्भ्यः राजकर्तव्येभ्यः दूतप्रेषणादिभ्यः, कृताकृतेभ्यः असमापितेभ्यः कार्य्येभ्यः, व्यरंसीत् व्युपरतोऽभूत् । चन्दनोशीरमृणालदिग्धः श्रीखण्डनलदबिसविलिप्तः, शोकाग्निना शुचाऽनलेन, द्युनिवासभूयम् देवभावम् अगात् अयासीत् महाप्रयाणमकार्षीदित्यर्थः । शोकाग्नि-रूपकं चन्दनादिकारणसत्त्वेऽपि अग्निशमनकार्याभावाद् विशेषोक्तिश्चेति ।

**कोशः** मृणालं बिसमब्जादिकदम्बे षण्डमस्त्रियाम् ।

गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्—इत्यमरः ।

**समासः**—चन्दनश्च उशीरं च मृणालं च चन्दनोशीरमृणालानि, तैः दिग्धः चन्दनोशीरमृणालदिग्धः । कृतानि च अकृतानि च इति विग्रहे 'क्तेन नञ्विशिष्टे-नानञ् २।१।६०' इति समासे, विभक्तेर्लुकि कृताकृतानि, तेभ्यः । शोक एव अग्निः शोकाग्निः, मयूरव्यंसकादित्वात् समासः, तेन । कृताकृतेभ्यः इत्यत्र 'जुगुप्साविराम० १।४।२४' इति अपादानतया पञ्चमी व्यरंसीदित्यस्य योगे ।

**कृदन्तः**—दिह उपचये इति धातोः कर्मणि क्त-प्रत्यये 'दादेर्धातोर्घः ८।२।३२' इति हस्य घत्वे' -झषस्तथोर्धोऽधः ८।२।४०' इति तस्य धत्वे, 'झलां जश् झशि ८।४।५३' इति घस्य गत्वे दिग्ध शब्द-सिद्धिः । द्युनिवासानां भावः इत्यर्थे 'भुवो भावे ३।१।१०७' इति क्यपि द्युनिवासभूयम् ।

तिङन्तः—रमु क्रीडायाम् इति भ्वादि-धातोः 'व्याङ्परिभ्यो रमः १।३।८३' इति परस्मैपदे 'अस्तिसिचोऽपृक्ते ७।३।९६' इति अपृक्तस्येटि 'यमरमनमातां सक् च ७।२।७३' इति सगिटोः 'इट ईटि ८।२।२८' इति सलोपे 'नेटि ७।२।४' इति वृद्धिनिषेधे व्यरंसीत् । आस उपवेशने इत्यादादिकस्य सेटः तङि आसिष्ट । 'इणो गा लुङि २।४।४५' इति गादेशे 'गातिस्थाघुपा० २।४।७७' इति सिचो लुकि अगात् ।

वाच्य०—तेन एकत्र न आसि । व्यरामि । चन्दनोशीरमृणालदिग्धेन द्युनि-वासभूयम् अगायि ।

शिक्षा—श्रवणकुमारपितुः शापस्य प्राबल्याद् रामवियोगेनैव दशरथमृत्यु-रिति कृत-कर्म-विपाकोऽवश्यं फलतीति ॥ २१ ॥

सम्प्रति नृपमहाप्रस्थानानन्तरं राजमहिषीदशामाख्याति—

**विचुक्रुशुर् भूमि-पतेर् महिष्यः, केशाँल् लुलुञ्चुः स्व-वपूंषि जघ्नुः ।**
**विभूषणान्युन्मुमुचुः क्षमायां, पेतुर् बभञ्जुर् वलयानि चैव ॥२२॥**

अन्वयः—भूमिपतेः महिष्यः विचिक्रुशुः, केशान् लुलुञ्चुः, स्ववपूंषि जघ्नुः, विभूषणानि उन्मुमुचुः, क्षमायां पेतुः, वलयानि चैव बभञ्जुः।

हिन्दी—धरतीपर लोटती करुण क्रन्दन करती हुई रानियां अपने केश नोचने लगीं, छाती पीटने लगीं। उन्होने आभूषण उतार फेंके और चूड़ियां फोड़ डालीं।

व्याख्या—भूमिपतेः क्षितीन्द्रस्य, महिष्यः धर्मपत्न्यः, विचुक्रुशुः विलेपुः। केशान् कचान् लुलुञ्चुः चिच्छिदुः, स्ववपूंषि स्वदेहान्, जघ्नुः ताडयामासुः, विभूषणानि स्वालंकारान् उन्मुमुचुः तत्यजुः, क्षमायां पृथिव्यां पेतुः पतिताः, वलयानि कटकानि सौभाग्यचिह्नानि बभञ्जुः चूर्णितवत्यः। कर्तुः एकस्यानेकक्रियायोगाद् दीपकम्।

कोशः—चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः।

तिङन्तः—क्रुश आह्वाने रोदने च इति भौवादिक-धातोर्लिटि, द्वित्वादि-कार्ये, 'असंयोगाल्लिट् कित् १।२।५' इति कित्वात् 'क्ङिति च १।१।५' इति गुण-निषेधः। लुञ्च अपनयने इत्यस्य संयोगपरत्वात् कित्त्वाभावे नलोपाभावः। हन् धातोर्लिटि द्वित्वे, अभ्यासकार्ये, 'गमहनजनखनघसां लोपः क्ङित्यनङि ६।४।९८' इत्युपधालोपे 'होहन्तेर्ञ्णिन्नेषु' इति हस्य घत्वे जघ्नुः। 'अत एकहल्मध्येऽनादेशादेर्लिटि ६।४।१२०' इति एत्वाभ्यासलोपयोः पेतुः। भञ्जो आमर्दने इति रुधादि-स्थ-भञ्ज् धातोः संयोगपरत्वात् कित्वाभावान्न नलोपः बभञ्जुः।

वाच्य०—महिषोभिः विचिक्रुशे, केशा लुलुञ्चिरे, स्ववपूंषि जघ्निरे, विभूषणानि उन्मुमुचिरे, क्षमायां पेते, वलयानि बभञ्जिरे।

शिक्षा—धवः स्त्रिया अलङ्कारः इति तदभावे किमेतैरिति भारतीयसंस्कृतिं सूचयति ॥ २२ ॥

सम्प्रति बन्धुता-कृत्यमाख्याति—

**ताः सान्त्वयन्तो भरत-प्रतीक्षा तं बन्धु-ता न्यक्षिपदाशु तैले।**
**दूतांश्च राजाऽऽत्मजमानिनीषुः प्रास्थापयन्-मन्त्रि-मतेन यूनः ॥२३॥**

अन्वयः—ताः सान्त्वयन्ती भरतप्रतीक्षा बन्धुता तम् आशु तैले न्यक्षिपत्। राजात्मजम् आनिनीषुः च मन्त्रिमतेन यूनः दूतान् प्रास्थापयत्।

हिन्दी—भरतकी प्रतीक्षा करनेवाले बन्धु-बान्धवोंने रानियोंको सान्त्वना देके

हुए शवको ( सुरक्षित रखनेके लिए ) तैलमें रख दिया और मन्त्रियोंके परामर्शसे भरतको बुलाने हेतु तत्काल तरुण दूत भेज दिये।

व्याख्या—ता राजपत्नी: सान्त्वयन्ती आश्वासयन्ती, भरतप्रतीक्षा भरतं प्रतीक्षमाणा बन्धुता बन्धुसमूहः, तं दशरथम् ( तच्छवमिति यावत् ), आशु शीघ्रं, तैले तैलद्रोण्याम् न्यक्षिपत् अस्थापयत् (अविक्रियार्थमित्यर्थः)। राजात्मजं नृपपुत्रम् आनिनीषुः आनेतुमिच्छुः च पुनः मन्त्रिमतेन सचिवपरामर्शेन, यूनः तरुणान् दूतान् सन्देशहरान्, प्रास्थापयत् प्राहिणोत्। निक्षेप-प्रेषणयोर्बन्धुतैव कर्त्रेति दीपकमेव।

कोशः—स्यात् सन्देशहरो दूतः।

मन्त्री धीसचिवोऽमात्योऽन्ये कर्मसचिवास्ततः—इत्याद्यमरः।

समासः—भरतम् प्रतीक्षते इत्यर्थे 'ईक्षिक्षमिभ्यां चेति वक्तव्यम् ३।२।१' ( वा० ) इति कर्मोपपदे अणि उपपदसमासेन भरतप्रतीक्षेति टाबन्तं रूपम्।

कृदन्तः—सान्त्वयन्ती सान्त्वं करोति इत्यर्थे 'तत्करोति तदाचष्टे ३।१।२६' इति णिचि, इष्ठवद्भावाच्च टिलोपे सान्त्वि धातोः शतरि 'उगितश्च ४।१।६' इति ङीपि 'शप्श्यनोर्नित्यम् ७।१।८१' इति नुमि साधुः। आनिनीषुः=आनेतुमिच्छुः इत्यर्थे आङ्पूर्वकात् नी-धातोः सन्नन्तान् निनीषेत्यस्मात् 'सनाशसभिक्ष उः ३।२।१६८' इति उप्रत्ययः। दूतविशेषणे तु आनिनीषून् इति पाठः। तत्र केकयी वैमुख्यात् भरतेपि वैमुख्य स्यादिति सम्भावनया तमानेतुमिच्छूनेव दूतान् न भरतविमुखाननिति भावः।

तद्धितः—'ग्रामजनबन्धुभ्यस्तल् ४।१।४३' इति तलि, टापि, बन्धुता। 'श्वयुवमघोनामतद्धिते ६।४।१३३' इति सम्प्रसारणे, 'सम्प्रसारणाच्च ६।१।१०८' इति पूर्वरूपे यूनः।

तिङन्तः—स्था धातोः 'हेतुमति च ३।१।२६ इति णिचि अर्तिह्रीव्लीरी० ७।३।३६' इति पुगागमे स्थापि धातोः लुङि प्रास्थापयत्।

वाच्य०—भरतप्रतीक्षया सान्त्वयन्त्या बन्धुतया स तैले न्यक्षेपि। आनिनीष्वा युवानः दूताः प्रास्थाप्यन्त। दूतविशेषणे आनिनीषव इति।

शिक्षा—'असमये मतिरुन्मिषति ध्रुवम्' इति श्रीहर्षोक्तं स्मारयति। दूताः केकय्या वरहठधर्मिताकाले भरतमानेतुं गताः स्युः। भरतश्चागतः स्यात्तर्हि सर्वोऽप्यनर्थो निरुद्धः स्यादिति। अन्यच्च 'उत्सवे व्यसने चैव' इत्यादि च स्मारयति॥ २३॥

तत्र मातामहावासे स्थितस्य भरतस्यावस्थां वर्णयति—

**सुप्तो नभस्तः पतितं निरीक्षांचक्रे विवस्वन्तमधः स्फुरन्तम्।**
**आख्यद् वसन् मातृ-कुले सखिभ्यः, पश्यन् प्रमादं भरतोऽपि राज्ञः ॥२४॥**

**अन्वयः**—मातृकुले वसन् सुप्तः भरतः अपि नभस्तः पतितम् अधः स्फुरन्तम् विवस्वन्तं निरीक्षाञ्चक्रे। राज्ञः प्रमादं पश्यन् सखिभ्यः आख्यत्।

**हिन्दी** ननिहालस्थ भरतने स्वप्नमें आकाशसे गिरे हुए सूर्यको धरती पर छटपटाते देखा। इससे महाराज दशरथकी अनिष्टकी आशंका हुई और उन्होंने इस सम्बन्धमें अपने मित्रोंसे चर्चा की।

**व्याख्या**—मातृकुले जननीकुटुम्बसद्मनि, वसन् स्थितः, सुप्तः रात्रौ शयितः भरतः राजकुमारः अपि एवम् नभस्तः आकाशात् पतितम् भ्रष्टम्, अधः धरातले स्फुरन्तम् प्रचलन्तं (भ्रमन्तमिति यावत्) विवस्वन्तं सूर्य्यम् निरीक्षांचक्रे ददर्श। राज्ञः स्वपितुः, प्रमादम् अनिष्टम् पश्यन् शङ्कमानः, सखिभ्यः सुहृद्भ्यः आख्यत् अचकथत्। अनुमानालङ्कारः।

**कोशः**—अथ मित्र सखा सुहृत्। कुलं जनपदे गृहे।
जनयित्री प्रसूर्माता जननी इत्यमरः।

**कृदन्तः**—ञिष्वप शये इति आदादिकात् स्वप् धातोः क्तप्रत्यये 'वचिस्वपियजादीनां किति ६।१।१५' इति सम्प्रसारणे, 'सम्प्रसारणाच्च ६।१।१०८' इति पूर्वरूपे सुप्तः। स्फुरन्तम् वसन् इत्युभयमपि शत्रन्तम्।

**तिङन्तः**—निर् पूर्वकात् ईक्ष् धातोः लिटि 'इजादेश्च गुरुमतोऽनृच्छः ३।१।३६' इत्यामि, 'कृञ्चानुप्रयुज्यते लिटि ३।१।४०' इति कृञोऽनुप्रयोगे निरीक्षांचक्रे। आङ्पूर्वकात् ख्या-धातोः लुङि 'अस्यतिवक्तिख्यातिभ्योऽङ् ३।१।५२' इति च्लेरङि 'आतो लोप इटि च ६।४।६४' इति आलोपे आख्यत्।

**वाच्य०**—सुप्तेन वसता भरतेन पतितः स्फुरन् विवस्वान् निरीक्षांचक्रे, पश्यता आख्यायि।

**शिक्षा**—रक्तसम्बन्धात् दूरस्थमपि शुद्धहृदयं बन्धुम् स्वबन्धूत्कटावस्था प्रतिफलतीति शास्त्रम् ॥२४॥

सम्प्रति दूतवाक्यश्रवणानन्तरं भरतप्रयाणमाख्याति—

**अशिश्रवन्नात्ययिकं तमेत्य दूता यदाऽर्थं प्रयियासयन्तः।**
**आंहिष्ट जाताऽञ्जिहिषस्तदाऽसावुत्कण्ठमानो भरतो गुरूणाम् ॥२५॥**

**अन्वयः**—यदा तम् एत्य प्रयियासयन्तः दूताः आत्ययिकम् अर्थम् न अशिश्रवन् तदा गुरूणाम् उत्कण्ठमानः जाताञ्जिजिहिषः असौ भरतः आंहिष्ट ( अयोध्याम् इत्यर्थः ) ।

**हिन्दी**—लिवानेके लिए आने वाले दूतोंके पहुँच कर मृत्यु-सम्बन्धी संदेश न देने पर भी माता-पिताको यादमें विह्वल भरतने अयोध्याको प्रस्थान कर दिया ।

**व्याख्या**—यदा यस्मिन् काले, दूताः सन्देशहराः, एत्य समागत्य, प्रयियासयन्तः प्रजिगमिषयन्तः, तम् भरतम्, आत्ययिकम् मृत्युसम्बन्धि अर्थम् अभिप्रायम् न अशिश्रवन् नहि श्रावितवन्तः, व्यपदेशेन मृत्युमनुक्त्वा तत्कल्पां दशामजिज्ञपन्, तदा तस्मिन् काले, गुरूणां पित्रादीनाम् उत्कण्ठमानः संस्मरन्, असौ पितृप्रियः भरतः राजकुमारः जाताञ्जिजिहिषः समुत्पन्नजिगमिषः, आंहिष्ट अगमत्, अयोध्यामिति शेषः । भरतगमने दूतवाक्यश्रवणं हेतुरिति काव्यलिङ्गम् ।

**कोशः**—गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि ।
पुमान्निषेकादिकरे पित्रादौ सुरमन्त्रिणि—(इति मेदिनी) ।

**समासः**—जाता अञ्जिजिहिषा यस्य सः (बहु०) । 'स्त्रियाः पुंवद्भाषित० ६।३।३७' इति पुंवद्भावे, 'गोस्त्रियोरुपसर्जनस्य १।२।४८' इति ह्रस्वे जाताऽञ्जिजिहिषः ।

**कृदन्तः**—इत्वेति स्थितौ आङोपसर्गेण योगे 'कुगतिप्रादयः २।२।१८' इति समासे, 'समासेऽनञ्पूर्वे क्त्वो ल्यप् ७।१।३७' इति क्त्वो ल्यपि, तुकि, एत्येति साधुः । अञ्जिजिहिषा-अहि गतौ इति धातोः अंहः इत्यत इच्छार्थे सनि, इटि, 'अजादेर्द्वितीयस्य ६।१।२' इति द्वित्वे कर्तव्ये 'नन्द्राः संयोगादयः ६।१।३' इति नकारनिषेधेन 'हि' मात्रस्य द्वित्वेऽभ्यासकार्य्ये, षत्वे, परसवर्णे अञ्जिजिहिष धातोः 'अः प्रत्ययात् ३।३।१०२' इति अ-प्रत्यये, टापि अञ्जिहिषाशब्दः सिध्यति ।

**तिङन्तः**—श्रुधातोः णिजन्ताल्लुङि 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३।१।४८' इति च्लेः चङि, अनुबन्धलोपे, 'चङि ६।१।११' इति द्वित्वे, अभ्यासकार्ये, 'स्रवतिशृणोतिद्रवति० ७।४।८१' इति अभ्यासोकारस्य इत्वे, अडागमे अशिश्रवन् ।

**वाच्य०**—दूतैः प्रयियासयद्भिः स आर्त्यायकम् अर्थम् अश्रावि। उत्कण्ठमानेन अमुना भरतेन जाताञ्जिहिषेण आंहि।

**शिक्षा**—रक्त-सम्बन्ध-प्राबल्यं सम्बन्धिनं हठादाकृषतीति ॥ २५ ॥

सम्प्रति भरतमनसि बन्धूनामनिष्टशङ्कां गोमाय्वादिशकुनेन वर्णयति—

**बन्धूनशङ्किष्ट समाकुलत्वादासेदुषः स्नेह-वशादपायम्।**
**गोमायु सारङ्ग-गणाश् च सम्यङ्, ना ऽयासिषुर् भीममरासिषुश्च॥२६॥**

**अन्वयः**—(सः) समाकुलत्वात् स्नेहवशाच्च बन्धून् अपायम् आसेदुषः आशङ्किष्ट। गोमायु-सारङ्गगणाः च सम्यक् न अयासिषुः, भीमम् अरासिषुः च। शृगाला दक्षिणं, मृगाः सव्यं गता इत्यर्थः।

**हिन्दी**—सियार एवं मृग प्रतिकूल हो भयानक शब्द करने लगे—इससे व्याकुल चित्त भरतने स्नेहवश अपने बन्धुओंके अनिष्ट की आशंका की।

**व्याख्या**—स भरतः, समाकुलत्वात् व्याकुलचेतस्कत्वात्, स्नेहवशात् प्रेमकारणात्, बन्धून् बान्धवान्, अपायम् नाशम् आसेदुषः प्राप्तान् अशङ्किष्ट शङ्कितवान्। गोमायुसारङ्गगणाः शृगालमृगसमूहाः, च पुनः, सम्यग् अनुकूलम्, न नहि, अयासिषुः अगमन्। भीमम् घोरम्, अरासिषुः अशब्दायन्त। समाधिरलकारः।

**कोशः**—'स्त्रियां शिवा भूरिमाय-गोमायु-मृगधूर्तकाः।
शृगाल-वञ्चक-क्रोष्टु-फेरु-फेरव-जम्बुकाः।'—इत्यमरः।

**समासः**—गोमायवश्च सारङ्गाश्च गोमायु-सारङ्गाः, तेषां गणाः। 'विभाषा वृक्षमृगतृणधान्य० २।४।१२' इति वैकल्पिके एकवद्भावे रूपम्।

**कृदन्तः**—आङ्पूर्वकात् षद्लृ विशरणगत्यवसादनेषु इति सद्-धातोः 'भाषायां सदवसश्रुवः ३।२।१०८' इति लिटः क्वसौ, अनुबन्धलोपे, द्वित्वे, अभ्यासकार्ये 'अत एकहल्मध्येऽनादेशादेर्लिटि ६।४।१२०' इति एत्वाभ्यासलोपे 'वस्वेकाजाद्घसाम् ७।२।६७' इतीटि सेदिवस् शब्दात् शसि 'वसोः सम्प्रसारणम् ६।४।१३१' इति सम्प्रसारणे 'सम्प्रसारणाच्च ६।१।१०८' इति पूर्वरूपे 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति इटो निवृत्तौ आसेदुषः।

**तिङन्तः**—शकि शङ्कायाम् इति शङ्क धातोर्लुङि अशङ्किष्ट। या धातोर्लुङि 'यमरमनमातां सक् च ७।२।७३' इति सगिटोः अयासिषुः। रसेः परस्मै-

पदिनो लुङि 'सिजभ्यस्तविदिभ्यश्च ३।४।१०९' इति झेर्जुसि, 'अतो हलादेर्लघोः ७।२।७' इति वृद्धौ रूपम् अरासिषुः, न तु रासेरात्मनेपदित्वात् ।

वाच्य०—(तेन बन्धवः अपायम् आसेदिवांसः अशङ्किषत, गोमायुसारङ्गगणैः अयायि अरासि च ।

शिक्षा—स्वच्छे हृदये उत्कटबन्धुसुखदुःखे प्रतिफलत इत्युक्तशिक्षोपलब्धिरिहापि ॥२६॥

सम्प्रति राजशोकचिह्नमयोध्यागतं सूचयति—

**स प्रोषिवानेत्य पुरं प्रवेक्ष्यन् शुश्राव घोषं न जनौघ-जन्यम् ।**
**आकर्णयामास न वेद-नादान् न चोपलेभे वणिजां पणाऽयान् ॥२७॥**

अन्वयः—प्रोषिवान् स एत्य पुरं प्रवेक्ष्यन् जनौघजन्यं घोषं न शुश्राव । वेदनादान् न आकर्णयामास । वणिजां पणायान् च न उपलेभे ।

हिन्दी—ननिहालसे आये भरतने नगर-प्रवेश करते समय लोकसमुदायका शब्द तथा वेदोंका घोष नहीं सुना और न व्यापारियोंका व्यापार ही पाया ।

व्याख्या—प्रोषिवान् मातामहावासे बहुदिनावधि प्रोषितः, स भरतः, एत्य आगत्य, पुरं स्वनगरीम् अयोध्याम्, प्रवेक्ष्यन् प्रवेशं करिष्यन्, जनौघजन्यं लोकसङ्घोत्पन्नं, घोषं निनादं, न शुश्राव न आकर्णयामास, वेदनादान् बटुपठितान् श्रुतिध्वनीन्, न आकर्णयामास नाकर्णितवान्, वणिजां व्यापारिणाम्, पणायान् कार्षापणलाभान् परस्परं पणादिलाभार्थं व्यवहरतो वणिजो नोपलेभे न उपलब्धवान् इत्यर्थः ।

कोशः—'पणो वराटमाने स्यान्मूल्ये कार्षापणे गृहे'—(इति विश्वः) ।
'वैदेहकः सार्थवाहो नैगमो वणिजो वणिक्' ।
'पण्याजीवो ह्यापणिकः क्रयविक्रयकश्च सः'—इत्यमरः ।

कृदन्तः—प्रपूर्वकात् वस् धातोः 'भाषायां सदवसश्रुवः ३।२।१०८' इति क्वसु प्रत्यये 'वचिस्वपियजादीनां किति ६।१।१६' इति सम्प्रसारणे 'सम्प्रसारणाच्च ६।१।१०८' इति पूर्वरूपे प्रोस्वस् इति जाते 'वस्वेकाजाद्घसाम् ७।२।६५' इति इडागमे 'शासिवसिघसीनां च ८।३।६०' इति षत्वे प्रोषिवस् शब्दात् सौ, 'उगिदचां सर्वनामस्थाने ऽधातोः ७।१।७०' इति नुमि, 'सान्तमहतः संयोगस्य ६।४।१०' इति दीर्घे प्रोषिवान् । प्रपूर्वात् विश्धातोः 'लृटः सद्वा ३।३।१४' इति

सत्संज्ञके शतृप्रत्यये 'व्रश्चभ्रस्जसृज० ८।२।३६' इति शस्य षत्वे 'षढोः कः सि ८।२।४१' इति षस्य कत्वे, षत्वे प्रवेक्ष्यन् । 'भव्यगेयप्रवचनीयोपस्थानीय० ३।४।६८' इति निपातनाद् जन्यम् इति । पण्यन्ते इति पणाः 'नित्यं पणः परिमाणे ३।३।६६' इति अप् प्रत्यये रूपम् । ईयन्ते प्राप्यन्ते वणिग्भिः इति अयाः लाभाः । इ धातोः 'एरच् ३।३।५६' इति अच् प्रत्यये रूपम् ।

तिङन्तः—श्रु श्रवणे इति भौवादिक-धातोर्लिटि शुश्रावेति साधु । आकर्ण-शब्दात् 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति वार्तिकबलात् णिचि, टिलोपे, आङ्पूर्वकाद् आकर्णि इत्यतो लिटि 'कास्प्रत्ययादाममन्त्रे लिटि ३।१।५' इत्यामि 'कृञ्चानुप्रयुज्यते लिटि ३।१।४० इति लिट्परकस्य असेः अनुप्रयोगे आकर्णयामास ।

वाच्य०-तेन प्रोषुषा प्रवेक्ष्यता जनौघजन्यः घोषः न शुश्रुवे । वेदनादा न आकर्णयाञ्चक्रिरे । पणायाश्च नोपलेभिरे ।

शिक्षा—'राज्ञः शोकः सर्वेषां तापको भवतीति' राष्ट्रशोकं मत्वा सर्व-कार्यनिरोधकरणं समुचितमिति ॥२७॥

समागतं भरतमभिलक्ष्य मातॄणां पुरोहितामात्यादीनां च दशामाख्याति—

**चक्रन्दुरुच्चैर् नृ-पतिं समेत्य तं मातरोऽभ्यर्णमुपागताऽस्राः ।**
**पुरोहिताऽमात्य-मुखाश् च योधा विवृद्ध-मन्यु-प्रतिपूर्ण-मन्याः ॥ २८ ॥**

अन्वयः—तम् अभ्यर्णं समेत्य विवृद्धमन्युप्रतिपूर्णमन्याः समागतास्राः मातरः पुरोहितामात्यमुखाः योधाश्च उच्चैः नृपतिं चक्रन्दुः ।

हिन्दी—शोक-संतप्त, अश्रुप्रपूरित नेत्रों वाली माताएँ, पुरोहित, अमात्य तथा योद्धा लोगभी भरतके समीप आ आकर महाराज दशरथके लिये करुण क्रन्दन करने लगे ।

व्याख्या—तं भरतम् समेत्य प्राप्य, विवृद्धमन्युप्रतिपूर्णमन्याः प्रवृद्धशोक-व्याप्तगलशिराः, समागतास्राः प्राप्ताश्रुजलाः, मातरः जनन्यः, पुरोहितामात्यमुखाः पुरोधस्सचिवप्रधाना योधा भटाश्च, उच्चैः तारस्वरेण, नृपतिं मृतं राजानं चक्रन्दुः ( हा राजन् क्व गतोऽसीत्यादि ) रुरुदुः । एकक्रियायामनेककारकयोगाद् दीपकम् ।

कोश:—'जनयित्री प्रसूर्माता जननी' ।
'पश्चाद्ग्रीवा शिरा मन्या'—इत्यमरः ।

समासः—उपागतम् अस्रम् येषां ते । मातृविशेषणे तु यासाम् ता इति । एवं विवृद्धमन्युना प्रतिपूर्णे मन्ये येषां ते । अत्रापि यासां ता इत्यपि ज्ञेयम् । पुरोहितश्च अमात्यश्चेति पुरोहितामात्यौ । 'अभ्यर्हितञ्च' इति वार्तिकबलाद् अजाद्यदन्तस्यापि अमात्यस्यापेक्षया पुरोहितस्य पूर्वनिपातः । पुरोहितामात्यौ मुखे येषां ते ( बहु० ) ।

कृदन्तः—पुरोऽग्रे धीयते इति पुरोहितः । पुरःपूर्वात् धा—धातोः निष्ठासंज्ञके क्त प्रत्यये, 'दधातेर्हिः ७।४।४२' इति ह्यादेशे पुरोहितः ।

तद्धितः—अमा सह ( राज्ञा ) वसतीति विग्रहे 'अव्ययात् त्यप् ४।२।१०४' इति त्यपि अमात्यः ।

तिङन्तः—चक्रन्दुः—क्रदि आह्वाने रोदने च इति भौवादिकात् क्रन्द्धातोः लिटि, द्वित्वादौ चक्रन्दुः ।

वाच्य०—मातृभिः पुरोहितामात्यमुखैर्योधैः विवृद्धमन्युप्रतिपूर्णमन्यैः नृपतिः चक्रन्दे ।

शिक्षा—'स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते' इत्येवमिति ॥२८॥

सम्प्रति रामादीन् अदृष्ट्वा रोरुद्यमानं तद्विषये पृच्छन्तं भरतमुत्तरयन्ति—

**दिदृक्षमाणः परितः ससीतं, रामं यदा नैक्षत लक्ष्मणं च ।**
**रोरुद्यमानः स तदाऽभ्यपृच्छद्, यथावदाख्यन्नथ वृत्तमस्मै ॥२९॥**

अन्वयः—परितः दिदृक्षमाणः स यदा ससीतं रामम् लक्ष्मणं च न ऐक्षत तदा रोरुद्यमानः अपृच्छत् । अथ अस्मै वृत्तं यथावत् आख्यन् ( सर्वे इति शेषः )।

हिन्दी—जब भरतने चारों ओर देखनेके बाद भी सीताके साथ राम और लक्ष्मणको नहीं पाया तो लोगोंसे पूछा, उन्होंने यथार्थ रूपसे बीती बतादी ।

व्याख्या—परितः सर्वतः,दिदृक्षमाणः आलुलोकिषुः स भरतः, यदा यस्मिन् काले ससीतं सजानकीं, रामं राघवं, लक्ष्मणं सौमित्रिं च न ऐक्षत नहि अपश्यन्, तदा तस्मिन् काले रोरुद्यमानः विलालप्यमानः ( भृशमतिशयेन रुदन्नित्यर्थः ) अपृच्छत् अन्वयुङ्क्त ( एते क्व सन्ति इति ) । अथ तत्प्रश्नानन्तरम् अस्मै, भरताय

वृत्तम् भूतार्थं यथावत् यथार्हम् आख्यन्, सर्वे इति शेषः। प्रश्नेऽदर्शनहेतो-रुल्लेखात् काव्यलिङ्गम्।

कोशः—'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ'।

तद्धितः—'पर्य्यभिभ्यां च ५।३।६' इति तसिलि परितः। 'बाह्वादिभ्यश्च ४।१।९६' इति इञि, आदिवृद्धौ सौमित्रिः ( २-६ पद्येऽयं शब्दो गतः )।

कृदन्तः—द्रष्टुमिच्छति इत्यर्थे सनि, द्वित्वादिकार्ये 'हलन्ताच्च १।२।१०' इति सनः कित्वात् 'सृजिदृशोर्झल्यमकिति ६।१।५' इति अकोऽभावे दिदृक्ष इत्यस्य 'ज्ञाश्रुस्मृदृशां सनः १।३।५७' इति तङि, शानचि, मुगागमे, णत्वे दिदृक्षमाणः। अतिशयेन भृशं रोदिति इति रोरुद्यमान इत्यर्थे रुद् धातोः यङि, द्वित्वादिकार्ये, 'गुणो यङ्लुकोः ७।४।८२' इति अभ्यासगुणे, रोरुद्य-इत्यस्य धातुत्वात् लटः शानजादेशे, मुगागमे रोरुद्यमानः।

तिङन्तः—ईक्ष दर्शनाङ्कनयोः इति भौवादिकाद् ईक्ष् धातोः लङि ऐक्षत। प्रच्छ ज्ञीप्सायाम् इति तौदादिकस्य धातोः लङि,'ग्रहिज्याव्ययिव्यधि० ६।१।१६' इति सम्प्रसारणे अपृच्छत्।

वाच्य०—तेन दिदृक्षमाणेन ससीतो रामः लक्ष्मणश्च न ऐक्ष्यत। रोरुद्य-मानेन अपृच्छ्यन्त ते। यथावृत्तम् तैः आख्यायि।

शिक्षा—शोकार्तेनापि प्रियान्विता न विस्मर्य्यते इति शिक्षयति॥ २९॥

सम्प्रति ज्ञातवृत्तस्य भरतस्य स्वमातुरुपालम्भमाख्याति—

**[1]आबद्ध-भीम-भ्रुकुटी-विभङ्गः, शेश्वीयमानाऽरुण-रौद्र-नेत्रः।**
**उच्चैरुपालब्ध स केकयीं च, शोके मुहुश् चाविरतं न्यमाङ्क्षीत्॥३०॥**

अन्वयः—आबद्धभीमभृकुटीविभङ्गः शेश्वीयमानारुणरौद्रनेत्रः स केकयीम् उच्चैः उपालब्ध। शोके अविरतम् मुहुश्च न्यमाङ्क्षीत्।

हिन्दी—भयंकर भौंह चढ़ाए हुए सूजी लाल तथा भयंकर आंखों वाले

---

१ टिप्पणी—यद्यपि केकयीने तो भरतकी भलाई की थी, पर सज्जनोंके लिये किया गया अनुचित हित भी उनको कष्टकर ही होता है। यही कारण है कि भरत ऐसा दिव्य मानुष भी माताकी भर्त्सनाही करता है, चुप नहीं रहता, क्योंकि केकयीकी दृष्टि और भरतकी दृष्टिमें बड़ा अन्तर है।

भरतने केकयीकी उच्च स्वरमें भर्त्सना की और स्वयं शोक-सागरमें डूब गये।

**व्याख्या**—आबद्धभीमभ्रुकुटीविभङ्गः आनद्धघोरभ्रूकोटिभागः, शेश्वीय-मानारुणरौद्रनेत्रः अत्युच्छूनरक्तोग्रनयनः, स भरतः, केकयीं स्वमातरम्, उच्चैः तारस्वरम्, उपालब्ध अभर्त्संयत्। ( स्वयञ्च ) शोके दैन्य-सागरे, अविरतम् अजस्रम्, मुहुः=भूयो भूयो न्यमाङ्क्षीत् अपतत्। इन्द्रवज्रा छन्दः ( लक्षणं १-२ पद्ये )। एकस्य भरतस्य क्रियाद्वययोगाद् दीपकम्।

**कोशः**—'दारुणं भीषणं भीष्मं भीमं घोरं भयानकम्।'
'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी'।
'दृग्दृष्टी चास्रु नेत्राम्बु रोदनं चास्रमश्रु च'—इत्यमरः।

**समासः**—भ्रुकुट्या विभङ्गः भ्रुकुटीविभङ्गः। आबद्धः भीमः भ्रुकुटीवि-भङ्गो येन इति त्रिपदो बहुव्रीहिः। शेश्वीयमाने अरुणे रौद्रे नेत्रे यस्येति अनेक-पदबहुव्रीहिः।

**कृदन्तः**—अतिशयेन पुनः पुनः श्वयति इति शेश्वीयमानम् इत्यर्थे श्वि—धातोः यङि, द्वित्वादिकार्ये, 'गुणो यङ्लुकोः ७।४।८२' इति गुणे, 'अकृत्सार्वधातु-कयोर्दीर्घः ७।४।२५' इति दीर्घे, शेश्वीयेत्यस्य धातुत्वाद् लटि शानजादेशे, मुगागमे शेश्वीयमानेति।

**तिङन्तः**—उपाङ् पूर्वकात् डुलभष् प्राप्तौ इति लभ् धातोः लुङि, सिचि, 'झलो झलि ८।२।२६' सलोपे 'झषस्तथोर्धोऽधः ८।२।४०' इति तस्य धत्वे, 'झलां जश् झशि ८।४।५३' इति भस्य बत्वे उपालब्ध। निपूर्वात् टुमस्जो शुद्धौ इति मस्ज् धातोः लुङि, 'अस्तिसिचोऽपृक्ते ७।३।९७' इति अपृक्तस्येडा-गमे 'वदव्रजहलन्तस्याचः ७।२।३' इति वृद्धौ,'स्कोः संयोगाद्योरन्ते च ८।२।२९' इति सस्य लोपे, जस्य गकारे, 'खरि च ८।४।५५' इति चर्त्वेन ककारे, सस्य षकारे संयोगे क्षकारे न्यमाङ्क्षीत्।

**वाच्य०**—आबद्धभीमभ्रुकुटीविभङ्गेन शेश्वीयमानारुणरौद्रनेत्रेण तेन केकयी उपालम्भि, शोके न्यमञ्जि च।

**शिक्षा**—अनुचितं हितमपि सतां क्लेशकरं भवतीति ॥ ३० ॥

सम्प्रति भरतकर्तृकं मातृपालम्भं दर्शयति—

**नृपाऽऽत्मजौ चिक्लिशतुः स-सीतौ, ममार राजा, वि-धवा भवत्यः।**
**शोच्या वयं, भूर-नृपा लघुत्वं, केकय्युपज्ञं बत बह्वनर्थम् ॥ ३१ ॥**

अन्वयः-ससीतौ नृपात्मजौ चिक्लिशतुः। राजा ममार। भवत्यः (मातरः) विधवाः (अभूवन्)। वयम् (भरतादयोऽयोध्याजनाः) शोच्याः। भूः अनृपा। बत केकय्युपज्ञम् लघुत्वम् बह्वनर्थम् (अभूत्)।

हिन्दी—सीताके साथ दोनों राजपुत्र क्लेशित (दुःखी) हुए, राजाकी मृत्यु हुई, आप सभी माताएँ विधवा हो गईं और धरा बिना राजाकी हुई। मेरी माता केकयीके द्वारा उपक्रान्त छोटा विचार बहुत अनर्थकारी हुआ।

व्याख्या—ससीतौ जानक्युपेतौ, नृपात्मजौ राजकुमारौ रामलक्ष्मणौ, चिक्लिशतुः क्लेशं भेजतुः। राजा अस्माकं पिता, ममार पञ्चत्वमियाय। भवत्यः यूयं, विधवाः पतिरहिताः। वय सर्वेऽपि अयोध्यावासिनः, शोच्या शोचनीया निन्दनीया इत्यर्थः। भूः धरा, अनृपा राजशून्या। बत खेदे, केकय्युपज्ञं मध्यमराज्ञ्या प्रथमं ज्ञातम्, केकयीनिदानम् इति यावत्, लघुत्वम् तुच्छत्वम्, बह्वनर्थम् भूयोऽनर्थकृद् अभूदिति शेषः। लघुत्वे क्लेशकरत्वादिबहुधर्मारोपात् तुल्ययोगिता॥३१

कोशः—'धवः पतिः प्रियो भर्ता'।
'विश्वस्ताविधवे समे'।
'उपज्ञा ज्ञानमाद्यं स्याद्'—इत्याद्यमरः।

समासः—नृपस्य आत्मजौ नृपात्मजौ। सीतया सह वर्तेते इति ससीतौ। अविद्यमानः नृपः यस्यां सा अनृपा। 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तपदलोपः' इत्यभियुक्तोक्तेः 'अनेकमन्यपदार्थे २।२।२४' इति समासे विद्यमानमात्रस्य लोपे अनृपेति साधुः। बहवः अनर्था यस्मिन् तद् बह्वनर्थम्। केकय्या उपज्ञा इति विग्रहे कृद्योगे समासे 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम् २।४।२१' इति नपुंसकत्वे 'ह्रस्वो नपुंसके प्रातिपदिकस्य १।२।४७' इति ह्रस्वे केकय्युपज्ञम्।

कृदन्तः—उपज्ञायते इति कर्मणि 'आतश्चोपसर्गे ३।३।१०६' इति स्त्रियामङि 'आतो लोप इटि च ६।४।६४' इति आकारलोपे टापि उपज्ञेति। अवश्यम् शोच्यन्ते इति शुच शोके इति धातोः अवश्यार्थे 'ऋहलोर्ण्यत् ३।१।१२४' इति ण्यति 'ण्य आवश्यके ७।३।६५' इति कुत्वनिषेधे शोच्याः।

तिङन्तः—क्लिश उपतापे इति दैवादिकधातोर्लिटि द्वित्वादौ 'असंयोगाल्लिट् कित् १।२।५' इति कित्वात् गुणाभावे चिक्लिशतुः। मृङ् प्राणत्यागे इति धातोः तौदादिकात् 'म्रियतेर्लुङ्लिङोश्च १।३।६१' इति नियमात् परस्मैपदे णलि द्वित्वादिकार्य्ये 'उरत् ७।४।६६' इति अभ्यासस्य अरि हलादिशेषे 'अचो ञ्णिति' वृद्धौ ममार इति।

वाच्य०—नृपात्मजाभ्यां ससीताभ्याम् चिक्लिशे। राज्ञा मम्रे। भवतीभिः विधवाभिः अमावि। अस्माभिः शोच्यैर्भूयते। केकय्युपज्ञेन लघुत्वेन बह्वनर्थेन अमावि।

शिक्षा—"गुणवदगुणवद्वा कुर्वता कार्य्यमादौ परिणतिरवधार्या यत्नतः पण्डितेन" इति शिक्षयति॥ ३२॥

सम्प्रति भरतकृतं शपथमाख्याति—

**नैतन् मतं मत्कमिति ब्रुवाणः सहस्र-शोऽसौ शपथानशप्यत्।**
**उद्घाश्यमानः पितरं स-रामं लुठयन् स-शोको भुवि रोरुदावान्॥३३॥**

अन्वयः—मम एतत् मतं न इति ब्रुवाणः सरामम् पितरमुद्घाश्यमानः सशोकः भुवि लुठयन् रोरुदावान् असौ ( भरतः ) सहस्रशः शपथान् अशप्यत्।

हिन्दी—'यह मेरी राय नहीं थी' यह कहते हुए रामके साथ पिताका नाम ले ले कर चिल्लाते हुए पृथ्वी पर लोटते हुए अत्यन्त लगातार रोते हुए भरतने अनेकों शपथें खायीं।

व्याख्या—मम भरतस्य, एतत् मम मातृकृतं कर्म मतं संमतं न इति ब्रुवाणः वदन्, सरामं रामसहितं पितरं जनकम् उद्घाश्यवानः उच्चैः आक्रोशन्, सशोकः समन्युः, भुवि धरायाम् लुठयन् परिपतन्, रोरुदावान् भृशमतिशयेन पुनः पुनः अश्रुविमोकं कुर्वन्, असौ भरतः, सहस्रशः अनेकशः, शपथान् शपनानि ( सम्प्रत्ययवचनानि ) अशप्यत् अकरोत्। सहोक्त्या सह इह मताभावसाधकः शपथ इति काव्यलिङ्गम्।

कोशः—'तातस्तु जनकः पिता'। 'शपनं शपथः पुमान्'।

कृदन्तः—दैवादिकस्य लुठ विलोडने इत्यस्य शतरि लुठयन्। रुद धातोर्यङि 'सन्यङोः ६।१।९' इति द्वित्वे, 'गुणो यङ्लुकोः ७।४।८२'इति गुणे रोरुद्य इत्यस्य धातुत्वात् 'अ प्रत्ययात् ३।३।१०२' इति अप्रत्यये 'अतो लोपः

६।४।४८' इति अलोपे 'यस्य हलः ६।४।४९' इति यलोपे, टापि रोरुदा शब्द-सिद्धिः। वाश शब्दे इति दैवादिकस्य शानचि उद्वाश्यमानः।

**तद्धितः**—रोरुदा अस्ति अस्येति विग्रहे 'तदस्यास्त्यस्मिन्निति मतुप् ५।२।९४' इति मतुपि 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८।२।९' इति मस्य वत्वे रोरुदावान्। अहं ग्रामणीः अस्येति मत्कम् इत्यर्थे अस्मद् शब्दात् 'स एषां ग्रामणीः ५।२।७८' इति कन् प्रत्यये 'प्रत्ययोत्तरपदयोश्च ७।२।९८' इति मपर्यन्तस्य मदादेशे 'अतो गुणे ६।१।९७' इति पररूपे मत्कशब्दात् नपुंसके, सौ, मत्कम् इति। सहस्रवारान् इत्यर्थे 'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ५।४।४२' इति शस्प्रत्यये अव्ययत्वे सहस्रशः।

**तिङन्तः**— शप आक्रोशे इति दैवादिकात् लङि अशप्यत्।

**वाच्य०**—एतेन मत्केन मतेन न भूयते इति ब्रुवाणेन उद्वाश्यमानेन लुठ्यता रोरुदावता अमुना शपथा अशप्यन्त।

**शिक्षा**— सन्दिह्यमानेन स्वलाञ्छनमवश्यं दूरीकरणीयम्। 'अतथ्यस्तथ्यो वा हरति महिमानं जनरवः' इति नीतिरपि ॥ ३२ ॥

सम्प्रति भरतं सुस्थयतां सचिवानां कर्तव्यमाख्याति—

**तं सुस्थयन्तः सचिवा नरेन्द्रं, दिधक्षयन्तः समुदूहुरारात्।**
**अन्त्याऽऽहुतिं हावयितुं स-विप्राश्, चिचीषयन्तोऽध्वर-पात्र-जातम् ॥३३॥**

**अन्वयः**—तं सुस्थयन्तः नरेन्द्रं दिधक्षयन्तः अन्त्याहुतिं हावयितुम् अध्वरपात्र-जातम् चिचीषयन्तः सविप्राः सचिवाः आरात् समुदूहुः (नरेन्द्रमिति शेषः)।

**हिन्दी**— भरतको प्रबोध देते हुए राजाके शवको जलानेकी इच्छा कराते हुए राजाके अग्निहोत्रके पात्रोंको एकत्र करनेकी इच्छाको उद्‌बुद्ध करते हुए ब्राह्मणोंके साथ सचिवलोग राजाके शवको निकटही श्मशान पर ले गये।

**व्याख्या**— तं भरतं सुस्थयन्तः सान्त्वयन्तः, नरेन्द्रं नरेन्द्रशवं, दिधक्षयन्तः दग्धुम् एषयन्तः, अध्वरपात्रजातम् जुह्वादियज्ञसाधनसमूहं चिचीषयन्तः चेतुम् एषयन्तः, सविप्राः ब्राह्मणसहिताः सचिवाः मन्त्रिणः, आरात् समीपम्, उदूहुः निर्जह्रुः, नरेन्द्रमिति शेषः। यन्तानुप्रासश्चमत्कृत्।

**कोशः**—'अथास्त्रियाम्, अन्तो जघन्यं चरममन्त्य-पाश्चात्य-पश्चिमाः'।
'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः'—इत्याद्यमरः।

समासः—अन्त्या चासौ आहुतिः अन्त्याहुतिः, ताम् । अध्वरस्य पात्राणि अध्वरपात्राणि, तेषां जातम् ।

कृदन्तः—सुस्थं कुर्वन्ति इति विग्रहे 'तत् करोति तदाचष्टे (वा०) ३।१।२६' इति णिचि, टिलोपे सुस्थि इत्यस्य धातुत्वाद् लटि, शत्रादेशे सुस्थयन्तः । दह भस्मीकरणे इति भौवादिकाद् दह् धातोः सनि द्वित्वादौ 'दादेर्धातोर्घः ८।२।३२' इति हस्य घत्वे, भष्भावे, चर्त्वे, षत्वे दिधक्ष धातोः णिचि, ततो शत्रादेशे दिधक्षयन्तः । एवं चि धातोः सनि 'इको झल् १।२।९' इति कित्वे गुणाभावे 'अज्झनगमां सनि ६।४।१६' इति दीर्घे चिचीषेत्यस्य धातुत्वाण्णिचि, ततो लटः शत्रादेशे चिचीषयन्तः ।

तिङन्तः—वह् धातोः सम्-उद्-इत्युपसर्गद्वययुक्तात् लिटि 'सम्प्रसारणं तदाश्रयं च कार्य्यं बलवदिति' 'वचिस्वपियजादीनां किति ६।१।१५' इति सम्प्रसारणे पूर्वरूपे उह् इत्यस्य द्वित्वेऽभ्यासकार्ये सवर्णदीर्घे समुदूहः ।

वाच्य०—तं सुस्थयद्भिः नरेन्द्रं दिधक्षयद्भिः सविप्रैः सचिवैः नरेन्द्रः समुदूहे ।

शिक्षा—अवश्यकर्तव्यं वक्षसि शिलां बद्ध्वा कर्तव्यमेवेति ॥ ३३ ॥

शवनिर्हरणरीतिं तदानीन्तनीमाख्याति—

**उदक्षिपन् पट्ट-दुकूल-केतू-नवादयन् वेणु-मृदङ्ग-कांस्यम् ।**
**कम्बूंश् च तारानधमन् समन्तात्,तथाऽऽनयन् कुङ्कुम चन्दनानि ॥३४॥**

अन्वयः—( शवनिर्हारिकाः ) पट्टदुकूलकेतून् उदक्षिपन्, वेणुमृदङ्गकांस्यम् अवादयन्, तारान् कम्बून् अधमन्, तथा समन्तात् कुङ्कुमचन्दनानि आनयन् ।

हिन्दी—शव-वाहकोंने रेशमी वस्त्रोंकी ध्वजोंको फहराया, वंशी, पखावज, झांझवाद्योंको बजाया, जोरोंसे शंखोंको फूंका और चारों ओरसे केसर, चन्दन आदि सुगन्ध द्रव्योंको वे लाये ।

व्याख्या—( शवनिर्हारकाः ) पट्टदुकूलकेतून् कौशेयवस्त्रध्वजान्, उदक्षिपन् उदश्रयन्, वेणुमृदङ्गकांस्यम् वंशमुरजकांस्यतालम्, अवादयन् वादितवन्तः । तारान् उच्चतरध्वनीन्, कम्बून् शङ्खान् अधमन् अपूरयन्,तथा तद्वत् समन्तात् सर्वतः कुङ्कुमचन्दनानि केशर-मलयजादि-सुगन्धि-द्रव्याणि, आनयन् आनीतवन्तः । अनेकक्रियायाः कारकमेकमिति दीपकालङ्कारः ।

कोशः--'अथ कुङ्कुमम् । काश्मीरजन्माग्निशिखं वरं वाह्लीकपीतने ।'

'रक्तसंकोच-पिशुनं धीरं लोहित-चन्दनम् ।'

'शङ्खः स्यात्कम्बुरस्त्रियाम्'--इत्याद्यमरः ।

**समासः**—पट्टानां दुकूलानि, तेषां केतवः, तान् । वेणवश्च मृदङ्गाश्च कांस्यानि च तेषां समाहारः वेणुमृदङ्गकांस्यम् । अत्र हि 'जातिरप्राणिनाम् २।४।६' इति एकवद्भावो ज्ञेयः । कुङ्कुमाश्च चन्दनानि च कुङ्कुमचन्दनानि इति द्वन्द्वः ।

**तद्धितः**—कंसो नाम लोहधातुः । ततः कंसाय हितम् इति विग्रहे 'तस्मै हितम् ५।१।५१' इति छ प्रत्यये कंसीयः । तस्य विकार इत्यर्थे 'कंसीयपरशव्ययोर्यञञौ लुक् च ४।३।१६८' इति छस्य लुकि, यञ् प्रत्यये, आदिवृद्धौ, कांस्य-शब्दसिद्धिः ।

**तिङन्तः**--उत्पूर्वकात् क्षिप प्रेरणे इति तौदादिकाल्लङि उदक्षिपन् । वदो ण्यन्ताल्लङ् अवादयन् । ध्मा शब्दाग्निसंयोगयोः इति भौवादिकात् लङि 'पाघ्राध्मा० ७।३।७८' इति धमादेशे अधमन् । णीञ् प्रापणे इति भौवादिकस्य लङि आङ्योगे आनयन् इति ।

**वाच्य०**—( निर्हारकैः ) पट्टदुकूलकेतवः उदक्षिप्यन्त । वेणुमृदङ्गकांस्यम् अवाद्यत । ताराः कम्बवः अध्मायन्त । कुङ्कुमचन्दनानि आनीयन्त ।

**शिक्षा**—[1]वृद्धानां लोकान्तरप्रस्थानमपि मङ्गलमेवेति वाद्य-प्रयोग आर्य्याणाम् । यतो हि आत्मनो नित्यत्वात्तस्य नवदेहे पुनरागमनमुच्चलोकगतिर्वा शुभैवेति हेतुः ॥३४॥

सम्प्रति राज्ञः श्रोत्रियवच्चितासंस्कारमाख्याति—

**श्रोत्राऽक्षि-नासा-वदनं स-रुक्मं, कृत्वाऽजिने प्राक्-शिरसं निधाय ।**
**सञ्चित्य पात्राणि यथा-विधान-मृत्विग् जुहाव ज्वलितं चिताग्निम् ॥३५॥**

**अन्वयः**—ऋत्विक् अजिने प्राक्शिरसं ( शवं ) निधाय श्रोत्राक्षिनासावदनं सरुक्मं कृत्वा यथाविधानं पात्राणि सञ्चित्य प्रज्वलितं चिताग्निं जुहाव ।

---

१. टिप्पणी—आर्य्योंमें शवके साथ भी बाजा बजानेकी रीति इसीलिये है कि आत्मा नित्य है । वह तो मरता ही नहीं । यदि मुक्ति पा गया है तो भी खुशी है या किसी अच्छे लोकमें गया है तो भी खुशी है । बुरे लोककी तो कल्पना ही नहीं की जाती ।

हिन्दी—ऋत्विक्ने मृगाजिनपर शवको पूर्वशिर रखकर कान, आँख, नाक, मुँहमें सोना रखकर स्रुवा आदि अग्निहोत्रके पात्रोंको यथाविहित अङ्गों पर रखकर चिताग्निमें हवन किया यानी चिता प्रज्वलित हो उठी।

व्याख्या—ऋत्विक् संस्कर्ता याजकः ( अत्र भरत एव ), अजिने कृष्णसार-चर्मणि, प्राक्शिरसं पूर्वशीर्षम् ( शवम् ) ( शाखाभेदात् पूर्वशिरो ज्ञेयम्), निधाय संस्थाप्य, श्रोत्राक्षिनासावदनं कर्णनेत्रनासिकास्यम्,सरुक्मं ससुवर्णम्, कृत्वा विधाय, यथाविधानम् विधिपूर्वकम्, पात्राणि भाजनानि (अग्निहोत्रसाधनानि इति यावत्), सञ्चित्य विन्यस्य, ज्वलितम् सन्दीप्तम् चिताग्निम् अन्त्येष्टिवह्निम्, जुहाव ( जुहोतिस्म) जुहवांचकार। ऋत्विज एकस्यैवानेकक्रियाविधानाद् दीपकम्।

कोशः—'अजिनं चर्मकृत्तिः स्त्री'त्यमरः।

'वृताः कुर्वन्ति ये यज्ञमृत्विजो याजकाश्च ते'—(इति कात्यः)।

समासः—श्रोत्रे च अक्षिणी च नासा च वदनं चेति श्रोत्राक्षिनासावदनम् 'द्वन्द्वश्च प्राणितूर्य्य-सेनाङ्गानाम् २।४।२' इति एकवद्भावः। प्राक् शिरो यस्य स प्राक्शिरास्तम्। विधानम् अनतिक्रम्य यथाविधानम् इति पदार्थानतिवृत्तौ 'अव्ययं विभक्ति० २।१।६' इति समासः।

कृदन्तः—निपूर्वकात् धा धातोः 'समासेऽनञ्पूर्वे क्त्वो ल्यप् ७।१।३७' इति क्त्वो ल्यपि निधायेति। स्थानिवद्भावात् 'क्त्वातोसुन्कसुनः १।१।४०' इत्यव्ययम् ज्ञेयम्। कृ-धातोः 'समानकर्तृकयोः पूर्वकाले ३।४।२१' इति क्त्वा प्रत्यये कृत्वेति। 'ऋत्विग्दधृक्० ३।२।५९' इति क्विन्प्रत्ययान्तो निपातः ऋत्विगिति। सञ्चित्येत्यस्य सम्पूर्वस्य चिञः क्त्वो ल्यपि तुकि च सिद्धिः।

तिङन्तः—हु दानादनयोः इति जुहोत्यादिस्थस्य लिटि द्वित्वेऽभ्यासकार्ये 'अचो ञ्णिति ७।२।११५' इति वृद्धौ आवादेशे जुहावेति आम्प्रत्ययाभावे रूपम्।

वाच्य०—ऋत्विजा ज्वलितः चिताग्निर्जुहुवे।

शिक्षा—प्राक्तने काले राजानोऽपि अग्निहोत्रिणो भवन्तिस्म इति सूचयति।३५।

सम्प्रति पितृमेधं सम्पाद्य रामं प्रत्यानिनीषोर्भरतस्य वनयानमाख्याति—

**कृतेषु पिण्डोदक-सञ्चयेषु, हित्वाऽभिषेकं प्रकृतं प्रजाभिः।**
**प्रत्यानिनीषुर् विनयेन रामं, प्रायादरण्यं भरतः स-पौरः॥३६॥**

**अन्वयः**—पिण्डोदकसञ्चयेषु कृतेषु प्रजाभिः प्रक्लृप्तम् अभिषेकम् हित्वा विनयेन रामम् प्रत्यानिनीषुः सपौरः भरतः अरण्यम् प्रायात् ।

**हिन्दी**—पितृमेध करचुकनेपर भरतने प्रजाओंसे प्रकल्पित राज्याभिषेक-को त्यागकर विनयसे रामचन्द्रको लौटा लानेकी इच्छासे पौर लोगोंके साथ काननकी ओर प्रस्थान कर दिया ।

**व्याख्या**—पिण्डोदकसञ्चयेषु श्राद्ध-पिण्डतर्पणास्थि-प्रवाहविप्रपूजनभो-जनबन्धुप्रीतिसत्कारादिकृत्येषु, कृतेषु सम्पादितेषु सत्सु, प्रजाभिः प्रकृतिभिः, प्रक्लृप्तं प्रकल्पितम्, अभिषेकं राज्यसिंहासनारोहमहोत्सवं हित्वा त्यक्त्वा, विनयेन नम्रतया, रामं राघवं प्रत्यानिनीषुः प्रत्यावर्तयिषुः, सपौरः सनागरजनः, भरतः केकयीपुत्रः, अरण्यं काननम्, प्रायात् प्रातिष्ठत । सहोक्त्या सहैवारण्ययानहेतूक्त्या काव्यलि-ङ्गमपि ।

**कोशः**—'प्रजा स्यात्सन्ततौ जने । 'पिण्डो बोले बले सान्द्रे देहागारैकदेशयोः' । देहमात्रे निवापे च गोलसिह्लकयोरपि'—(इति मेदिनी) ।

**समासः**—पिण्डाश्च उदकञ्च सञ्चयश्च पिण्डोदकसञ्चयाः, तेषु । पौरैः सह सपौरः ।

**कृदन्तः**—प्रत्यानेतुमिच्छतीति विग्रहे प्रति-आङ्-पूर्वकात् नी धातोः सन्नन्तात् 'सनाशंसभिक्ष उः ३।२।१५८' इति उप्रत्यये, अलोपे इत्यानिनीषुः । हा धातोः क्त्वा-प्रत्यये 'जहातेश्च क्त्वि ७।४।४३' इति ह्यादेशे हित्वेति साधु ।

**वाच्य०**—प्रत्यानिनीषुना सपौरेण भरतेन अरण्यं प्रायायत ।

**शिक्षा**—'रामादपि हि तं मन्ये धर्मतो बलवत्तरम्' इति भरतमुद्दिश्य दशरथोक्तिः वाल्मीकिना निबद्धा । तामुक्तिमार्य्याणां भ्रातृ-सौहार्दं च द्योतयति ॥३६॥

सम्प्रति भरतसेनायाः काननगमनप्रकारमाख्याति—

**शीघ्रायमाणैः ककुभोऽश्नुवानैर्, जनैर-पन्थानमुपेत्य सृप्तैः ।**
**शोकाद-भूषैरपि भूश् चकासा-ञ्चकार नागेन्द्र-रथाऽश्व-मिश्रैः ॥ ३७ ॥**

**अन्वयः**—भूः शीघ्रायमाणैः ककुभः अश्नुवानैः अपन्थानम् उपेत्य सृप्तैः शोकाद् अभूषैः अपि नागेन्द्ररथाश्वमिश्रैः जनैः चकासाञ्चकार ।

**हिन्दी**—पृथ्वी, शीघ्र चलने वाले समस्त दिशाओंमें फैले, बेराहको

राहसे भी गमन करने वाले, शोकके कारण अभूषित होते हुए भी हाथी रथ और घोड़ोंसे युक्त मनुष्योंसे सुशोभित हो रही थी।

व्याख्या—भूः धरा, शीघ्रायमाणैः त्वरया गच्छद्भिः, ककुभः दिशः, अश्नुवानैः व्याप्तैः, अपन्थानम् अमार्गम् उपेत्य प्राप्य, सृप्तैः गतैः, शोकात् मन्युतः अभूषैः शोभारहितैः अपि तथापि नागेन्द्ररथाश्वमिश्रैः हस्तिस्यन्दनहययुक्तैः जनैः लोकैः, चकासाञ्चकार दिदीपे। विरोधाभासोऽलङ्कारः।

कोशः—'मतङ्गजो गजो नागः कुञ्जरो वारणः करी'।
'अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः' इत्याद्यमरः।

समासः—न पन्थाः अपन्थाः तम् अपन्थानम्। अत्र 'ऋक्पूरब्धूः० ५।४।७४' इति प्राप्तस्य समासान्तस्य 'नञस्तत्पुरुषात् ५।४।७१' इति निषेधे 'पथो विभाषा ५।४।७२' इति वैकल्पिकत्वादप्रवृत्तौ रूपम्। नागेन्द्राश्च रथाश्च अश्वाश्चेति नागेन्द्ररथाश्वम्। 'द्वन्द्वश्च प्राणि० २।४।२' इति एकवद्भावे, 'बहुष्वनियमः' इति वचनाद् 'अभ्यर्हितं च' इति वचनाच्च नागेन्द्रस्याभ्यर्हितत्वात्पूर्वनिपाते तेन मिश्राः नागेन्द्ररथाश्वमिश्राः, तैः।

कृदन्तः—अशीघ्राः शीघ्रा भवन्त इति शीघ्रायमाणाः तैः 'भृशादिभ्यो भुव्यच्वेः० ३।१।१२' इति क्यङि, 'अकृत्सार्वधातुकयोर्दीर्घः ७।४।२५' इति दीर्घे शीघ्राय इत्यस्य शानजन्तस्य भिसि रूपम्। अशू व्याप्तौ सङ्घाते च इति सौवादिकस्य अश्धातोः शानचि अश्नुवानैः। उपपूर्वकात् इण् गतौ इति आदादिकस्य क्त्वाप्रत्यये उपपदसमासे, क्त्वो ल्यपि, 'षत्वतुकोरसिद्धः ६।१।८६' इति एकादेशस्यासिद्धत्वात् तुकि उपेत्येति रूपम्।

तिङन्तः—चकासृ दीप्तौ इति भौवादिकात् चकास् धातोः लिटि 'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम् ३।१।३५' इति वार्तिकबलादामि कृञोऽनुप्रयोगे चकासांचकारेति।

वाच्य०—भुवा चकासांचक्रे।

शिक्षा—महतां परभूषणं स्वाभाविको धर्म इति शिक्षयति॥ ३७॥

सम्प्रति भरतसैनिकानां मार्गकृत्यमाख्याति—

**उच्चिचयिरे पुष्पफलं वनानि, सस्नुः पितॄन् पिप्रियुरापगासु।**
**आरेटुरित्वा पुलिनान्यशङ्कं छायां समाश्रित्य विशश्रमुश्च॥३८॥**

अन्वयः—( भरतसैनिकाः ) वनानि पुष्पफलम् उच्चिक्यिरे, आपगासु सस्नुः, पितॄन् पिप्रियुः । पुलिनानि इत्वा अशङ्कम् आरेटुः, छायां समाश्रित्य विशश्रमुश्च ।

हिन्दी—भरतके सैनिकोंने वनोंसे पुष्प फलोंका संग्रह किया, नदियोंमें स्नान किया, पितरोंका तर्पण किया, तटों पर जाकर निःसंकोच भावसे एक दूसरेके साथ बातें की, एवं वृक्ष तले विश्राम भी किया ।

व्याख्या—( भरत-सैनिकाः ) वनानि काननानि, पुष्पफलम् कुसुमफलम्, उच्चिक्यिरे सञ्जगृहुः । आपगासु नदीषु सस्नुः स्नाताः । पितॄन् अग्निष्वात्ता-दीन् पिप्रियुः ततृपुः । पुलिनानि नदीतटानि इत्वा गत्वा, अशङ्कम् निःशङ्कम् आरेटुः परिभाषितवन्तः । छायाम् वृक्षतलम् आश्रित्य अधिष्ठाय, विशश्रमुः विश्रामं कृतवन्तः । इन्द्रवज्रा छन्दः । लक्षणं १–२ पद्ये । एकस्यानेकक्रिया-योगाद् दीपकम् ।

कोशः—'स्रोतस्वती द्वीपवती स्रवन्ती निम्नगाऽऽपगा'—इत्यमरः ।

तिङन्तः—उत्पूर्वकात् चिञ् चयने इति सौवादिकात् चिधातोः लिटि, द्वित्वे 'विभाषा चेः ७।३।८' इति कुत्वे 'एरनेकाचोऽसंयोगपूर्वस्य ६।४।८२' इति यणि उच्चिक्यिरे । चिञः द्विकर्मकत्वात् वनानीति अकथितं कर्म । प्रीञ् तर्पणे कान्तौ च इति क्र्यादिस्थप्रीधातोः लिटि, द्वित्वेऽभ्यासकार्ये,'अचि श्नु० ६।४।७७' इतीयङि पिप्रियुः । रट परिभाषणे इति धातो-र्लिटि 'अत एक-हल्मध्ये० ६।४।१२०'इति एत्वाभ्यासलोपे आरेटुः । आरेमुरिति पाठेऽपि तद्वत् । श्रमु तपसि खेदे च इति दैवादिकस्य लिटि विशश्रमुः । व्युपसर्गयोगश्च विश्रामेऽर्थे ।

वाच्य०—तैः वनानि पुष्पफलम् उच्चिक्यिरे । सस्ने । पितरः पिप्रि-यिरे । आरेटे विशश्रमे च ।

शिक्षा—शोकार्तैरपि अवश्य-कर्तव्यम् कार्य्यमिति शिक्षयति ॥ ३८ ॥

भरत-सैन्यानां मार्गनिर्देशं कुर्वन् तत्-कृत्यमेव वर्णयति—

**संप्राप्य तीरं तमसाऽऽपगाया, गङ्गाऽम्बु-सम्पर्क-विशुद्धि-भाजः ।**
**विगाहितुं यामुनमम्बु पुण्यं, ययुर् निरुद्ध-श्रमवृत्तयस् ते ॥३९॥**

अन्वयः—तमसापगायाः तीरं सम्प्राप्य गङ्गाम्बुसम्पर्कविशुद्धिभाजः निरुद्ध-श्रमवृत्तयः ते पुण्यं यामुनम् अम्बु विगाहितुम् ययुः ।

**हिन्दी**—गंगा जलके संसर्गसे शुद्ध तमसा नदीके तीर पर अपनी थकावट मिटानेके पश्चात् वे ( भरतजीके पौरगण ) यमुनाजीके पुण्य जलमें अवगाहन करनेके लिये आगे बढ़े।

**व्याख्या**—पूर्वं तमसापगाया तमसा नाम नद्याः,तीरं तटं सम्प्राप्य अधिगत्य, ( ततः ) गङ्गाम्बुसम्पर्कविशुद्धिभाजः देवनदीसमागमपावित्र्यजुषः, निरुद्धश्रम-वृत्तयः गतक्लमाः, ते भरत-सैनिकाः, पुण्यं सुकृतजनकं ( धर्म्यमिति यावत् ) यामुनं कालिन्दम् अम्बु नीरम्, पिगाहितुम् अवलोडितुम् ( स्नानादिना ), ययुः जग्मुः। सूक्ष्मेक्षिकया भरतमार्गक्रमसूचनात् सूक्ष्मालङ्कारः।

कोशः— कालिन्दी सूर्य्यतनया यमुना शमनस्वसा।'

'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः'— इत्याद्यमरः।

**समासः**—तमसा चासौ आपगा तमसापगा,तस्याः। गङ्गाया अम्बु गङ्गाम्बु, गङ्गाम्बुना सम्पर्कः गङ्गाम्बुसम्पर्कः, तेन विशुद्धिः गङ्गाम्बुसम्पर्कविशुद्धिः, ताम् भजन्ते इति गङ्गाम्बुसम्पर्कविशुद्धिभाजः 'भजो ण्विः ३।२।६२' इति ण्विप्रत्ययः। श्रमस्य वृत्तिः श्रमवृत्तिः, निरुद्धा श्रमवृत्तिः येषां ते ( बहु० )।

**तद्धितः**—यमुनाया इदम् यामुनम् 'तस्येदम् ४।३।१२' इति अणि, आदिवृद्धौ, 'यस्येति च ६।४।१४८' इति आलोपे यामुनम्। अपां समूहः आपः 'तस्य समूहः ४।२।२७' इति अणि, आदिवृद्धौ, आपेन गच्छति इति आपगा। आपे उपपदे गम्–धातोर्ड-प्रत्यये डित्वाट्टिलोपे कृदन्तसिद्धिश्च।

**तिङन्तः**—या प्रापणे इति धातोर्लिटि द्वित्वे 'आतो लोप इटि च ६।४। ६४' इति आलोपे ययुः।

**वाच्य०**—गङ्गाम्बुसम्पर्क-विशुद्धिभाग्भिः निरुद्धश्रमवृत्तिभिः तैः यये।

**शिक्षा**—भारते नदीनां प्राधान्यमिति विविधपदार्थसत्त्वेऽपि भरतमार्गनिर्देशे नदीनामेव नामनिर्देशात्। इयम् नदीपूजा प्राचीनेति शिक्षा॥ ३९॥

सम्प्रति राममार्गमध्यस्थस्य भरद्वाजाश्रमस्य प्राप्तिमाख्याति—

**ईयुर् भरद्वाज-मुनेर् निकेतं, यस्मिन् विशश्राम समेत्य रामः।**
**च्युताऽशनायः फलवद् विभूत्या, व्यस्यन्नुदन्यां शिशिरैः पयोभिः॥४०॥**

**अन्वयः**—( भरतपौराः ) भरद्वाजमुनेर्निकेतम् ईयुः। यस्मिन् समेत्य फलवद्विभूत्या च्युताशनायः शिशिरैः पयोभिः उदन्यां व्यास्यन् रामः विशश्राम।

**हिन्दी**—भरतजीके पौरगण भरद्वाज मुनिके आश्रम पहुँचे, जहाँ रामचन्द्रने ( कभी ) फलशाली वृक्षोकी समृद्धिसे भूख और ठडे मीठे जलसे पिपासा मिटाते हुए निवास किया था ।

**व्याख्या**—भरतपौरा. अयोध्यावासिनः, भरद्वाजमुने. भरद्वाजनाम्नः मुनेः मननशीलस्य विदुष., निकेतनम् सद्म ध्वज वा ईयुः प्रापु । यस्मिन् यत्र, समेत्य मिलित्वा, फलवद्विभूत्या फलशालिवृक्ष-समृद्धचा, च्युताशनायः व्यपगतबुभुक्षः, शिशिरैः शीतलै पयोभि. जलैः, उदन्या पिपासा व्यस्यन् निवारयन्, रामः राघवः, विशश्राम विश्राम्यतिस्म । अद्भुतविभूतिवर्णनाद्भाविकालङ्कार ।

**कोश**.—'अशनाया बुभुक्षा क्षुत्' । 'उदन्या तु पिपासा तृट् तर्षः' ।
'गृह गेहोदवसित वेश्म सद्म निकेतनम्' । 'केतन ध्वजमस्त्रियाम्'-इत्याद्यमरः।

**समासः**—फलवता विभूतिः फलवद्विभूतिः, तया। च्युता अशनाया यस्य स । (केचन च्युताशनाया इति बहुत्व दर्शयन्तः व्यस्यन्-इत्यपि लङो झि-रूप निर्दिशन्ति । फलवती चासौ विभूतिरिति कर्मधारयो वा ) ।

**तद्धितः**- फलानि प्रशस्तानि येषु ते फलवन्तः इति । 'भूमनिन्दाप्रशसासु नित्ययोगेऽतिशायने' इत्यादिनिर्देशात् प्रशसायाम् 'तदस्यास्त्यस्मिन्० ५।२।९४' इति मतुपि 'मादुपधायाश्च० ८।२।९' इति मस्य वत्वे फलवत् इति शब्दसिद्धि. । 'अशनायोदन्य-धनाया-बुभुक्षापिपासागर्द्धेषु ७।४।३४' इति निपातनात् अशनायादन्याशब्दौ सिद्धौ ।

**कृदन्त**.—विपूर्वस्य दैवादिकस्य असु क्षेपणे इति धातो. शतरि दिवादित्वात् श्यनि व्यस्यन् । केषाचिन्मते लङो बहुत्वे रूपम् । भरतपौराः कर्तारः ।

**तिङन्तः**—इण् गतौ इति आदादिकस्य इ धातोर्लिटि 'परस्मैपदाना० ३।४। ८२' इति झेः उसादेशे, द्वित्वे, 'दीर्घ इणः किति ७।४।६९' इत्यभ्यासस्य दीर्घे, 'इणो यण् ६।४।८१' इति यत्वे ईयु· । श्रमु तपसि खेदे च इति दैवादिकस्य श्रम्-धातोर्लिटि णलि द्वित्वादिकार्य्ये उपधावृद्धौ विशश्रामेति ।

**वाच्य०**—निकेतम् ईये । रामेण विशश्रमे ।

**शिक्षा**—प्रियोपभुक्ते श्रद्धातिरेको भवति । योगिना योगसिद्धचैव सर्वं सम्पाद्यते इत्युभय-शिक्षाप्रद पद्यमिदम् ॥ ४० ॥

संप्रति मुनेर्दिनचर्यया सहैव भरत-सैन्यानां शिष्टाचारमाख्याति—

**वाचं-यमान् स्थण्डिल-शायिनश् च, युयुक्षमाणाननिशं मुमुक्षून् ।**
**अध्यापयन्तं विनयात् प्रणेमुः, पद्गा भरद्वाज-मुनिं स-शिष्यम् ॥४१॥**

अन्वयः—पद्गाः ( ते ) वाचंयमान् स्थण्डिलशायिनः युयुक्षमाणान् मुमुक्षून् अनिशम् अध्यापयन्तं भरद्वाजमुनिं सशिष्यं विनयात् प्रणेमुः ।

हिन्दी—पद-यात्रा कर आनेवाले भरत के अनुयायियोंने भूमिपर शयन करनेका व्रत रखने वालों, योगाभ्यासियों, मुमुक्षुओंको पढ़ाने वाले भरद्वाज मुनिका उनके शिष्य-मंडलीके साथ अभिनंदन किया ।

व्याख्या—पद्गाः पादचारिणः ( शिष्टाचारात्, ते भरतानुयायिनः ), वाचंयमान् मौनव्रतिनः, स्थण्डिलशायिनः भूशयनव्रतिनः, युयुक्षमाणान् योगाभ्यासिनः, मुमुक्षून् विरक्तान्, अनिशम् निरन्तरम्, अध्यापयन्तं पाठयन्तं भरद्वाजमुनिम् भरद्वाजमहर्षिम्, सशिष्यम् सहान्तेवासिनम्, विनयात् विनम्रतया, प्रणेमुः नमश्चक्रुः । ससहोक्ति–भाविकम् ।

कोशः—'तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः ।
यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ' ॥

कृदन्तः— वाचं यच्छन्तीति विग्रहे 'वाचि यमो व्रते ३।२।४०' इति खचि 'वाचंयमपुरन्दरौ ६।३।६९' इति पूर्वपदस्यामन्तनिपाते वाचंयमान् । स्थण्डिले शेरते इति विग्रहे शी–धातोः 'व्रते ३।२।८०' इति णिनिप्रत्यये स्थण्डिल-शायिनः । योक्तुमिच्छन्ति युयुक्षन्ते त एव युयुक्षमाणाः । युज् धातोः सन्नन्तात् शानचि मुगागमे नस्य मूर्द्धन्यादेशे युयुक्षमाणान् । एवम् मुमुक्षेति सन्नन्त-धातोः 'सनाशंसभिक्ष उः ३।२।१६८' इति उप्रत्यये मुमुक्षून् । पद्भ्याम् गच्छन्ति इति पद्गाः । पादपूर्वकात् गम् धातोः 'अन्यत्रापि दृश्यते इति वक्तव्यम् ३।२।४८' इति वार्तिकाद् ड–प्रत्यये पद्गाः । अधि-पूर्वकाद् इङ् अध्ययने इति आदादिकात् धातोः 'हेतुमति च ३।१।२६' इति णिचि 'क्रीङ्जीनां णौ ६।१।४८' इत्यात्वे 'अर्तिह्री० ७।३।३६' इति पुगागमे अध्यापि इत्यतः शतरि अध्यापयन्तम् ।

तिङन्तः-प्रपूर्वकात् णम् धातोः लिटि 'अत एक हल्मध्ये० ६।४।१२०' इति एत्वाभ्यासलोपे 'उपसर्गादसमासेऽपि णोपदेशस्य ८।४।१४' इति णत्वे प्रणेमुः ।

वाच्य०–पद्गैः अध्यापयन् भरद्वाजमुनिः प्रणेमे ।

**शिक्षा**—'स्वाध्यायान्मा प्रमदः' 'स्वाध्याय-प्रवचने च' इति वेद वाक्ये तथा शिष्टाचारः सर्वदा प्रतिपाल्य इति सर्वं शिक्षयति ॥ ४१ ॥

सम्प्रति भरद्वाजमुनेर्योगसिद्धिमाख्याति—

**आतिथ्यमेभ्यः परिर्निविवप्सोः कल्प-द्रुमा योग-बलेन फेलुः ।**
**धाम-प्रथिम्नो म्रदिमाऽन्वितानि, वासांसि च द्राधिम-वन्त्युदूहुः ॥४२॥**

**अन्वयः**—एभ्यः आतिथ्यं परिनिर्विवप्सोः धामप्रथिम्नः ( तस्य ) योग-बलेन कल्पद्रुमाः फेलुः । म्रदिमान्वितानि द्राघिमवन्ति वासांसि च उदूहुः ।

**हिन्दी**—भरत तथा उनके अनुगामी जनोंका आतिथ्य करनेकी आकांक्षा वाले भरद्वाज ऋषिके योग-बलसे कल्पवृक्ष फल गये यानी अपेक्षित सामग्री प्रस्तुत हो गयी और वे वृक्ष कोमल तथा लम्बे-लम्बे वस्त्रभी देने लगे ।

**व्याख्या**—एभ्यः भरतपौरेभ्यः, आतिथ्यम् अतिथिसत्कारम्, परिनिर्विवप्सोः दित्सोः ( चिकीर्षोरित्यर्थः ), धामप्रथिम्नः तेजोराशेः ( तस्य मुनेः ), योगबलेन समाधि-महिम्ना, कल्पद्रुमाः कल्पवृक्षाः ( संकल्पोपनता इत्यर्थः ), फेलुः फलितवन्तः ( भक्ष्यान्नपानादिकम् इति शेषः ) । म्रदिमान्वितानि मार्दव-युक्तानि, द्राघिमवन्ति दैर्ध्यशालीनि, वासांसि वसनानि च उदूहुः उद्वहन्ति स्म । इन्द्रवज्रा छन्दः ( लक्षणं १–२ पद्ये ) । 'योगश्चित्तवृत्तिनिरोधः' इति योगसूत्रम् ।

**कोशः**—'योगः संहननोपायध्यान-सङ्गतिमुक्तिषु' ।

'वस्त्रमाच्छादनं वास-श्चैलं वसनमंशुकम्'— इत्याद्यमरः ।

**समासः**—योगस्य बलम् योगबलम्, तेन । धाम्ना प्रथिमा यस्य स धाम-प्रथिमेति व्यधिकरणबहुव्रीहिः । भरद्वाजविशेषणम् । एभ्यः इत्यत्र 'कर्मणा यमभिप्रैति स सम्प्रदानम् १।४।३२' इति सम्प्रदानसंज्ञायाम् 'चतुर्थी सम्प्रदाने २।३।१३' इति चतुर्थी ।

**तद्धितः**—पृथोर्भाव इत्यर्थे 'पृथ्वादिभ्य इमनिज्वा ५।१।१२२' इति इमनिच् प्रत्यये 'रऋतोर्हलादेर्लघोः ६।४।१६१' इति ऋकारस्य रकारे प्रथु+इमन् इत्यत्र 'टेः ६।४।१४३' इति टिलोपे प्रथिमन् शब्दसिद्धिः । एवम् मृदोर्भाव इत्यर्थे म्रदिमन् इति । दीर्घस्य भावः इत्यर्थे इमनिचि, दीर्घस्य च 'प्रियस्थिर० ६।४।१५७' इति द्राघादेशे द्राघिमन् शब्दात् मतुपो मकारस्य वकारे द्राघिमवत् शब्दात् 'नपुं-

सकस्य झलचः ७।१।७२' इति नुमि द्राघिमवन्ति इति। अतिथये इदम् इत्यर्थे 'अतिथेर्ञ्यः ५।४।२६' इति ञ्यप्रत्यये आदिवृद्धौ आतिथ्यम्।

कृदन्तः—परिनिर् पूर्वकस्य डुवप् बीजसन्ताने छेदने च इति वप् धातोः सन्नन्तात् 'सनाशंसभिक्ष उः ३।२।१६८' इत्युप्रत्यये दानार्थकता परिनिर्विवप्सुः दित्सुरित्यर्थः, तस्य।

तिङन्तः—फल निष्पत्तौ इति भौवादिकस्य फलतेर्लिटि 'तॄफलभजत्रपश्च ६।४।१२२' इति एत्वाभ्यासलोपे फेलुः।

वाच्य०—कल्पद्रुमैः फेले, वासांसि च उदूहिरे।

शिक्षा—'सर्वदेवमयोऽतिथिः' इति योगिनामपि अतिथिसत्कारोऽवश्य-कर्तव्ये निर्दिष्ट इति। तथा योगसिद्धया सर्वं सम्भवतीत्यादि च शिक्षयति ॥४२॥

सम्प्रति योगबलादेव तत्राप्सरसामुपस्थितिं सूचयति—

**आज्ञां प्रतीषुर् विनयादुपास्थुर्जगुः सरागं ननृतुः सहावम्।**
**स-विभ्रमं नेमुरुदारमूचुस् तिलोत्तमाऽऽद्या वनिताश्च तस्मिन् ॥४३॥**

अन्वयः—तस्मिन् ( तपोवने ) तिलोत्तमाद्याः वनिताः आज्ञां प्रतीषुः, विनयात् उपास्थुः, सरागं जगुः, सहावं ननृतुः, सविभ्रमं नेमुः, उदारम् ऊचुः च।

हिन्दी—उस आश्रममे तिलोत्तमादि अप्सरायें आज्ञाकी प्रतीक्षा करती सी विनयभावके साथ आ उपस्थित हुईं। उन्होंने अनुरागसे गान किया, हाव-भावके साथ नृत्य किया, विलासके साथ विनय किया और व्यंगके साथ विनोद किया।

व्याख्या—तस्मिन् तपोवने, तिलोत्तमाद्याः तिलोत्तमाप्रभृतयः वनिताः दिव्याप्सरस आज्ञाम् मुनेरादेशं प्रतीषुः प्रतीच्छन्तिस्म। विनयात् नम्रतया, उपास्थुः उपस्थिताः (पादप्रक्षालनादिकृत्यार्थम्)। सरागम् मालवकौशिकादिरागबद्धम् जगुः गायन्तिस्म। सहावम् सश्रृङ्गारचेष्टं ननृतुः नृत्यन्तिस्म। सविभ्रमम् सविलासम् नेमुः नमन्तिस्म। उदारम् नागरिकभाषया सव्यङ्गम् ऊचुः वदन्तिस्म। ससहोक्ति-क्रियादीपकालङ्कृतिः।

कोशः—'प्रतीपदर्शिनी वामा वनिता महिला तथा'।

'स्त्रीणां विलास-विव्वोक-विभ्रमा ललितं तथा'।

'हेला लीलेत्यमी हावाः क्रियाः श्टङ्गारभावजाः'—इत्याद्यमरः।

समासः—सर्वत्रैव तेन सहेति बहुव्रीहिः। 'वोपसर्जनस्य ६।३।८२' इति सहस्य सादेशः—सरागम् सहावम् सविभ्रमम् इति।

तिङन्तः---प्रतिपूर्वकस्य इष् धातोः लिटि द्वित्वादौ प्रतीषुः। उपपूर्वस्य स्था-धातोः लुङि 'गातिस्था० २।४।७७' इति सिचो लुकि 'सिजभ्यस्तविदिभ्यश्च ३।४।१०९' इति अनुवर्तमाने 'आतः ३।४।११० इति झेर्जुसि 'उस्यपदान्तात् ६।१।९६' इति पररूपे उपास्थुः। गै शब्दे इत्यस्य लिटि 'आदेच उपदेशेऽशिति ६।१।४५'इत्यात्वे द्वित्वादौ 'आतो लोप इटि च' इत्यालोपे जगुः। ब्रूञो वच्यादेशे, लिटि, 'वचि-स्वपि-यजादीनां किति ६।१।१५' इति सम्प्रसारणद्वित्वादौ ऊचुः इति।

वाच्य०—तिलोत्तमाद्याभिः वनिताभिः आज्ञा प्रतीषे। उपास्थायि। जगे। ननृते। नेमे। ऊचे (कर्माविवक्षयाऽकर्मकत्वम्) ॥४३॥

निर्दिष्टां सर्वामपि राजोचितां सामग्रीं सम्पाद्य मुनिः वदति---

**वस्त्राऽन्न-पानं शयनं च नाना, कृत्वाऽवकाशे रुचि-संप्रक्लृप्तम्।**
**तान् प्रीति-मानाह मुनिस् ततः स्म, निवद्ध्वमाध्वं पिबतात्त शेध्वम् ॥४४॥**

अन्वयः---ततः प्रीतिमान् मुनिः रुचिसम्प्रक्लृप्तम् वस्त्रान्नपानं शयन च नाना-वकाशे कृत्वा निवद्ध्वम्, आध्वम्, पिबत, अत्त, शेध्वमिति तान् आहस्म।

हिन्दी---समस्त सामग्री प्रस्तुत कर प्रसन्न-चेता भरद्वाज मुनिने अतिथियोंसे कहा कि अब आप यथारुचि खान-पान, वस्त्र, शयन विश्राम करें।

व्याख्या----ततः सर्वसामग्रीसम्पादनानन्तरम्, प्रीतिमान् प्रसन्नः मुनिः मनन-शीलः भरद्वाजः, रुचिसम्प्रक्लृप्तम् यथारुचिविभक्तम् वस्त्रान्नपानं वासोभोज्यपेयं, शयनं शय्यां च, नानावकाशे अनेकप्रदेशे, कृत्वा संस्थाप्य, निवद्ध्वम् वस्त्राणि परिधत्त, आध्वम् उपविशत, पिबत पानं कुरुत, अत्त भुङ्ग्ध्वम्, शेध्वम् स्वपित इति तान् भरतपौरान्, आहस्म उवाच। उद्दिष्टानां क्रमेणानुद्देशाद् यथासंख्यालङ्कारः।

कोशः----'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः'।

समासः----वस्त्राणि च अन्नानि च पानानि चेति वस्त्रान्नपानम् 'सर्वद्वन्द्वो विभाषयैकवद् भवति' इति समाहारता। रुच्या सम्प्रक्लृप्तम् रुचिसम्प्रक्लृप्तम्।

कृदन्तः---शय्यतेऽस्मिन्निति अधिकरणे ल्युट् शयनम्। सम्पूर्वस्य कृपू सामर्थ्ये इति कृप् धातोः क्त प्रत्यये 'कृपो रो लः ८।२।१८' इति रस्य लकारे सम्प्रक्लृप्तम् इति।

तिङन्तः----वस आच्छादने इति धातोः 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ३।३।१६३' इति अतिसर्गे सर्वत्र लोटि (अतिसर्गः कामचारानुज्ञा) ध्वम्प्रत्यये, शपश्च लुकि,

'झलां जश् झशि ८।४।५३' इति सस्य दत्वे निवद्ध्वम् । एवम् आस उपवेशने इत्यस्यापि सस्य उभयत्र सलोपोऽपि साधुः । 'पाघ्राध्मा० ७।३।७८' इति पिबादेशे अदन्ते गुणाभावे पिबत । अद् धातोः तप्रत्यये चत्वंम् । शीङ् स्वप्ने इति शीधातोः 'शीङः सार्वधातुके गुणः ७।४।२१' इति गुणे शेध्वम् ।

**वाच्य०**----युष्माभिः निवस्यताम्, आस्यताम्, पीयताम्, अद्यताम् , शय्यताम् इति प्रीतिमता मुनिना ते उच्यन्ते स्म ।

**शिक्षा**--- योगसिद्धेः साफल्ये प्रसाद आयात्येवेति प्रसन्नेन मुनिना सर्वे उक्ताः ॥ ४४ ॥

भरत-सैन्यानामातिथ्यग्रहणानन्तरकृत्यमाह---

**ते भुक्तवन्तः सु-सुखं वसित्वा, वासांस्युषित्वा रजनीं प्रभाते ।**
**द्रुतं समध्वा रथ वाजि-नागैर्, मन्दाकिनीं रम्य-वनां समीयुः ॥४५ ॥**

**अन्वयः**---भुक्तवन्तस्ते ( भरतपौराः ) वासांसि वसित्वा रजनीम् उषित्वा प्रभाते समध्वाः रथवाजिनागैः द्रुतं रम्यवनां मन्दाकिनीं समीयुः ।

**हिन्दी**----आगत अतिथियोंने भोजन किया, कपड़े पहने, आरामसे रात बिताई और प्रातः रथ, घोड़े एवं हाथियोंके द्वारा सुन्दर वन-जलवाली गंगा नदीकी ओर प्रस्थान किया ।

**व्याख्या**----भुक्तवन्तः कृतभोजनाः, ते भरतपौराः, वासांसि वसनानि, वसित्वा परिधाय, सुसुखं सुखपूर्वकम् रजनीम् रात्रिम् उषित्वा शयित्वा, प्रभाते प्रातःकाले, रथवाजिनागैः स्यन्दनहयहस्तिभिः, समध्वाः पन्थानं प्राप्ताः, द्रुतं शीघ्रम्, रम्यवनां रमणीयकाननाम् सुजलाम् च मन्दाकिनीं तन्नाम्नीं सरितं, समीयुः समुपेताः । ससुखमिति पाठान्तरेऽपि तथैव । एककर्तृकानेकक्रियादीपकम् ।

**कोशः**---'वने सलिलकानने' ।

**समासः**----अध्वानम् सम्प्राप्ताः इति विग्रहे 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति वार्तिकबलात् 'कुगतिप्रादयः २।२।१८' इति समासे 'उपसर्गादध्वनः ५।४।८५ इति टचि नस्तद्धिते ६।४।१४४' इति टिलोपे समध्वाः । रथाश्च वाजिनश्च नागाश्चेति रथवाजिनागाः 'सर्वो द्वन्द्वो विभाषयैकवद् भवति' इति विभाषयैकवद्भावे बहुत्वं ज्ञेयम् । रम्यं वनं यस्याः सा ( बहु० ) । अत्र वनं काननं जलं चेत्युभयं ज्ञेयम् ।

कृदन्त:----वस धातोः क्त्वा प्रत्यये 'वसतिक्षुधोरिट् ७।२।५२' इतीटि 'मृडमृद-गुध-कुषक्लिश-वदवसः क्त्वा १।२।७' इति किल्वात् 'वचिस्वपियजादीना किति ६।१।१५' इति सम्प्रसारणे उषित्वेति । 'कालाध्वनोरत्यन्तसयोगे २।३।५' इति रजनीमित्यत्र द्वितीया ।

वाच्य०----भुक्तवद्भिः तैः समघ्वैः रम्यवना मन्दाकिनी समीये ।

शिक्षा—महतामाज्ञापालन निज कर्तव्यम् इति ॥ ४५ ॥

सम्प्रति रामान्वेषकास्ते चित्रकूटं सङ्गता:—

**वैखानसेभ्यः श्रुत-राम-वार्तास्, ततो विशिञ्जान-पतत्त्रि-सङ्घम् ।**
**अभ्रं-लिहाऽग्रं रवि-मार्ग-भङ्गम्, आनंहिरे ऽद्रिं प्रति चित्र-कूटम् ॥४६॥**

अन्वयः— तत. वैखानसेभ्यः श्रुतरामवार्ताः ( ते ) विशिञ्जानपतत्रिसङ्घम् अभ्रलिहाग्र रविमार्गभङ्गं चित्रकूटम् अद्रिम् प्रति आनहिरे ।

हिन्दी—मन्दाकिनी-तटपर तपस्वियोसे रामचन्द्रके चित्रकूट पर्वतपर होनेका समाचार सुनकर वे लोग पक्षियोके कलरवसे युक्त, गगन--चुबी शिखर-श्रेणीसे सूर्यके मार्गको भी रोक देने वाले चित्रकूट पर्वतको ओर बढे ।

व्याख्या—ततः प्रातः प्रस्थानानन्तरम्, वैखानसेभ्यः तपस्विभ्यः, श्रुतराम-वार्ता. आकर्णित-रामचित्रकूटस्थितयः, (ते) विशिञ्जानपतत्रिसङ्घम् कूजत्शकुन्त-समूहम्, अभ्रंलिहाग्रम् मेघस्पृक्च्छिखरम्, रविमार्गभङ्गम् सूर्य्याध्वावरोधिनम्, चित्र-कूटम् तन्नामकम् अद्रि गिरि प्रति अभिलक्ष्य, आनंहिरे प्रतस्थिरे। प्रतियोगे अद्रि द्वितीया । उदात्तालङ्कारश्च ।

कोशः—'वैखानसो वनेवासी वानप्रस्थश्च तापस.'—इति यादवः ।
'शकुन्ति पक्षि-शकुनि-शकुन्त-शकुनद्विजाः' ।
पतत्रि पत्रि-पतग-पतत्पत्ररथाण्डजा.'—इत्यमरः ।

समास —-श्रुता रामस्य वार्ता यैस्ते इति त्रिपदो बहुव्रीहिः । अथवा रामस्य वार्ता रामवार्ता इति षष्ठीतत्पुरुष कृत्वा पश्चाद् बहुव्रीहिः । पतत्रिणां सङ्घः पतत्रि-सङ्घः, विशिञ्जानः पतत्रिसङ्घः यस्मिन् । अभ्रलिहानि अग्राणि यस्य सोऽभ्रं-लिहाग्रः, तम् । रवेर्मार्गः रविमार्गः, तस्य भङ्गः रविमार्गभङ्गः, सोऽस्ति अस्याऽसौ रविमार्गभङ्ग । 'अर्शआदिभ्योऽच् ५।२।१२७' इति अचि सिद्धिः । अथवा रवेर्मार्गस्य भङ्गो येन यस्मिन्निति वा व्यधिकरणबहुव्रीहिः ।

कृदन्तः—शिजि अव्यक्ते शब्दे इति आदादिकात् शिञ्ज् धातोः लटः शानजादेशे शिञ्जानः। अभ्रं लिहन्ति इति विग्रहे 'वहाभ्रेलिहः ३।२।३२' इति खशि 'अरुर्द्विषदजन्तस्य मुम् ६।३।६७' इति मुमागमे अभ्रंलिहः।

तिङन्तः—अहि गतौ इति अंह् धातोः लिटि द्वित्वे 'अत आदेः ७।४।७०' इति अभ्यास-दीर्घे 'तस्मान्नुड् द्विहलः ७।४।७१' इति नुटि आनंहिरे।

वाच्य०—श्रुतरामवार्तैः आनंहे।

शिक्षा—आप्तोक्तं सत्यं भवति तत्र विश्वसनीयमिति ॥ ४६ ॥

सम्प्रति आकस्मिक-जनौघ-दर्शनेन युयुत्सुं सौमित्रिं वर्णयति—

**दृष्ट्वोर्णुवानान् ककुभो बलौघान्, वितत्य शार्ङ्गं कवचं पिनह्य।**
**तस्थौ सिसंग्रामयिषुः शितेषुः, सौमित्रिराक्षि-भ्रुवमुज्जिहानः ॥४७॥**

अन्वयः—ककुभः ऊर्णुवानान् बलौघान् दृष्ट्वा सिसंग्रामयिषुः शितेषुः सौमित्रिः कवचं पिनह्य शार्ङ्गं वितत्य अक्षिभ्रुवम् उज्जिहानः तस्थौ।

हिन्दी—दशों दिशाओंको आच्छादित करने वाली भारी सेनाको देखकर संग्राम करनेको तत्पर तीक्ष्ण तीरों वाले लक्ष्मणजी अपने धनुषपर मौर्वी चढ़ा, कवच पहन, भृकुटि खींच कर खडे हो गये।

व्याख्या—ककुभः दिशः, ऊर्णुवानान् व्याप्नुवतः, बलौधान् सैन्यसमूहान्, दृष्ट्वा वीक्ष्य, कवचं तनुत्राणं, पिनह्य परिधाय, शार्ङ्गं शृङ्गनिर्मितं धनुः वितत्य विस्तार्य, सिसंग्रामयिषुः युयुत्सुः, शितेषुः तीक्ष्णशरः, सौमित्रिः सुमित्राजः (लक्ष्मण), अक्षिभ्रुवम् नेत्र-चिल्लिकम् उज्जिहानः उन्निनीषुः, तस्थौ स्थितः (कोऽपि ससैन्यो योद्धुमायातीति भ्रमात्)। एकस्य लक्ष्मणस्यानेकक्रियायोगे दीपकम्।

समासः—शिता इषवो यस्य स शितेषुः। अक्षिणी च भ्रुवौ चेति द्वन्द्वे 'अचतुरविचतु० ५।४।७०' इति निपातनादक्षिभ्रुवम्।

कृदन्तः—अदादिस्थस्य ऊर्णुञ् आच्छादने इति धातोः ओहाङ् गतौ इति जुहोत्यादिस्थ हाधातोश्च लटः शानजादेशे शपो लुकि 'अचि श्नु० ६।३।७७' इति उवङि ऊर्णुवानान्, द्वित्वेऽभ्यासकार्ये आलोपे उज्जिहान इति। अपिनह्येत्यत्र 'वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः। धाञ्कृञोः स्तनिनह्योर्बहुलत्वेन शौनकिः' ॥ इति अलोपे, क्त्वो ल्यपि पिनह्य। तन् धातोः क्त्वो ल्यपि 'वा ल्यपि ६।४।३८'

इति विकल्पेन नलोपे तुगागमे वितत्येति। सग्राम युद्धे इति चौरादिक-धातोः सन्नन्तात् 'सनाशसभिक्ष उः ३।२।१६८ इति उ-प्रत्यये सिसंग्रामयिषुः।

तिङन्तः—स्थाधातोः लिटि 'शर्पूर्वाः खयः ७।४।६१' इति खयः शेषे 'आत औ णलः ७।१।३४' इति णल औकारे वृद्धौ तस्थौ।

वाच्य०—सौमित्रिणोज्जिहानेन तस्थे ॥४७॥

सम्प्रति धैर्य्येण कृतं रामानुमानं सत्यमाख्याति—

**शुक्लोत्तरासङ्ग-भृतो वि-शस्त्रान्, पादैः शनैरापततः स-मन्यून्।**
**औहिष्ट तान् वात-विरुद्धबुद्धीन् विवन्दिषून् दाशरथिः स्व-वर्ग्यान् ॥४८॥**

अन्वयः—दाशरथिः शुक्लोत्तरासङ्गभृतः विशस्त्रान् पादैः शनैः आपततः समन्यून् तान् वीतविरुद्धबुद्धीन् स्ववर्ग्यान् औहिष्ट।

हिन्दी—श्वेत उत्तरीयधारी, शस्त्र–रहित, शोक–सहित, पदयात्रा कर धीरे धीरे आनेवाले विपरीत बुद्धिसे शून्य, वन्दनेच्छु लोगोंको देखकर रामने भरतादि बन्धुओंके होनेकी कल्पना की।

व्याख्या—दाशरथिः रामः ( धैर्येण विवेचयन् ), शुक्लोत्तरासङ्गभृतः सितोत्तरीयधारिणः, विशस्त्रान् आयुधशून्यान्, पादैः चरणैः, शनैः मन्द मन्दम् आपततः आयातः, समन्यून् सशोकान् ( रुदत इत्यर्थः ) तान् भरतपौरान्, वीतविरुद्धबुद्धीन् अपास्तवैरभावान् विवन्दिषून् वन्दितुमिच्छून्, स्ववर्ग्यान् स्वबन्धून्, औहिष्ट वितर्कितवान् ( अहो इमे तु शोकार्ता रुदन्तः भरतप्रमुखाः पौराः सन्ति, नान्ये योद्धार इति अनुमिनोतिस्मेति यावत् )। अनुमानालङ्कारः।

कोश.—'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा'।
'मन्युर्दैन्ये क्रतौ क्रुधि'—इत्याद्यमरः।

समास.—शुक्लश्चासौ उत्तरासङ्ग शुक्लोत्तरासङ्ग., शुक्लोत्तरासङ्गं बिभ्रतीति विग्रहे सुप्युपपदे भृञ् भरणे इति धातोः क्विपि सर्वापहारिलोपे शुक्लोत्तरासङ्गभृत् शब्दः सिध्यति। विगतानि शस्त्राणि येभ्यः ते विशस्त्राः, तान्। मन्युना सह वर्तन्ते इति समन्यव. तान्। वीता विरुद्धा बुद्धिः येषां ते, तान्।

तद्धितः—दशरथस्यापत्य पुमान् दाशरथिः इत्यत्र 'अत इञ् ४।१।९५' इति इञि, आदि वृद्धौ। स्ववर्गे भवान् इत्यर्थे 'अशब्दे यत्खावन्यतरस्याम् ४।३।६४' इति यति 'यस्येति च ६।४।१४८' अलोपे स्ववर्ग्यान्।

कृदन्त:—वन्दितुमिच्छन्ति विवन्दिषन्ति, त एव विवन्दिषव:, तान्। वदि अभिवादनस्तुत्यो: इति भौवादिकस्य सन्नन्तात् इत्यत: 'सनाशंसभिक्ष उ: ३।२।१६८' इति उप्रत्यये विवन्दिषून्।

तिङन्त:—ऊह वितर्के इति भौवादिकस्य लुङि औहिष्ट।

वाच्य०—दाशरथिना शुक्लोत्तरासङ्गभृत: इत्यादि सर्वे द्वितीयान्ता: प्रथमान्ता औहिषत इति।

शिक्षा—'सुचिन्त्य चोक्तं सुविचार्य्यं यत्कृतम्' इत्यादि धैर्य्येण विचार्य्य कार्य्यं कार्य्यम् इति ॥ ४८ ॥

सम्प्रति बन्धुदर्शने शोकविवृद्धि सर्वेषामाख्याति—

**स-मूल-काषं चकषू रुदन्तो, रामाऽन्तिकं बृंहित-मन्यु-वेगा:।**
**आवेदयन्त: क्षिति-पालमुच्चै:कारं मृतं राम-वियोग-शोकात् ॥४९॥**

अन्वय:—रामान्तिकं बृंहितमन्युवेगा: रुदन्त: रामवियोगान्मृतं क्षिति-पालम् उच्चै:कारम् आवेदयन्त: समूलकाषं चकषु:।

हिन्दी—शोकाकुल भरतादि सभी लोगोंने राम लक्ष्मण जानकीके वियोगसे महाराज दशरथका स्वर्गवास हो गया, इस प्रकार जोर-जोर से रोदन करते हुए धरातल विलुण्ठित कर दिया। यानी उनके आर्तस्वरसे रामके आसपासकी शान्ति भंग हो गई।

व्याख्या—( एते भरतानुयायिन: ) रामान्तिकम् रामसमीपम् ( उपेत्य इति शेष: ), बृंहितमन्युवेगा: प्रवृद्धशोकप्रवाहा:, रुदन्त: विलपन्त:, रामवियोगात् रामचन्द्रविरहशुच:, मृतं निर्गतप्राणं, क्षितिपालं राजानम्, उच्चै:कारम् तार-स्वरम्, आवेदयन्त: कथयन्त:, समूलकाषम् समूलम् कषित्वा, चकषु: पिपिषु: (भुवमिति शेष:)। राजमृत्युकारणावेदनं रोदने हेतुरिति तदुल्लेखात् काव्यलिङ्गम्, मन्युवेगवृद्धौ बन्धुसान्निध्यमिति काव्यलिङ्गानुप्राणितं च।

कोश:—'वेग: प्रवाह-जवयो:' 'मन्यु: शोके क्रतौ क्रुधि'।

'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अभ्यमितोऽव्ययम्'—इत्याद्यमर:।

समास:—बृंहित: मन्योर्वेग: येषां ते। तत्पुरुषगर्भित-बहु० )। रामस्य वियोग:, तेन शोक: रामवियोगशोक:, तस्मात्। रामस्य अन्तिकम् रामान्तिकम्।

कृदन्त:—उच्चै: कृत्वा इति उच्चै:कारम् अत्र 'अव्ययेऽयथाभिप्रेताख्याने

कृञः क्त्वाणमुलौ ३।४।५९' इति णमुलि 'अचो ञ्णिति ७।२।११५' इति वृद्धिः।
क्षितिं पालयति इति विग्रहे 'कर्मण्यण् ३।२।१'। समूलं कषित्वा इति विग्रहे 'निमूलसमूलयोः कषः ३।४।३४' इति कषेर्णमुलि वृद्धौ समूलकाषम् इत्यतः 'कषादिषु यथाविध्यनुप्रयोग. ३।४।४६' इति कषेरनुप्रयोगो ज्ञेयः।

वाच्य०-एतै. बृंहितमन्युवेगै. रुदद्भिः आवेदयद्भिः समूलकाष चकषे।

शिक्षा—"स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते" इति स्मारयति ॥ ४९ ॥

सम्प्रति मृत प्रति बन्धुकृत्यमाख्याति—

**चिरं रुदित्वा करुणं स-शब्दं, गोत्राऽभिधायं सरितं समेत्य।**
**मध्ये-जलाद् राघव-लक्ष्मणाभ्यां, प्रत्तं जलं द्व्यञ्जलमन्तिकेऽपाम्॥५०॥**

अन्वय—राघवलक्ष्मणाभ्याम् चिरं सशब्द करुण रुदित्वा सरित समेत्य अपाम् अन्तिके मध्येजलात् द्व्यञ्जलं जलम् गोत्राभिधायम् प्रत्तम्।

हिन्दी—पिताके मरणकी बात सुनकर राम लक्ष्मण देर तक दीन-भावसे रोते रहे। फिर नदीकी तरफ जा जलमध्यमे प्रविष्ट हो उन्होने पिता-के नामका उच्चारणकर दो दो जलांजलिया दी।

व्याख्या—राघवलक्ष्मणाभ्याम् रामसौमित्रिभ्याम्, चिरम् चिराय (बहुकालं यावत्), सशब्द सध्वानम्, करुणम् दीनं, रुदित्वा विलप्य, सरित नदी, समेत्य सङ्गत्य (सम्भूय गत्वेत्यर्थः), अपा पयसाम्, अन्तिके समीपे, मध्येजलात् जलमध्यात् (आदाय), द्व्यञ्जलं अञ्जलिद्वय गृहीतम्, जलम् तोयम्, गोत्राभिधायम् नामगोत्रार्हम् प्रत्तम् दत्तम्। अनुप्रासच्छटया सहैव रामलक्ष्मणयोरने-कक्रिया-सम्बन्धाद् दीपकमर्थालङ्कारः।

कोशः—'गोत्रं नाम्नि कुलेऽचले'। 'चिरायचिररात्रायचिरस्याद्याश्चिरा-र्थकाः। चिरम् चिरेण चिरात् चिरे इति गृह्यन्ते' इत्याद्यमरः।

समासः—राघवश्च लक्ष्मणश्चेति तौ, ताभ्याम्। शब्दैः सह सशब्दम् (बहुव्रीहि.)। जलस्य मध्ये इति मध्येजलम्, तस्मात्। 'पारे मध्ये षष्ठ्या वा २।१।१८' इत्यव्ययीभावे 'नाव्ययीभावादतोऽम् त्वपञ्चम्याः २।४।८३' इति पञ्चमी-त्यागादम् न भवति। आदायेति 'ल्यब्लोपे कर्मण्यधिकरणे च' २।३।२८' इति वार्तिकबलात् पञ्चमी। द्वयोः अञ्जल्यो. समाहारः इति विग्रहे 'तद्धितार्थोत्तरपद-

समाहारे च २।१।५१' इति समासे, 'संख्यापूर्वो द्विगुः २।१।५२' इति द्विगु-संज्ञायाम् 'द्वित्रिभ्यामञ्जलेः५।४।१०२' इति टचि द्व्यञ्जलम् द्व्यञ्जलिगृहीतम्। जलमित्यस्य विशेषणम् ।

कृदन्तः—रुदिर् अश्रुविमोचने इति आदादिकस्य रुद् धातोः 'समान-कर्तृकयोः पूर्वकाले ( क्त्वा ) ३।४।२१' इति क्त्वाप्रत्यये 'रुदविदमुषग्रहि-स्वपिप्रच्छः संश्च १।२।८' इति नित्ये कित्वे, गुणाभावे रुदित्वा। गोत्रम् अभिधाय इति विग्रहे 'द्वितीयायाँ च ३।४।५३ इति णमुल्प्रत्यये, युगागमे गोत्राभिधायम् । प्रत्तम् 'प्रपूर्वकात् दाधातोः क्ते कर्मणि 'अच उपसर्गात्तः ७।४।४७' इति तादेशे प्रत्तम् ।

वाच्य०—रामलक्ष्मणौ जलं प्रत्तवन्तौ प्रादाताम् वा ।

शिक्षा—मृतानां श्रद्धयौर्ध्वदैहिकं कृत्यं कार्य्यमिति शिक्षयति ॥ ५० ॥

स प्रति समागतं भरतं रामः सयुक्ति अनुनयति—

**अरण्य-याने सुकरे पिता मां, प्रायुङ्क्त राज्ये बत दुष्-करे त्वाम् ।**
**मा गाःशुचं धीर ! भरं वहाऽमुम्, आभाषि रामेण वचः कनीयान् ॥५१॥**

अन्वयः-पिता सुकरे अरण्ययाने मां बत ! दुष्करे राज्ये त्वां प्रायुङ्क्त । हे वीर ! शुचं मा गाः, अमुम् भरं वह—इति रामेण कनीयान् वचः अभाषि ।

हिन्दी—हे धीर गंभीर भाई भरत ! यह अत्यन्त दुःखकी बात है कि पिताजीने मुझे सरल वनवास तथा तुम्हें दुष्कर राज्यभार वहन करनेकी आज्ञा दी । खैर, अब शोक-मुक्त होकर इस भारका निर्वाह करो—इस तरह रामने भरत को समझाया ।

व्याख्या-—पिता जनकः, सुकरे सुखसाध्ये, अरण्ययाने वनवासे, मां रामं, बत खेदे, दुष्करे कष्टसाध्ये, राज्ये राज्यकर्मणि, त्वां भवन्तं प्रायुङ्क्त न्ययुजत् । हे धीर ! धैर्य्यशालिन्, शुचम् शोकम्, मा नैव, गाः, अगमः, अमुम् पितृदत्तम्, भरम् राज्यभारम्, वह धारय, इति इत्थम्, वचः वचनम्, रामेण राघवेण ( ज्यायसा ), कनीयान् अनुजः ( भरतः ), अभाषि अवादि । चातुर्यतो विकल्पालङ्कारः ।

कोशः—'मन्युः शोके तु शुक् स्त्रियाम्' ।

'व्याहार उक्तिर्लपितं भाषितं वचनं वचः'—इत्याद्यमरः ।

तद्धितः—द्वयोः अतिशयेन अल्पो युवा वेति कनीयान् इति विग्रहे 'द्विवचन-

विभज्योपपदे तरबीयसुनौ ५।३।५७' इति ईयसुनि 'युवाल्पयोः कनन्यतर-स्याम् ५।३।६४' इति कनादेशे रूपम्।

कृदन्तः— भरणम्, भरः इत्यर्थे 'ऋदोरप् ३।३।५७' अप्। सुकरम् दुष्करम्, इत्युभयत्रापि 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ३।३।१२६' इति खल्।

तिङन्तः— प्रपूर्वकस्य युजे रौधादिकस्य लङि श्नमि कुत्वे प्रायुङ्क्तेति। भावे: कर्मणि णिचि। इणो गादेशे लुङि 'गातिस्था० २।४।७७ इति सिचो लुकि मा योगेगाः।

वाच्य०— पित्रा अहं प्रायुज्ये, त्वं प्रायुज्यथाः इति क्रमशः त्वया शुक् मा गायि, असौ भर उह्यताम्। रामः कनीयांसं वचः अभाषिष्ट।

शिक्षा— पुत्रैः पितुराज्ञा सर्वथा पाल्येति शिक्षयति ॥ ५१ ॥

सम्प्रति तदेव भरत-कृत्यं सयुक्ति साधयति रामः—

**कृती श्रुती वृद्ध-मतेषु धीमांस् त्वं पैतृकं चेद् वचनं न कुर्याः।**
**विच्छिद्यमानेऽपि कुले परस्य, पुंसः कथं स्यादिह पुत्र-काम्या ॥५२॥**

अन्वयः— वृद्धमतेषु कृती श्रुती धीमान् त्वं पैतृकं वचनं न कुर्य्याः चेत् इह कुले विच्छिद्यमाने अपि परस्य पुंसः पुत्रकाम्या कथं स्यात् (न स्यादिति काकुः)।

हिन्दी— वृद्ध, विद्वानोंसे सम्मत शिष्टाचारमे कृती श्रुती तुम जैसे बुद्धिमान् व्यक्ति भी यदि पिताकी आज्ञाका पालन न करेंगे तो इस संसारमें खानदान-का नाश होते देखकर भी कोई पुरुष पुत्र-प्राप्तिकी इच्छा क्यों ही करेगा?

व्याख्या— वृद्धमतेषु विद्वत्सम्मतिषु (शिष्टाचारेषु इत्यर्थः), कृती अनुष्ठाता, श्रुती श्रुतसम्पन्नः, धीमान् प्रतिभावान्, त्वम् भरतः, पैतृकं पितृसम्बन्धि, वचनम् आदेशम्, न नहि, कुर्य्याः प्रतिपालयेः, चेत् यदि, (तदा) इह अस्मिन् लोके, कुले वंशे, उच्छिद्यमाने विलीयमाने, अपि ध्रुवम्, परस्य अन्यस्य, पुंसः पुरुषस्य, पुत्रकाम्या सुतैषणा, कथं केन प्रकारेण, स्यात् भवेत् (विदुषा सर्वथा योग्येनापि भरतेन पित्राज्ञोल्लङ्घिता चेत्का कथाऽन्यपुत्राणामिति कोऽपि पुत्रकाम्या न कुर्य्यादिति काकुः)। काव्यलिङ्गालङ्कारः।

कोशः— 'बुध-वृद्धौ पण्डितेऽपि'।

'सन्ततिर्गोत्र-जननकुलान्यभिजनान्वयौ' 'वंशोऽन्ववायः सन्तान':।

'वर्णाः स्युर्ब्राह्मणादयः'— इत्याद्यमरः।

तद्धित:—कृतमनेन श्रुतमनेन इत्यर्थे 'इष्टादिभ्यश्च ५।२।८८' इति इनिः। 'क्तस्येन्विषयस्य कर्मणि उपसंख्यानम् २।३।३६' इति वार्तिकबलात् वृद्धमतेषु इत्यत्र सप्तमी। प्रशस्तेऽर्थे मतुप् धीमान्। पितुः इदम् इति पैतृकम्। 'पितुर्यच्च ४।३।७९' इति चात् ठञि, तस्य 'इसुसुक्तान्तात् कः ७।३।५१' इति ककारे, आदिवृद्धौ, पैतृकम्।

कृदन्त:—विच्छिद्यते इति विच्छिद्यमानम्, तस्मिन्, विपूर्वकात् छिद धातोः कर्मणि लटि, तस्य शानचि, भावकर्मणोः इत्यनुवर्तमाने 'सार्वधातुके यक् ३।१। ६७' इति यकि, विकरणे, 'आने मुक् ७।२।८२' इति मुगागमे विच्छिद्यमाने। पुत्रमात्मन इच्छतीत्यर्थे 'काम्यच्च ३।१।९' इति काम्यच् प्रत्यये पुत्रकाम्यधातोः 'अ प्रत्ययात् ३।३।१०२' इति अप्रत्यये टापि पुत्रकाम्या।

तिङन्त:—डुकृञ् करणे इति तनादिस्थ कृधातोः विधौ लिङि, तस्य 'तनादिकृञ्भ्य उः ३।१।७९' इति उविकरणे, गुणे, करु इत्यत्र 'यासुट् परस्मैपदेषूदात्तो ङिच्च ३।४।१०३' इति यासुडागमे 'अत उत्सार्वधातुके ६।४।११०' इति करोतेः अकारस्योकारे 'ये च ६।४।१०९' इति उकारलोपे कुर्याः।

वाच्य०- कृतिना श्रुतिना धीमता त्वया पैतृकं वचनं न क्रियेत चेत् कथं पुत्रकाम्यया भूयते।

शिक्षा—पुत्राणां पितुराज्ञापालनमेवान्यथापि समर्थयति ॥ ५२ ॥

सम्प्रति स्वोक्ताभिप्रायमेवोपसंहरति—

**अस्माकमुक्तं बहु मन्यसे चेद् यदीशिषे त्वं न मयि स्थिते च।**
**जिह्रेष्य-तिष्ठन् यदि तात-वाक्ये जहीहि शङ्कां व्रज शाधि पृथ्वीम् ॥५३॥**

अन्वय:—त्वम् अस्माकम् उक्तम् बहु मन्यसे चेत्, मयि स्थिते यदि न ईशिषे, तातवाक्ये अतिष्ठन् यदि जिह्रेषि. ( तर्हि ) शङ्कां जहि, व्रज, पृथ्वीं शाधि।

हिन्दी - हे भरत ! यदि तुम मेरे कथनका आदर करते हो एवं मेरे रहते हुए अपने आपको स्वतन्त्र नहीं मानते और पिताकी आज्ञाका पालन न करनेमें भी लज्जानुभूति करते हो तो संदेह छोड़ो, जाओ, अयोध्या लौटकर कौशलका शासन करो।

व्याख्या—हे भरत ! त्वम् भवान्, अस्माकम् अस्माभिः उक्तम् कथितं, बहु आदृतं मन्यसे स्वीकरोषि चेत्, मयि ज्येष्ठभ्रातरि स्थिते विद्यमाने, त्वं

भवान्, यदि न ईशिषे न समर्थो भवसि ( ज्येष्ठभ्राता पितृसम इति मन्यसे चेत् ) (यदा हि) तात-वाक्ये जनक-वचने, अतिष्ठन् अस्थिरः, यदि जिह्रेषि लज्जसे तर्हि शङ्कां सन्देहं, जहि त्यज, व्रज गच्छ, पृथ्वीम् अवनीम् शाधि पालय। सहेतुको नियोगः, इति स्फुटं काव्यलिङ्गम् ।

कोशः--'तातस्तु जनकः पिता' ।

'गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही'—इत्याद्यमरः ।

तिङन्तः—ईश ऐश्वर्ये इति आदादिकस्य 'ईषः से ७।२।७७' इति इडागमे, षत्वे, ईशिषे । ह्रीङ् लज्जायाम् इति जुहोत्यादि—धातोः 'श्लौ ६।१।१०' इति द्वित्वेऽभ्यासकार्य्ये जिह्रेषि । जहीहि ओहाक् त्यागे इति जुहोत्यादि-स्थस्यैव हा धातोः लोटि द्वित्वेऽभ्यासकार्य्ये 'जहातेश्च ६।४।११६' इति इत्वे विकल्पिते 'ई हल्यघोः ६।४।११३' इति ईत्वे रूपम् । शासु अनुशिष्टौ इति आदादिकस्य 'शा हौ ६।४।३५' इति शादेशे आभीयत्वेन तस्यासिद्धत्वात् 'हुझल्भ्यो हेर्धिः ६।४।१०१' इति हेर्धौ शाधि ।

वाच्य०—त्वया उक्तं बहु मन्यते, न ईश्यते, अतिष्ठता ह्रीयते, शङ्का हीयताम्, व्रज्यताम्, पृथ्वी शिष्यताम् ।

शिक्षा—ज्येष्ठभ्रातुः पितुश्चादेशः सर्वथा प्रतिपाल्य एवेति शिक्षोदेति ।।५३।।

सम्प्रति तदनुरूपमेव भरतोत्तरमाख्याति—

**वृद्धौरसां राज्य-धुरां प्रवोढुं, कथं कनीयानहमुत्सहेय ।**
**मा मां प्रयुक्थाः कुल-कीर्ति-लोपे, प्राह स्म रामं भरतोऽपि धर्म्यम् ।।५४।।**

**अन्वयः**—वृद्धौरसां राज्यधुरां प्रवोढुं कनीयान् अहं कथम् उत्सहेय ( अतः ) कुलकीर्तिलोपे मां मा प्रयुक्था इति भरतः रामं धर्म्यं वचः प्राहस्म ।

**हिन्दी**—जहां बड़ा भाई विद्यमान हो, वहां मुझ जैसा छोटा भाई राज्य-भार वहन करनेमें कैसे उत्साहित हो ? भरतने धर्मोचित निवेदन किया कि मुझे इस कुलकीर्ति-लोपक कार्यमें प्रवृत्त न करें ।

**व्याख्या**-वृद्धौरसां ज्येष्ठात्मजां, राज्यधुरां शासनभारम्, प्रवोढुं धारयितुम्, कनीयान् अनुजः, अहम् भरतः, कथम् केन प्रकारेण, उत्सहेय उद्यतो भवेयम् । ( अतः ) कुलकीर्तिलोपे वंशयशोमर्यादाविनाशके ( अस्मिन् कर्मणि ), माम्

कनीयांसम्, मा नहि प्रयुक्था न्ययुजः, इति इत्थम् भरतः तदनुजः अपि, धर्म्यं न्याय्यं ( वचः ), प्राह ब्रवीतिस्म । काव्यलिङ्गम् ।

**कोश:**—'यशः कीर्तिः समज्ञा च स्तवः स्तोत्रं स्तुतिर्नुतिः'—इत्यमरः ।
'धूर्यानमुखभारयोः' ( इति हेमः ) ।

**समासः**—वृद्धः औरसः यस्याम् सा वृद्धौरसा, ताम् । कुलस्य कीर्तिः कुलकीर्तिः, तस्याःलोपो यस्मात् कुलकीर्तिलोपम् कर्म तस्मिन् । राज्यस्य धू राज्य-धुरा 'ऋक्पूर० ५।४।७४' इति अप्रत्यये टापि राज्यधुरा, ताम् ।

**तद्धितः**—उरसा निर्मितः इति विग्रहे, 'उरसोऽण् च ४।४।९४' इत्यणि 'तद्धितेष्वचामादेः ७।२।११७' इति आदिवृद्धौ औरसः । धर्मादनपेतम् इति विग्रहे 'धर्मपथ्यर्थन्यायादनपेते ४।४।९२' इति यति धर्म्यम् ।

**कृदन्तः**—धुर्वी हिंसायाम् इति धुर्व् धातोः 'भ्राजभासधुर्वि० ३।२।१७७' इति क्विपि, क्विपः सर्वापहारिलोपे 'राल्लोपः ६।४।२१' इति वलोपे धूर्शब्दः स्त्रीलिङ्गः । उत्सहेय-योगे प्रपूर्वाद् वह धातोः 'शकधृषज्ञाग्लाघटरभलभक्रम-सहार्हास्त्यर्थेषु तुमुन् ३।४।६५' इति तुमुनि, 'हो ढः ८।२।३१' इति हस्य ढत्वे 'झषस्तथोर्धोऽधः ८।२।४०' इति तस्य धत्वे, ष्टुत्वेन धकारस्य ढकारे, 'ढो ढे लोपः ८।३।१३' इति ढलोपे, 'सहिवहोरोदवर्णस्य ६।३।११२' इत्यकारस्य ओकारे प्रवोढुम् ।

**तिङन्तः**—उत्पूर्वात् सह धातोर्लिङि, इटोऽति, 'लिङः सीयुट् ३।४।१०२' इति सीयुडागमे, 'लिङः सलोपोऽनन्त्यस्य ७।२।७९' इति सलोपे उत्सहेय । प्रपूर्वात् युज् धातोः 'माङि लुङ् ३।३।१७५' इति लुङि, 'झलो झलि ८।२।२६' इति सस्य लोपे 'चोः कुः ८।२।३' इति जस्य गकारे, 'खरि च ८।४।५५' इति गस्य ककारे, प्रयुक्थाः । प्रपूर्वाद् ब्रूधातोः स्मयोगे लट्स्मे ३।२।११८' इति लटि 'ब्रुवः पञ्चानामादित आहो ब्रुवः ३।४।८४' इति तिपः णलादेशे, ब्रुवश्चाहादेशे, आहेत्यनेनोपसर्गदीर्घे प्राहस्मेति साधुः ।

**वाच्य०**—कनीयसा मया कथमुत्सह्येत, अहं मा प्रयुक्षि, इति भरतेनापि रामः धर्म्यं प्रोच्यते स्म ।

**शिक्षा**—'भ्रातृत्वे भरतादर्शो दुर्लभो जगतीतले' इति सडिण्डिमं घोषयति पद्यम् ॥ ५४ ॥

सम्प्रति भरतो हि स्वस्य राज्याग्रहणे चरमकोटि-युक्तिमाख्याति—

**ऊर्जस्-वलं हस्ति-तुरङ्गमेतद्, अमूनि रत्नानि च राज-भाञ्जि।**
**राजन्यकं चैतदहं क्षितीन्द्रस्, त्वयि स्थिते स्यामिति शान्तमेतत् ॥५५॥**

अन्वयः—एतत् ऊर्जस्वलं हस्तितुरङ्गम्, अमूनि राजभाञ्जि रत्नानि, एतत् राजन्यकम् च त्वयि स्थिते अहं क्षितीन्द्रः स्याम् इति एतत् शान्तम् पापम् ( हस्तनिर्देशं वाक्यम् )।

हिन्दी—'आप जैसे श्रेष्ठ भाईके रहते, मैं, ये बलिष्ठ हाथी-घोड़े, राज-भोग्य हीरे, मोती और राजसमूहको स्वीकार कर राजा बनूँ—यह सोचना भी पाप है।' हस्त—निर्देशन पूर्वक अत्यन्त वेदनाके साथ 'शान्तं पापम्, शान्तं पापम्' कहते हुए भरत वहां बैठ गये।

व्याख्या—( हस्तनिर्देशं भरत आख्याति यत् अयि भ्रातः! ) एतत् अग्रे-स्थितम्, ऊर्जस्वलम् बलशालि, हस्तितुरङ्गम् गजाश्वम्, अमूनि अयोध्यास्थितानि, राजभाञ्जि नृपयोग्यानि, रत्नानि हीरकादीनि अनर्घाणि वस्तुजातानि, एतत् पुरोवर्ति राजन्यकम् नृपवृन्दम्, त्वयि परमयोग्ये, रामचन्द्रे राजनि, स्थिते विद्यमाने, अहम् भरतस्तवानुजो भ्राता, क्षितीन्द्रः सम्राट्, स्याम् भवेयम्, इति इत्थम् एतत् सर्वं शान्तम् पापम् शान्तम् पापम् नैवं वद, नैवं वद, इति भरतस्य चरमं वाक्यम्। काव्यलिङ्गम् असङ्गतिश्चेति सङ्करस्तयोः।

कोशः—'घोटके पीतितुरगतुरङ्गाश्वतुरङ्गमाः।
'दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः'—इत्याद्यमरः।

समासः—हस्तिनश्च तुरङ्गाश्च हस्तितुरङ्गम्, 'द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गानाम् २।४।२' इत्येकवद्भावे रूपम्। क्षितेरिन्द्रः क्षितीन्द्रः। राजानं भजन्ते इति 'भजो ण्विः ३।२।६२' उपपदसमासः।

तद्धितः—ऊर्जस्वलम्,—ऊर्क् अस्ति यस्येति विग्रहे 'ज्योत्स्नातमिस्रा० ५।२।११४' इति असुगागमो वलच् प्रत्ययश्च निपात्यते। राजन्यकम् इति द्वितीयसर्गे ४९ पद्ये। सर्वं साधितम्।

तिङन्तः—अस् भुवि इति आदादिकस्य विध्याद्यर्थे लिङि 'यासुट् परस्मैपदेषूदात्तो ङिच्च ३।४।१०३' इति यासुडागमेऽनुबन्धलोपे 'श्नसोरल्लोपः ६।४।१११' इति अल्लोपे स्याम् इति।

वाच्य०—एतेन ऊर्जस्वलेन हस्तितुरङ्गेण भूयते, अमीभिः राजमार्गिभिः रत्नैः भूयते, एतेन राजन्यकेन भूयते, मया क्षितीन्द्रेण भूयेत, इत्येतेन शान्तेन भूयताम्।

शिक्षा—भरतो डिण्डिमघोषं भारतीय-संस्कृतिं शिक्षयति सर्वान् यत् ज्येष्ठे भ्रातरि पितृवदेव व्यवहर्तव्यम् ॥ ५५ ॥

इदानीं रामचन्द्रो भरतयुक्त्या निरुत्तरो भूत्वा केवलं स्वविशेषाधिकारं प्रयुज्य राज्यशासने तमाबध्नाति—

**इति निगदितवन्तं राघवस् तं जगाद,**
**व्रज भरत ! गृहीत्वा पादुके त्वं मदीये।**
**च्युत-निखिल-विशङ्कः पूज्यमानो जनौघैः,**
**सकल-भुवनराज्यं कारयाऽस्मन्-मतेन ॥ ५६ ॥**

अन्वयः—इति निगदितवन्तं तम् राघवः ( निरुत्तरो विशेषाधिकारं स्वीयं प्रयुञ्जानः ) जगाद–हे भरत ! ( अलमग्रे न वद ) त्वं मदीये पादुके गृहीत्वा व्रज, च्युतनिखिलविशङ्कः जनौघैः पूज्यमानः अस्मन्मतेन स कल-भुवनराज्यं कारय ( इत्यनुल्लङ्घ्यो मे आदेश इत्यलम् )।

हिन्दी—यों युक्ति–युक्त बात कहने वाले भरतसे रामचन्द्रने कहा—'हे भाई भरत ! मेरी पादुका लेकर अयोध्या लौटो और मेरी सम्मतिसे सारे संदेह मिटाकर प्रजाके आदर-पात्र बनते हुए समूची पृथ्वी पर शासन करो। जाओ, यह मेरा आदेश है—इसका पालन करो।

व्याख्या—इति इत्थं सयुक्ति धर्म्यम्, निगदितवन्तं कथितवन्तं, तं भरतम्, ( निरुत्तरः स्वविशेषाधिकारमात्र-शरणः ) राघवः रामचन्द्रः, जगाद उवाच—हे भरत ! त्वम् भवान्, मदीये रामस्य पादुके चरणत्राणे, गृहीत्वा आदाय, व्रज अयोध्यां निवर्तस्व ( स्वसत्याग्रहं त्यज ), च्युतनिखिलविशङ्कः अपास्तसर्व-सन्देहः, जनौघैः लोकसङ्घैः, पूज्यमानः अभिनन्द्यमानः, अस्मन्मतेन रामानुमत्या, सकलभुवनराज्यं सर्वलोकाधिपत्यं, कारय सम्पादय ( इत्यलम् अग्रे न वद ) विशेषाधिकारोऽयम्। युक्तिस्तु ते साधीयसी इत्यहं स्वीकरोमि। किन्तु पितुरादेशस्यानुल्लङ्घनीयतया अयमेव मध्यममार्गः साधीयानिति रामाभिप्रायः। काव्यलिङ्गमलङ्कारः।

कोशः—'त्रिष्वथो जगती लोको विष्टपं भुवनं जगत् ।'
'विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम्'—इत्याद्यमरः ।

समासः—च्युता निखिला विशङ्का यस्य सः (बहु० । अस्माकं मतम् अस्मन्मतम् । सकलानि च तानि भुवनानि सकलभुवनानि, तेषां राज्यम् सकलभुवनराज्यम् ।

तद्धितः—मम इमे मदीये । अस्मच्छब्दात् 'त्यदादीनि च १।१।७४' इति त्यदादित्वादस्मदो वृद्धत्वाद् 'वृद्धाच्छः ४।२।११४' इति छ प्रत्यये 'प्रत्ययोत्तरपदयोश्च ७।२।९८' इति मदादेशे, द्विवचने मदीये । राज्ञः कर्म राज्यम् ।

कृदन्तः—पूज् धातोः कर्मणि लटि, तस्य शानजादेशे, 'सार्वधातुके यक् ३।१।६७' इति यकि, 'आने मुक् ७।२।८२' इति मुगागमे पूज्यमानः ।

तिङन्तः—व्रजेति हौ 'अतो हेः ६।४।१०५ इति हेर्लुकि रूपम् । कृधातोः "हेतुमति च ३।१।२६ इति णिचि, 'अचो ञ्णिति ७।२।११५' इति वृद्धौ कारीत्यतो विध्यादौ लोटि हेर्लुकि कारयेति ।

वाच्य०—राघवेण इति निगदितवान् स जगदे, त्वया व्रज्यताम्, च्युतनिखिलविशङ्केन पूज्यमानेन सकलभुवनराज्यं कार्य्यताम् ।

शिक्षा—ज्येष्ठभ्रातापि पितृवदलङ्घ्याज्ञ इत्येव शिक्षयति पद्यम् । अविरतं सर्गान्ते मालिनीछन्दःप्रयोगेन भट्टिकाव्याध्ययनमभ्युदयप्रदमिति कविरहस्योपदेशः ॥ ५६ ॥

**इति श्री रावणवधाभिधे भट्टिमहाकाव्ये**
**प्रकीर्णकाण्डे रामवनप्रयाणे भरतप्रत्यावर्तन-प्रयासविफले**
**चरण-पादुका-दाननामा तृतीयः सर्गः**

# अथ चतुर्थः सर्गः

इह चतुर्थे सर्गे प्रकीर्ण-काण्डे रावणवध-बीजं सूर्पणखा-नासिकाकर्णच्छेदं दिदर्शयिषुस्तदुपक्रमं रामस्य दण्डकारण्य-प्रवेशमाख्याति—

**निवृत्ते भरते धी-मानत्रे रामस् तपो-वनम् ।**
**प्रपेदे, पूजितस् तस्मिन् दण्डकारण्यमीयिवान् ॥ १ ॥**

**अन्वयः**—भरते निवृत्ते ( सति ) धीमान् रामः अत्रेः तपोवनं प्रपेदे । तस्मिन् पूजितः दण्डकारण्यम् ईयिवान् ।

**हिन्दी**—भरतके लौट जानेपर बुद्धिमान् रामचन्द्र अत्रि मुनिके तपोवनमें गये । वहाँ सत्कार पाकर दण्डकारण्यकी ओर प्रस्थान कर दिया ।

**व्याख्या**—भरते स्वानुजे, निवृत्ते अयोध्यां परावृत्ते, धीमान् बुद्धिमान् ( पौराः पुनरत्रागच्छेयुरत इतोऽन्यत्र गमनं वरमिति हि बुद्धिवलत्वम् ), रामः राघवः, अत्रेः अत्रिमुनेः, तपोवनम् आश्रमम, प्रपेदे प्राप । तस्मिन् तत्र आश्रमे, पूजितः सत्कृतः, दण्डकारण्यम् जनस्थानम्, ईयिवान् गतवान् । पद्यापर-पर्य्याय पथ्या-वक्त्रं छन्दः । 'युयोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम्' । ( अनुष्टुब्भेदोऽयम् ) । रामस्यानेकक्रियायोगाद्दीपकम् ।

**कोशः**—'धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः'—इत्याद्यमरः ।

**समासः**—दण्डकस्य ( तन्नाम्नो राज्ञः ) अरण्यम् दण्डकारण्यम् (तत्पुरुषः) । दण्डको नाम राजा भार्गव-कन्यां जहार । ततो भार्गवशापः सराष्ट्रबान्धवो विनष्टः । इति तन्नाम्नैव तत्स्थलमरण्ये परिणतं ख्यातमभूदिति पौराणिकमाख्यानम् ।

**कृदन्तः**—'उपेयिवाननाश्वाननूचानश्च ३।२।१०९' इत्यत्र सोपसर्गस्यातन्त्रत्वात् केवलादपि इणः क्वसौ, द्वित्वादौ ईयिवान् इति ।

**तद्धितः**—प्रशस्ता धीर्यस्येति विग्रहे मतुपि धीमान् ।

**वाच्य०**—धीमता रामेण तपोवनं प्रपेदे । दण्डकारण्यम् ईये ।

**शिक्षा**—विवेकेनैव लौकिकं कार्यं साध्यम्, स्वस्थानमागताः सत्कर्तव्याः इत्युभयं शिक्षयति ॥ १ ॥

वने बाभ्रम्यमाणस्य रामस्य विराधकर्तृकहरणमाख्याति—

**अटाट्यमानोऽरण्यानीं स-सीतः सह-लक्ष्मणः ।**
**बलात् बुभुक्षुणोत्क्षिप्य जह्रे भीमेन रक्षसा ॥ २ ॥**

अन्वयः—ससीतः सहलक्ष्मणः अरण्यानीम् अटाट्यमानः ( राम. ) बुभुक्षुणा भीमेन रक्षसा बलात् उत्क्षिप्य जह्रे ।

हिन्दी—सीता और लक्ष्मणके साथ भयकर वनमे घूमने वाले रामको भूखसे उत्पीडित एक भयानक राक्षस जबरदस्ती उठा ले गया ।

व्याख्या—ससीत सीतासहित', सहलक्ष्मण. लक्ष्मणसमेतः, अरण्यानी महारण्यम्, अटाट्यमान बाभ्रम्यमाण (राम ), बुभुक्षुणा क्षुधितेन, भीमेन घोरेण, रक्षसा निशाचरेण, बलात् हठात्, उत्क्षिप्य उत्थाप्य, जह्रे अपोहे । ससहोक्तिः हरणे बुभुक्षाहेतुरिति काव्यलिङ्गम् ।

कोशः—'महारण्यमरण्यानी' इत्यमरः ।

समासः—सीतया सह वर्तते इत्यर्थे समासे सहस्य सादेश. । एव सहलक्ष्मण इत्यत्रापि विकल्पान्न सभाव. ।

कृदन्त —महदरण्यम् इत्यर्थे 'इन्द्रवरुण० ४।१।४९' इति सानुकि ङीषि अरण्यानीति । 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्य ३।१।२२' इति वार्तिकबलाद् यङि द्वित्वादौ अटाट्येत्यस्य धातुत्वाद् लट शानजादेशे 'आने मुक् ७।४।८२' इति मुगागमे अटाट्यमानः इति । भुज् धातो सनि द्वित्वादौ उप्रत्यये बुभुक्षुणा । सीतामातुरहरणेऽपि रामे तदारोपो ज्ञेय. इति ।

तिङन्तः—हृञ् धातोर्लिटि ( कर्मणि ) द्वित्वादौ यणि जह्रे ।

वाच्य०—अटाटयमानम् ससीतम् सहलक्ष्मणम् बुभुक्षु भोम रक्षो जहार ।

शिक्षा—प्रबलो मृत्यु प्राणिन हठात् तत्र नयति यत्र स सफलित. स्यादिति॥१२॥

विराधस्वरूपं वर्णयन् रामकर्तृकं तद्वधमाख्याति—

अवाक्-शिरसमुत्पादं कृता-न्तेना ऽपि दुर्-दमम् ।
भङ्क्त्वा भुजौ विराधाऽऽख्यं त तौ भुवि निचखनतुः[१] ॥ ३ ॥

---

१ तुम्बुरु-नामा गन्धर्वो वैश्रवणशापात् राक्षसयोनौ समुत्पन्नोऽभूत् । स एवायं विराधनामा राक्षसः रामेण बाहुकर्त हतोऽवटे च निखात. । गन्धर्वो भूत्वा स्वर्लोक गत. ।

'अवटे ये निधीयन्ते तेषा लोका सनातनाः' इति वाल्मीकीये एतस्यैव राक्षसस्य कृते लिखितं विद्यते। इत्यनेनानुमीयते यदत्र भारते पूर्वमपि अवटशायिनी जातिर्वसतिस्म यथाऽधुना यवनखोष्टाः सन्तीति ।

अन्वयः—तौ अवाक्शिरसम् उत्पादम् कृतान्तेन अपि दुर्दमम् विराधाख्यं तं भुजौ भङ्क्त्वा भुवि निचख्नतु. ।

हिन्दी—नीचे शिर, ऊपर पैर, बाहुबलसे चलने वाले यमराजसे भी दुर्दम विराध नामक राक्षसकी भुजाएँ आदि काटकर राम लक्ष्मणने जमीनमे गाड दिया ।

व्याख्या—तौ रामलक्ष्मणौ, अवाक्शिरसम् अधोमस्तकम्, उत्पादम् ऊर्ध्वाङ्घ्रिम्, कृतान्तेन यमेन अपि यथार्थतः दुर्दमम् कष्टदण्डम्, विराधाख्य विराध-संज्ञकं, त प्रसिद्धम् राक्षसम्, भुजौ बाहू, भङ्क्त्वा कर्तित्वा, भुवि अवटे, निचख्नतुः निदधतुः । अमृत्युनो रक्षसो मृत्युरिति विरोधाभासः ।

कोशः—'कृतान्तो यमुनाभ्राता शमनो यमराड् यम ' इत्याद्यमर ।

समासः—अवाक् शिरो यस्य सः अवाक्शिरा. । उद् ऊर्ध्वे पादौ यस्य स उत्पादः। कृत. अन्तः येन स कृतान्त', तेन। विराधः आख्या यस्य स विराधाख्य । 'गोस्त्रियोरुपसर्जनस्य १।२।४८' इति ह्रस्व ।

तिङन्तः—खनु अवदारणे इति भौवादिकधातोर्लिटि द्वित्वेऽभ्यासकार्ये 'गम-हन-जन-खन-घसा लोप. क्ङित्यनङि ६।४।९८' इत्युपधालोपे निचख्नतुः ।

वाच्य०—ताभ्याम् अवाक्शिरा उत्पादः विराधाख्यः स निचख्ने ।

शिक्षा—कृतान्तदुर्दमोऽपि निधनङ्गत.—इति पूर्वोक्तमेव मृत्योः प्राबल्य-मुपदिशति पद्यम् ॥ ३ ॥

ततो रघूत्तमयोः शरभङ्गाश्रम-प्रयाणमाह—

**आहिषातां रघु-व्याघ्रौ शरभङ्गाऽऽश्रमं तत ।**
**अध्यासित श्रिया ब्राह्म्या शरण्यं शरणैषिणाम् ॥ ४ ॥**

अन्वयः—तत. रघुव्याघ्रौ ब्राह्म्या श्रिया अध्यासितम् शरणैषिणा शरण्यम् शरभङ्गाश्रमम् आहिषाताम् ।

हिन्दी—विराध-वधोपरान्त रघुकुल-तिलक राम लक्ष्मण ब्राह्मणोकी उचित शोभासे सपन्न ब्रह्मज्ञानी अशरणको शरण देनेवाले शरभङ्ग ऋषिके आश्रमको गये ।

व्याख्या—ततो विराधवधानन्तरम्, रघुव्याघ्रौ इक्ष्वाकुवशश्रेष्ठौ ( राम-लक्ष्मणौ ), ब्राह्म्या विप्रसम्बन्धिन्या, श्रिया शोभया, अध्यासितम् अधिष्ठितम्,

शरणैषिणाम् शरणार्थिनाम् शरण्यम् त्राणदम्, शरभङ्गाश्रमम् शरभङ्ग-मुनिनिवासम्, आंहिषाताम् अगमताम् । उदात्तालङ्कारः ।

**कोशः**— 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः'—इत्यमरः ।

**समासः**—रघुषु व्याघ्रौ इति रघुव्याघ्रौ (सप्तमी-तत्पु०) । शरभङ्गस्य आश्रमः शरभङ्गाश्रमः, तम् ।

तद्धितः—ब्रह्मण इयम् इत्यर्थे 'तस्येदम् ४।३।१२०' इत्यणि 'ब्राह्मोऽजातौ ६।४।१७१' इति निपातनाट्टिलोपे 'टिड्ढाणञ्० ४।१।१५' इति ङीपि ब्राह्मी, तया । शरणे साधुः शरण्यम् । 'तत्र साधुः ४।४।९८' इति यति भत्वादलोपे सिद्धिः ।

कृदन्तः—शरणम् इच्छन्ति इत्यर्थे इष इच्छायाम् इति तौदादिकाद् इषेः 'सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८' इति णिनि, 'उपपदमतिङ् २।२।१९' इति समासे विभक्तेर्लुकि शरणैषिन् इति शब्दसिद्धिः ।

तिङन्तः—अहि गतौ इति भौवादिकस्य नुमि अंह इत्यतो लुङि 'आर्द्धधातु-कस्येड्वलादेः ७।२।३५' इति इटि आंहिषाताम् ।

वाच्य०—रघुव्याघ्राभ्याम् अध्यासितः शरण्यः शरभङ्गाश्रमः आंहि ।

शिक्षा—सर्वोऽपि स्वानुरूप-स्थितावेव शोभते । शरभङ्गमुनेः आश्रमः विप्र-श्रिया अभिदीप्त आसीदतो राम-लक्ष्मणौ तत्रैव गतौ नान्यत्रेति दृश्यताम् पद्यशिक्षा ॥ ४ ॥

शरभङ्गो मुनिः क्षेत्रियव्याधिना कुष्ठरोगेण पीडित आसीदिति तच्छरीरस्याग्नौ हवनमाह—

> **पुरो रामस्य जुहवाञ्चकार ज्वलने वपुः ।**
> **शरभङ्गः प्रदिश्याऽऽरात् सुतीक्ष्ण-मुनि-केतनम् ॥ ५ ॥**

अन्वयः—शरभङ्गः आरात् सुतीक्ष्णमुनिकेतनं प्रदिश्य रामस्य पुरः वपुः ज्वलने जुहवांचकार ।

हिन्दी—'आपके रहनेके लिए निकट ही सुतीक्ष्ण मुनिका आश्रम है' ऐसा बताकर शरभंग ऋषिने रामके सामने ही अपने शरीरका अग्निमें हवन कर दिया ।

व्याख्या—शरभङ्गो नाम कुष्ठरोगाक्रान्तो मुनिः, आरात् समीपे, सुतीक्ष्ण-मुनिकेतनम् सुतीक्ष्णमुनिध्वजं, प्रदिश्य निर्दिश्य, रामस्य राघवस्य, 'प्राधान्येन व्यप

देश' इति न्यायाद्रामस्योल्लेख न सोतालक्ष्मणयो, पुरः अग्रत., ज्वलने अग्नौ, वपुः शरीर, जुहवाचकार जुहाव। शरभङ्गस्य क्रियाद्वययोगाद् दीपकम्।

कोशः—'मन्देऽथ केतनं कृत्ये केतावुपनिमन्त्रणे'।

समास.—सुतीक्ष्णश्चासौ मुनि. सुतीक्ष्णमुनि, तस्य केतनम् सुतीक्ष्णमुनिकेतनम्।

तिङन्त.—हु धातोर्जुहोत्यादिगस्य लिटि 'भीह्रीभृहुवां श्लुवच्च ३।१।३९' इत्यामि श्लौ ६।१।१०' इति द्वित्वेऽभ्यासकार्ये गुणे जुहवाम् इत्यत लिट्परकस्य कृञोऽनुप्रयोगे द्वित्वादौ जुहवांचकार।

वाच्य०—शरभङ्गेन वपुः जुहवाचक्रे।

शिक्षा—क्षेत्रिये व्याधौ भृग्वग्निपतनादिविधिरिति ॥ ५ ॥

शरभङ्गमुनिमन सकल्पमाह—

**यूयं समैष्यथेत्यस्मिन्नासिष्महि वयं वने।**
**दृष्टाः स्थ, स्वस्ति वो याम स्व-पुण्य- विजितां गतिम्** ॥ ६ ॥

अन्वयः—यूयम् समैष्यथ इति वयम् अस्मिन् वने आसिष्महि। यूयं दृष्टाः स्थ। व. स्वस्ति। (वयम्) स्वपुण्यविजिता गतिम् यामः।

हिन्दी—शरभङ्गमुनिने कहा कि 'आपलोग यहा आयेंगे, यह मानकर ही हम इस वनमे रह रहे थे। आज आपके दर्शनोसे कृतार्थ हो गये। अब अपने पुण्यसे अर्जित गति पाने जा रहे है। आपका कल्याण हो।

व्याख्या—हे राघवादय.! यूयम् सर्वे, समैष्यथ समागमिष्यथ, इति हेतोः, वयम् मुनयः, अस्मिन् प्रसिद्धे, वनेऽरण्ये, आसिष्महि अवात्स्म। यूयम् रामादयः सर्वे, दृष्टाः लक्षिताः, स्थ भवथ। वः युष्मभ्यम् स्वस्ति कल्याणम् भूयादिति शेषः। (वयम् स्वपुण्यविजिताम् निजसुकृतार्जिताम्, गतिम् सृतिम्, याम प्राप्नुमः। अत्रात्मसम्माने 'अस्मदो द्वयोश्च १।२।५९' इति बहुत्वम्। 'बहुवचनस्य वस्नसौ ८।१ २१' इति वसादेशः। 'नमःस्वस्तिस्वाहास्वधा० २।३।१६' इति स्वस्तियोगे चतुर्थी। काव्यलिङ्गालङ्कारः।

समासः—स्वस्य पुण्यम्, तेन विजिताम् उभयत्र तत्पुरुषः।

तिङन्तः—समा+एष्यथ इत्यत्रापवादतया 'एत्येधत्यूठ्सु ६।१।८९' इति वृद्धिः। आस उपवेशने इत्यादादिकधातोर्लुङि सेट्कत्वाद्वलादीटि आसिष्महि।

या प्रापणे इति आदादिकस्य शपो लुकि यामः । तथैव अस् भुवि इत्यस्य लटि 'श्नसोरल्लोपः ६।४।१११' इत्यकारलोपे स्थ इति ।

वाच्य०—युष्माभिः समैष्यते समायिष्यते वा। अस्माभिः आसि। युष्माभिर्हृष्टैः भूयते। अस्माभिः स्वपुण्यविजिता गतिः यायते।

शिक्षा—स्वसंकल्पपूर्ति यथाकथञ्चित् सम्पाद्यैव विश्रामः कर्तव्यः॥ ६ ॥

राघवस्य सुतीक्ष्णमुनिसन्निधिनिवासमाह—

**तस्मिन् कृशानु साद्-भूते सुतीक्ष्ण-मुनि-सन्निधौ।**
**उवास पर्ण-शालायां भ्रमन्ननिशमाश्रमान्॥ ७ ॥**

अन्वयः—( सः ) कृशानुसाद्भूते तस्मिन् सुतीक्ष्णमुनिसन्निधौ पर्णशालायाम् अनिशम् आश्रमान् भ्रमन् उवास ।

हिन्दी—शरभङ्ग मुनिके अग्निप्रवेश करजानेपर राम सुतीक्ष्णमुनिके पास पर्णशाला बनाकर इतस्ततः आश्रमोंमें घूमते हुए रहने लगे।

व्याख्या—सः रामः, कृशानुसाद्भूते अग्निसात्सम्पन्ने, तस्मिन् शरभङ्ग-मुनौ, सुतीक्ष्णमुनिसन्निधौ सुतीक्ष्णमुनिसन्निधाने, पर्णशालायाम् पत्रकुटीरे, अनिशम् निरन्तरम्, आश्रमान् तपोवनानि, भ्रमन् पर्य्यटन्, उवास उषितवान्। सुतीक्ष्णसन्निधाननिवासे शरभङ्गकृशानुसाद्भवनं हेतुरिति काव्यलिङ्गम्।

कोशः—'मुनीनां तु पर्णशालोटजोऽस्त्रियाम्' इत्यमरः।

समास—सुतीक्ष्णश्चासौ मुनिः सुतीक्ष्णमुनिः, तस्य सन्निधिः, तस्मिन्। पर्णैर्निर्मिता शाला पर्णशाला इति शाकपार्थिवादिसमासः। पर्णानां शाला इति षष्ठी तत्पुरुषो वा। उभयथापि 'विभाषा सेनासुराच्छायाशालानिशानाम् २।४।२५' इति ह्रस्वाभावपक्ष रूपम्।

तद्धित.—कार्त्स्न्येन कृशानुभूते इति 'विभाषा साति कार्त्स्न्ये ५।४।५२' इति सातिप्रत्यये रूपम्।

कृदन्तः—भ्रमु अनवस्थाने इति भौवादिकात् शतरि भ्रमन् इति।

तिङन्तः—वस निवासे इति भौवादिकाल्लिटि द्वित्वे 'लिट्यभ्यास-स्योभयेषाम् ६।१।१७' इत्यभ्यासस्य सम्प्रसारणे उवासेति।

वाच्य०—भ्रमता ऊषे।

शिक्षा—'स्वकार्यं साधयेद्धीमान् कार्यध्वंसो हि मूर्खता' इति शरभङ्गाभावे

राघवस्य सुतीक्ष्णसन्निधानस्थितिः सूचयति। मानवैरेवमेव स्वकार्यं साधनीयम् इति ॥ ७ ॥

सम्प्रति राघवस्य वने दिनचर्यामाह—

**वनेषु वासतेयेषु निवसन् पर्णसंस्तरः।**
**शय्योत्थायं मृगान् विध्यन्नातिथेयो विचक्रमे ॥ ८ ॥**

**अन्वयः**—( रामः ) वासतेयेषु वनेषु निवसन् पर्णसस्तरः, शय्योत्थायं मृगान् विध्यन् आतिथेयः विचक्रमे।

**हिन्दी**—रामचन्द्रजी निवास करने योग्य वनोंमें रहते हुए पत्तों पर सोते थे शय्या त्यागने पर आश्रम में घुसे पशुओं को हटाते हुए और अतिथि-सत्कारार्थं सामग्री-संकलन के लिए निकल पड़ते थे।

**व्याख्या**—वासतेयेषु वासयोग्येषु, वनेषु काननेषु, निवसन् अधितिष्ठन्, पर्णसंस्तरः पत्रशय्यः, शय्योत्थायं सुप्तोत्थितः, मृगान् पशून्, विध्यन् निःसारयन् आतिथेय अतिथिसत्कारसाधुः, विचक्रमे विचचार। काव्यलिङ्गम्।

**कोशः**—'पत्रं पलाशं छदनं दलं पर्णच्छदः पुमान्'—इत्यमरः।

**समासः**—पर्णानि संस्तरः यस्य सः। शय्याया उत्थाय इत्यर्थे पञ्चम्यन्ते शय्याशब्दे उपपदे उत्पूर्वकात् स्था धातोः 'अपादाने परीप्सायाम् ३।३।५२' इति णमुलि उपपदसमासे विभक्तेर्लुकि 'उदःस्थास्तम्भोः पूर्वस्य ८।४।६१' इति पूर्वसवर्णतया सस्य थकारे 'खरि च ८।४।५५' इति थस्य तकारे, युगागमे च मान्तत्वादव्ययम् शय्योत्थायम्।

**कृदन्तः**—व्यध ताडने इति दैवादिकात् शतरि श्यन् प्रत्यये 'ग्रहिज्या० ६।१ १६' इति सम्प्रसारणे विध्यन्।

**तद्धितः**—अतिथये साधुरित्यर्थे 'पथ्यतिथिवसतिस्वपतेर्ढञ् ४।४।१०' इति ढञि, ढस्य एयादेशे, आदिवृद्धौ, आतिथेयः। एवं वासतेयः।

**तिङन्तः**—'वेः पादविहरणे १।३।४१' इत्यात्मनेपदे विपूर्वकस्य क्रमेर्लिटि द्वित्वादिकार्य्ये रूपम् विचक्रमे।

**वाच्य०**—निवसता पर्णसंस्तरेण विध्यता आतिथेयेन विचक्रमे।

**शिक्षा**—अतिथिः सर्वात्मना सत्कार्य्यं इति विक्रमणं साधु कृत्यम्।

साम्प्रतम् दिनचर्याविशेषमाह--

[1]**ऋग्-यजुषमधीयानान् सामन्यांश्च समर्चयन्।**
**बुभुजे देव-सात्-कृत्वा शूल्यमुख्यं च होम-वान्॥ ६॥**

**अन्वय:**—होमवान् (सः) ऋग्यजुषम् अधीयानान् सामन्यान् च समर्चयन् शूल्यम् उख्यम् च देवसात् कृत्वा बुभुजे।

**हिन्दी**—नित्य हवन-कर्ता राम ऋग्वेद, यजुर्वेद, सामवेद आदि शास्त्रोंके अध्येताओंकी पूजा करने वाले शूलपर पकाए तथा बटलोईमें तैयार किये हुए भोज्योंका देवताओं को समर्पण कर अपना भोजन करते थे।

**व्याख्या**—होमवान् नित्यं होमकर्ता (स रामः), ऋग्यजुषम् ऋग्वेदयजुर्वेदौ अधीयानान् पठतः, सामन्यान् सामवेदज्ञान्, समर्चयन् पूजयन्, शूले संस्कृतम् शूल्यम् स्थालीसंस्कृतम्, उख्य भोज्यम् देवसात् देवाधीनं कृत्वा, बुभुजे स्वभोज्य भुङ्क्तेस्म। "जपतां जुह्वतां चैव, विनिपातो न विद्यते"—इति स्मृतिः। अर्चन-देवसात्करणभोजनक्रियाणां रामेन्वयाद्दीपकम्।

**समास:**—ऋक् च यजुश्चेति द्वन्द्वे 'अचतुरविचतुर० ५।४।७७' इति निपातने 'द्वन्द्वाच्चुदषहान्तात् समाहारे ५।४।१०६' इति टचि ऋग्यजुषम्।

**तिङन्त:**—'भुजोऽनवने १।३।६६' इति तङ्। अधिपूर्वकात् इङ्धातोः शानचि इयङि अधीयानान्। 'न लोकाव्यय० २।३।६९' इति षष्ठानिषेधः।

**तद्धित:**—सामसु साधवः सामन्याः। 'तत्र साधुः ४।४।९८' इति यति, 'ये चाभावकर्मणोः ६।४।१६८', इति प्रकृतिभावे सामन्यान्। 'शूलोखाद्यत् ४।२।१७, इति यति शूल्यम् उख्यम् इति। शूले उखायां च संस्कृतमित्यर्थः। 'देवे त्रा च ५।४।५५' इति चात् सातिप्रत्यये देवसात्। नित्यं होमः अस्यासौ इति नित्ययोगे मतुपि, मस्य वकारे होमवान्। बुभुजे लिटि।

**वाच्य०**—होमवता समर्चयता बुभुजे स्वभोज्यम्।

---

१—प्रकृत श्लोकके टीकाकारों ने 'शूल्यम्' और 'उख्यम्' शब्दों का अर्थ वाल्मीकि के विरुद्ध किया है। वाल्मीकि ने 'चीराजिनधरो धीरो रामो भवतु तापसः' के द्वारा ब्रह्मचर्य-व्रत में राम का रहना बतलाया है। 'शूल्यम्'का विवरण मांसके रूपमें असङ्गत प्रतीत होता है।

शिक्षा—अत्र भोज्यस्य देवसात्करणमात्रम् अरण्ये स्नातकाभावात् । ततः स्वयं भोजन, रामस्य मुनिव्रतत्वात् मुन्यन्नं फलादिकम् ।

सम्प्रति राघवस्य वननिवासप्रकारमाह युग्मेन[1]—

**वसानस् तन्त्रक-निभे सर्वाङ्गीणे तरु-त्वचौ ।**
**काण्डीरः खाड्गिकः शार्ङ्गी रक्षन् विप्रांस्तनुत्र-वान् ॥**
**हित्वाऽऽशितङ्गवीनानि फलैर् येष्वाशितम्भवम् ।**
**तेष्वसौ दन्दशूकाऽरिर् वनेष्वानभ्र निर्-भयः ॥ १०-११ ॥**

अन्वयः—तन्त्रकनिभे सर्वाङ्गीणे तरुत्वचौ वसानः काण्डीरः खाड्गिकः शार्ङ्गी विप्रान् रक्षन् तनुत्रवान् दन्दशूकारिः निर्भयः आशितङ्गवीनानि हित्वा येषु फलैः आशितम्भवम् तेषु आनभ्र ।

हिन्दी—नवीन वस्त्रोंके समान सभी अंगोंको आवृत्त करनेवाली पेड़की छाल पहने हुए ब्राह्मणोंके रक्षक एवं खूंखार जानवरोंके संहारक, तीर, तलवार धनुष तथा कवचधारी राम गायोंको तृप्त करने वाले तृण- प्रधान वनोंको छोड़कर निर्भय हो ऐसे वनोंमें विचरण करने लगे, जहाँ फलों से तृप्ति हो सके ।

व्याख्या—तन्त्रकनिभे नूतनवस्त्रतुल्ये, सर्वाङ्गीणे सर्वावयवव्यापिके, तरुत्वचौ वल्कले, वसानः परिदधानः, काण्डीरः शरधारी, खाड्गिकः खड्गधारी, शार्ङ्गी धन्वी, विप्रान् ब्राह्मणान्, रक्षन् गोपयन्, तनुत्रवान् कवची, दन्दशूकारिः हिंस्रघाती, निर्भयः निर्भीकः, असौ रामः, आशितङ्गवीनानि गोतृप्तिकराणि, हित्वा विहाय, येषु स्थानेषु, फलैः सस्यैः ( अन्नादिभिः ), आशितम्भवं सौहित्यलाभः, तेषु वनेषु, आनभ्र अटाट्यतेस्म । रक्षाहानभ्रमणक्रियाणां रामेण योगाद्दीपकम् ।

कोशः—'तन्त्रः स्वराष्ट्रचिन्तायां तन्तुवायपरिच्छदे' इति यादवः ।

'काण्डोऽस्त्री दण्डबाणयोः' 'तूण्यां खड्गे तु निस्त्रिंश-चन्द्रहासासिरिष्टयः' ।

समासः—तन्त्रकयोर्निभा इव निभा ययोः ते तन्त्रकनिभे । इह 'सप्तम्युपमानपूर्वपदस्योत्तर-पदलोपश्च' इति वार्तिकबलात्समासे 'गोस्त्रियोरुपसर्जनस्य १।२।४८' इति ह्रस्वे, टापि, तन्त्रकनिभे दन्दशूकानाम् अरिः दन्दशूकारिः । निर्गतं भयं यस्मात् स निर्भयः । 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपश्च इति समासे, गत-शब्दलोपे च निर्भयः ।

---

१—द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम् ।
कलापकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं स्मृतम् ॥

तद्धितः—'तन्त्रादचिरापहृते ५।२।७०' इति कन् तन्त्रकः। सर्वाङ्ग व्याप्नुतः इत्यर्थे 'तत्सर्वादे० ५।२।७' इति ख प्रत्यये तस्येनादेशे सर्वाङ्गीणे। 'काण्डाण्डादीरन्नीरचौ ५।२।१११' इति ईरनि काण्डीर। खड्गः प्रहरणमस्य खाड्गिकः। 'प्रहरणम् ४।४।५७' इति ठकि 'किति च ७।२।११८' इत्यादिवृद्धिः। रामविशेषणम्। तनुत्रम् अस्यास्तीति मतुपि मस्य वः।

कृदन्तः—आशिता गावः येषु इत्यर्थे 'अषडक्षाशित० ५।४।७' इति खे निपातनात्पूर्वपदस्य मुमि आशितङ्गवीनानि। 'आशिते भुवः ३।२।४५' इति खचि आशितम्भवम्। गर्हितं दशन्ति इति विग्रहे 'लुपसदचरजपजभदह० ३।१।२४' इति यङि 'जपजभदहदशभञ्जपशां च ७।४।८६' इति नुकि, यजजपदशां यङः ३।२।१६६' इति दन्दश्य धातोर्यङन्तात् ऊकप्रत्यये 'अतो लोपः ६।४।४८' इति अलोपे 'यस्य हलः ६।४।४९' इति यलोपे दन्दशूकः इति।

तिङन्तः—अभ्र गतौ इति भौवादिकाल्लिटि, द्वित्वादौ 'अत आदेः ७।४।७०' इति अभ्यासदीर्घे, तस्मान्नुड् द्विहलः ७।४।७१' इति नुडागमे आनभ्र।

वाच्य०—वसानेन काण्डीरेण खाड्गिकेन शार्ङ्गिणा तनुत्रवता रक्षता दन्दशूकारिणा अमुना निर्भयेण आनभ्रे।

शिक्षा—'को वीरस्य मनस्विनः', 'यं देशं श्रयते०' इति शिक्षयति ॥१०-११॥

सम्प्रत्यपि काननदिनचर्य्यामिवाचतुर्दशपद्यावधि प्राह—

> **व्रातीन-व्याल-दीप्राऽस्त्रः सुत्वनः परिपूजयन्।**
> **पर्षद्वलान् महा-ब्राह्मैराट नैकटिकाऽऽश्रमान्॥१२॥**

**अन्वयः**—व्रातीनव्यालदीप्रास्त्रः सुत्वनः परिपूजयन् महाब्राह्मैः (सह) पर्षद्वलान् नैकटिकान् आश्रमान् आट।

**हिन्दी**—शरीर श्रम द्वारा जीविकार्जन करनेवालोंको सतानेवाले दुष्टोंके विनाशक, सोमयाजियोंके पुजारी, श्रेष्ठ ब्राह्मणोंके बड़े बड़े समूहकी सन्निधिमें रहते हुए राम सभावाले निकटवर्ती आश्रमोंमें विचरण करने लगे।

**व्याख्या**—व्रातीनव्यालदीप्रास्त्रः श्रमिकजनघातुकहन्ता, सुत्वनः सोमयाजिनः, पूजयन् अर्चयन्, महाब्राह्मैः ब्राह्मणां बृहत्समूहैः सह, पर्षद्वलान् सभावतः, नैकटिकान् आश्रमान् अन्तिकस्थान् मुनिमठान् आट बभ्राम।

**समासः**—व्रातीनानां व्यालाः तेषु दीप्राणि अस्त्राणि यस्यासौ। महान्तश्च ते

ब्राह्माः महाब्राह्मास्तैः । ब्रह्मणां समूहाः 'तस्य समूहः ४।२।३७' इत्यणि 'ब्राह्मोऽजातौ ६।४।१७१ अस्य योगविभागे इत्यपत्यार्थादन्यत्राप्यणि टिलोपनिपाते ब्राह्मशब्देनैव महतः समासः, नतु ब्रह्मशब्देन । शङ्खे तैले० इत्यादि शब्दैः सह तस्य कुत्सावाचित्वात् । ब्रह्मैरिति पाठे तु 'कुमहद्भ्याम् ५।४।१०५' इति टच् । ब्रह्म तेजस्तत्र । महद् ब्रह्म तेजो येषां ते तैरिति बहुव्रीहिस्तत्र ।

तद्धितः—अनियतवृत्तयो सङ्घजीविनो व्राताः तेषामिदं व्रातम् । 'तस्येदम् ४।३।१२०' इत्यादि व्रातशब्दसिद्धिः । 'व्रातेन जीवति ५।२।२१' इति खप्रत्यये व्रातीनाः । पर्षद् अस्ति येषां ते 'रजः कृष्यासुतिपरिषदो वलच् ५।२।११२' इति वलचि पर्षद्वलान् । अत्र लुप्तोऽकारः परिषच्छब्दोऽपि पाठभेदाद् ग्राह्यः । 'निकटे वसतीति विग्रहे 'निकटे वसति ४।४।७३' इति ठकि आदिवृद्धौ नैकटिकान् । पर्षद्वलानिति सुत्वनोऽपि विशेषणं सम्भवति ।

कृदन्तः—सोमं सुन्वन्तीति सुत्वानः, तान् सुत्वनः । 'न संयोगाद्वमन्तात् ६।४।१३७' इति नोपधालोपः । षुञ् अभिषवे इति सौवादिक सु-धातोः 'सुयजोर्ङ्वनिप् ३।२।१०३' इति ङ्वनिपि तुगागमे शब्दसिद्धिः ।

वाच्य०—व्रातीनव्यालदीप्रास्त्रेण परिपूजयता पर्षद्वला नैकटिका आश्रमा आटिरे ।

शिक्षा—'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति गीतोपदेशमुपदिशति ॥ १२ ॥

पूर्वोक्तमेवानुसरति युग्मेनेहापि—

**परेद्यव्यद्य पूर्वेद्युरन्येद्युश् चाऽपि चिन्तयन् ।**
**वृद्धि-क्षयौ मुनीन्द्राणां प्रियं-भावुक-तामगात् ॥**
**आ-तिष्ठद्-गु जपन् सन्ध्यां प्रक्रान्तामायतीगवम् ।**
**प्रातस्तरां पतत्रिभ्यः प्रबुद्धः प्रणमन् रविम् ॥१३-१४॥**

अन्वयः—परेद्यवि अद्य पूर्वेद्युः अन्येद्युः च अपि मुनीन्द्राणां वृद्धिक्षयौ चिन्तयन् आयतीगवम् प्रक्रान्तां सन्ध्याम् आतिष्ठद्गु जपन् पतत्रिभ्यः प्रातस्तरां प्रबुद्धः रविं प्रणमन् प्रियम्भावुकताम् अगात् ।

हिन्दी—अनागत कल, आज और विगत कलकी मुनिजनोंकी लाभहानिकी चिन्ता करने वाले, गायोके आनेसे लेकर उनके खड़े रहनेके समय तक सन्ध्याजप

करने वाले, पक्षियोंसे भी पहले उठकर सूर्योपासनादि अनुष्ठान करने वाले राम सभी आश्रम-वासियोंके प्रिय हो गये।

व्याख्या -परेद्यवि श्वः, अद्य अस्मिन् दिने, पूर्वेद्युः ह्यः, अन्येद्युः परेद्युः, अपि च सर्वदैवेत्यर्थः, मुनीन्द्राणाम् ऋषीणाम्, वृद्धिक्षयौ आयव्ययौ, चिन्तयन् विचारयन् आयतीगवम् सायं गवामागमनकालात्, प्रक्रान्ताम् प्रारब्धाम्, सन्ध्यां विधिम्, आतिष्ठद्गु गोदोहनकालम् यावत्, जपन् अनुतिष्ठन्, पतत्रिभ्यः पक्षिभ्यः, प्रातस्तराम् अतिप्रभाते ( उषसि ), प्रबुद्धः उत्थितः, रविं सूर्य्यं, प्रणमन् उपस्थानादिविधिना सूर्य्यनमस्कारान्तं व्यायामं कुर्वन्, प्रियम्भावुकताम् प्रेमपात्रताम्, अगात् अगमत्।

"जपन्नासीत सावित्रीं प्रत्यगन्तारकोदयात्।

सन्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्य्यदर्शनात्"। इति स्मृतिरत्रानुसन्धेया। एकस्यैव रामस्य अनेकक्रियासम्बन्धाद्दीपकम्।

कोशः—'पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः' इत्यमरः।

समासः—वृद्धिश्च क्षयश्च वृद्धिक्षयौ। मुनीनाम् इन्द्राः मुनीन्द्रास्तेषाम्। 'तिष्ठन्त्यो गावो यस्मिन् काले स तिष्ठद्गुः गोदोहनकालः 'तिष्ठद्गुप्रभृतीनि च २।१।१७' इति सिद्धिः। एवमायतीगवमित्यपि। आतिष्ठद्गुः इति च। अप्रियः प्रियो भवतीति विग्रहे 'कर्तरि भुवः ३।२।५७' इति खुकञि प्रियम्भावुकता, ताम्।

तद्धितः—'सद्यः परुत्परार्य्यैषमः० ५।३।२२' इति निपातनेन परेद्यवि इत्यादि साधु। 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इति तरबन्तादामि प्रातस्तराम्।

तिङन्तः—'गातिस्था० २।४।७७' इति सिचो लुकि अगात्। 'इणो गा लुङि २।४।४५' इति इणो गादेशः।

वाच्य०—चिन्तयता जपता प्रबुद्धेन प्रणमता प्रियम्भावुकता अगायि।

शिक्षा—सदा सत्सेवा दैनिको नित्यो विधिश्च सर्वथा पालयितव्यः दीर्घायुषा इति शिक्षयति॥ १३-१४॥

---

१ ऋषयो दीर्घसन्ध्यत्वाद् दीर्घमायुरवाप्नुयुः। इति हि आर्य्याणामविचलो नयः। अत एव दीर्घायुष आर्य्या भवन्तीति प्रकटः प्रवादो विश्वस्मिन्।

कृपायां निन्दनेऽज्ञाने नीतौ दानेन मानिते।

प्रायोऽगन्तस्वरात् पूर्वं सर्वनाम तिङव्ययात्॥

[1]सर्वानर्थमूलम् सूर्पणखा रामाभिसरणमित्युपक्रमतेऽतः कविः—

**ददृशे पर्णशालायां राक्षस्या ऽभीकया ऽथ स ।**
**भार्योढं तमवज्ञाय तस्थे सौमित्रयेऽसकौ ॥ १५ ॥**

**अन्वय.**—अथ पर्णशालायाम् अभीकया राक्षस्या स ददृशे । असकौ भार्य्योढं तम् अवज्ञाय सौमित्रये तस्थे ।

**हिन्दी**—एक दिन पर्णशालामे कामुकी राक्षसी-( शूर्पणखा )की दृष्टि राम पर पडी । पर सीताकी उपस्थितिके कारण उन्हे शादीशुदा समझ कर वह उनकी अवज्ञा करती हुई लक्ष्मणके सन्मुख आ उपस्थित हुई ।

**व्याख्या**—अथ अनन्तरम् पर्णशालायाम् उटजे, अभीकया कामुक्या, राक्षस्या रात्रिचर्या ( रावणानुजया सूर्पणखया ), सः राम., ददृशे अदर्शि । असकौ कुत्सिता सूर्पणखा, भार्य्योढ कृतोद्वाहम् तम् रामम्, अवज्ञाय अवमत्य, सौमित्रये लक्ष्मणाय, तस्थे स्वाभिप्राय प्रकाश्य स्थिता । अवज्ञाने भार्योढत्वहेतोरुल्लेखात् काव्यलिङ्गम् ।

**कोशः**— कम्रः कामयिताऽभीक कमन कामनोऽभिकः—इत्यमर ।

**समासः**—पर्णाना शाला पर्णशाला 'विभाषा सेना० २।४।२५' इति ह्रस्वाभावपक्षे रूपम् । ऊढा भार्य्या येन स., तम् । 'वाऽऽहिताग्न्यादिषु २।२।३७ इति 'निष्ठा २।२।३६' सूत्रस्यापवादेन भार्य्यायाः पूर्वंभाव ।

**तद्धितः**—कुत्सिता असौ असकौ 'अव्ययसर्वनाम्नामकच् प्राक् टे. ५।३।७०' इति कुत्सिते सुबन्तस्याकचि रूपम् । 'श्लाघह्नुङ्स्था० १।४।३४' इति सम्प्रदानसज्ञाया 'सम्प्रदाने चतुर्थी २।३।१३' इति ।

**तिङन्तः**—ददृशे इति कर्मणि लिटि, तङ् । तस्थे इति 'प्रकाशनस्थेयाख्ययोश्च १।३।२३' इति आत्मनेपदे कर्मकर्तरि लिट् । द्वित्वादौ 'शर्पूर्वाः खयः ७।४।६१' इति तकारशेषे 'आतो लोप इटि च ६।४।६४' इत्याकारलोपे तस्थे ।

**वाच्य०**—अभीका त ददर्श । अमुयका तस्थे ।

**शिक्षा**—विधिः स्वनियोग स्वयं सम्पादयतीति सूर्पणखाभिसारः शिक्षयति । यतो हि अयमेवाभिसारो रावणवधबीजं भविता । ऊनविंशपद्यान्तमियं हि शिक्षा ॥१५॥

---

१ शूर्पणखाका परिचय देनेवाले यहाँ क्रमशः ४ श्लोक ( कलापकम् ) दिये जा रहे हैं ।

सम्प्रति तस्या लक्ष्मणं प्रति अभिसारमेवाह विशेषकेन पद्यचतुष्टयेन—

**दधाना वलिभं मध्यं कर्ण-जाह-विलोचना।**
**वाक्-त्वचेनाऽति-सर्वेण चन्द्र-लेखेव पक्षतौ ॥ १६ ॥**

अन्वयः—वलिभं मध्यं दधाना कर्णजाहविलोचना अतिसर्वेण वाक्त्वचेन पक्षतौ चन्द्रलेखा इव रघूत्तम प्रियाकर्तुं प्रार्थयांचक्रे इति सर्वत्रान्वयः।

हिन्दी—त्रिवलियुक्त कटिप्रदेश वाली, बड़ी-बड़ी आँखों वाली, सबसे बढ़ चढ़कर वाणी तथा रंग-रूपवाली प्रतिपदाके चन्द्र सी—

व्याख्या—वलिभं त्रिवलियुक्तं, मध्यम् अवलग्नं दधाना दधती, कर्णजाह-विलोचना श्रोत्रोपान्तनेत्रा, अतिसर्वेण सकलातिगेन, वाक्त्वचेन वाणीलावण्येन, पक्षतौ पक्षमूले, प्रतिपदि चन्द्रलेखा शशिकला इव रघूत्तमं प्रियाकर्तुं प्रार्थयांचक्रे। उपमाद्यलङ्कारानुप्राणितं दीपकं प्रधानं प्रार्थनान्तक्रियाणां शूर्पणखयैव सम्बन्धात्।

समासः—कर्णजाहयोः विश्रान्ते विलोचने यस्याः सा कर्णजाहविलोचनेति 'तस्य पाकमूल० ५।२।२४' इति कर्णमूलेऽर्थे जाहच् प्रत्ययः। ततः 'सप्तम्युपमानपूर्व-पदस्य बाच्यो वा चोत्तरपदलोपश्च' इति वार्तिकादुत्तरपदलोपसमासे, टापि रूपम्। वाक् च त्वक् च वाक्त्वचम्। 'द्वन्द्वाच्चुदष० ५।४।१०६' इति टचि तृतीयान्तम्। सर्वम् अतिक्रान्तेन इत्यर्थे अत्यादयः क्रान्ताद्यर्थे द्वितीययेति 'कुगतिप्रादयः २।२।१८' इति समासः।

तद्धितः—पक्षस्य मूलम् इत्यर्थे 'पक्षात्तिः ५।२।२५' इति तिप्रत्यये पक्षतिः, तस्याम्।

वाच्य०— दधानया कर्णजाहविलोचनया चन्द्रलेखयेति ॥ १६ ॥

तस्याः स्वरूपमाह—

**सु-पाद् द्विरद-नासोरुर् मृदु-पाणि-तलाऽङ्गुलिः।**
**प्रथिमानं दधानेन जघनेन घनेन सा ॥१७॥**

अन्वयः—सुपाद् द्विरदनासोरूः मृदुप्राणितलाङ्गुलिः प्रथिमानं दधानेन घनेन जघनेनोपलक्षिता सा प्रार्थयाञ्चक्रे इति पूर्ववत्।

हिन्दी—सुन्दर चरणवाली, हाथीके सूंडसी सुडौल जङ्घावाली, सुकोमल करतल तथा मखमली अंगुलियोंवाली, स्थूल सघन जघनवाली—

व्याख्या—सुपाद् शोभनाङ्घ्रिः, द्विरदनासोरूः गजशुण्डसक्थिः, मृदुप्राणि-तलाङ्गुलिः कोमल-करतल-करशाखः, प्रथिमानं पृथुतां, दधानेन दधता, घनेन निविडेन, जघनेन कटिपुरोभागेन युक्ता सा शूर्पणखा प्रार्थयाञ्चक्रे इति पूर्ववत्।

**समासः**—शोभनौ पादौ यस्याः सा 'संख्यासुपूर्वस्य ५।४।१४०' इति अकारलोपे 'पादोऽन्यतरस्याम् ४।१।८' इति ङीबभावपक्षे रूपम्। द्विरदस्य नासा द्विरदनासा ते इव ऊरू यस्याः सा द्विरदनासोरूः। उपमानपूर्वो बहुव्रीहिः। 'ऊरूत्तर-पदादौपम्ये ४।१।६९' इत्यूङ्। तलं च अङ्गुलिश्च, तयोः समाहारः तलाङ्गुलि, पाण्योः तलाङ्गुलि पाणितलाङ्गुलि, मृदु प्राणि-तलाङ्गुलि यस्याः सेति।

**वाच्य०**—सुपादा द्विरदनासोर्वा मृदुपाणितलाङ्गुल्या तया ( रघूत्तमः प्रार्थयांचक्रे )॥ १७॥

पुनस्तामेव विशिनष्टि—

**उन्-नसं दधती वक्त्रं शुद्ध-दल्-लोल-कुण्डलम्।**
**कुर्वाणा पश्यतः शंयून् स्रग्विणी सु-हसाऽऽनना॥१८॥**

**अन्वयः**—उन्नतं शुद्धदत् लोलकुण्डलं वक्त्रं दधती पश्यतः शंयून् कुर्वाणा स्रग्विणी सुहसानना ( असौ रघूत्तमं प्रार्थयांचक्रे ) पूर्ववत्।

**हिन्दी**—ऊँची नाक, अच्छे दांत एवं कमनीय कुण्डल धारिणी दर्शकों को आनन्दित करती हुई गलेमें माला पहननेवाली हंसमुखी मुस्कुराती हुई—

**व्याख्या**—उन्नतं उन्नतनासिकं, शुद्धदत् शुक्लरदं, लोलकुण्डलं चञ्चलकर्णवेष्टनं वक्त्रं मुखं, दधती दधाना, पश्यतः दर्शकान्, शंयून् आनन्दितान्, कुर्वाणा कुर्वती, स्रग्विणी माल्यधारिणी, सुहसानना स्मितवदना ( असौ प्रार्थयांचक्रे )।

**कोशः**—'रदना दशना दन्ता रदास्तालु तु काकुदम्'—इत्यमरः।

**समासः**—उन्नता नासिका यस्य तत्। 'उपसर्गाच्च ५।४।११९' इत्यच् प्रत्यये नासिकायाश्च नसादेशे उन्नसमिति वक्त्रविशेषणम्। शुद्धाः दन्ता यस्य तत्। 'अग्रान्त शुद्ध० ५।४।१४५' इति दन्तस्य ददादेशः। लोले कुण्डले यस्मिन् तत्। सुहसम् आननं यस्याः सा। हसनं हसः 'स्वन-हसोर्वा ३।३।६२' इति वैकल्पिकेऽणि हसशब्दसिद्धिः।

**तद्धितः**—स्रजोऽस्याः सन्तीति विग्रहे 'अस्मायामेधास्रजो विनिः ५।२।१२१' इति विनिः, ततो ङीपि, णत्वे स्रग्विणी। शम् अस्ति येषां ते शंयवः तान्। 'कंशंभ्यां बभयुस्तितुतयसः ५।२।१३८' इति युसि, सलोपे, सित्वात् 'सिति च १।४।१६' इति पदत्वादनुस्वारे शंयुशब्दस्य शसि शंयून्।

वाच्य०—दधत्या कुर्वाणया सुग्विण्या सुहसाननया (अमुया रघूत्तमः प्रार्थयांचक्रे ) ॥१८॥

पुनस्तां विशिनष्टि—

**प्राप्य चञ्चूर्यमाणा ऽसौ पतीयन्ती रघूत्तमम् ।**
**अनुका प्रार्थयाञ्चक्रे प्रिया-कर्तुं प्रियं-वदा ॥१९॥**

**अन्वयः**—प्राप्य चञ्चूर्यमाणा पतीयन्ती अनुका प्रियंवदा असौ प्रियाकर्तुम् रघूत्तमं ( लक्ष्मणं ) प्रार्थयांचक्रे ।

**हिन्दी**—लक्ष्मणको पाकर बेढँगी चेष्टा करती हुई, पति की चाह रखने वाली कामुकी, शूर्पणखा इतस्ततः घूमती हुई, मनोहर एवं मृदु भाषण करती हुई रघुश्रेष्ठ लक्ष्मणसे पति होनेकी प्रार्थना करने लगी ।

**व्याख्या**—प्राप्य ढौकित्वा, चञ्चूर्यमाणा गर्हितं चेष्टमाना, पतीयन्ती पतिमीहमाना, अनुका कामुकी, प्रियंवदा चाटुकारिणी, असौ शूर्पणखा, प्रिया कर्तुम् अनुलोमयितुम् ( पतिर्मे स्याः ), इति रघूत्तमं रघुश्रेष्ठं-( लक्ष्मणम् ) प्रार्थयांचक्रे ययाचे ।

**समासः**—रघुषु उत्तमः तम् । प्रियं वदतीत्यर्थे 'प्रियवशे वदः खच् ३।२।३८' इति खचि, 'अरुर्द्विषदजन्तस्य मुम् ६।३।६७' इति मुमागमे, टापि प्रियंवदा ।

**कृदन्तः**—चर-धातोः गर्हितेऽर्थे 'लुपसदचर० ३।१।२४' इति यङि, द्वित्वेऽभ्यासकार्य्ये 'चरफलोश्च ७।४।८७' इति नुगागमे 'उत्परस्यातः ७।४।८८' इत्युत्वे 'हलि च ८।२।७७' इति दीर्घे, चञ्चूर्य धातोः शानचि चञ्चूर्यमाणा । 'आत्मनः पतिमिच्छतीत्यर्थे 'सुप आत्मनः क्यच् ३।१।८' इति क्यचि अकृत्सार्वधातुकयो-र्दीर्घः ७।४।२५' इति दीर्घे पतीय धातोः शतरि पतीयत् शब्दात् 'उगितश्च ४।१।६' इति ङीपि 'शप्श्यनोर्नित्यम् ७।१।८१' इति नित्यनुमि पतीयन्ती ।

**तद्धितः**—'अनुकाभिकाभीकः कमिता ५।२।७४' इति निपातिते अनुकेति । प्रियं कुरु इति विग्रहे 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३।३।१०' इति तुमुनि प्रियमनुकूलं कर्तुमित्यत्र 'सुखप्रियादानुलोम्ये ५।४।६३' इति डाचि प्रियाकर्तुम् इति ।

**तिङन्तः**—प्रपूर्वकाद् चौरादिकाद् अर्थधातोः णिजन्ताद् लिटि 'कास्प्रत्ययादाममन्त्रे लिटि ३।१।३५' इत्यामि 'अयामन्ताल्वाय्येत्न्विष्णुषु ६।४।५५' इत्ययादेशे कृञोऽनुप्रयोगे द्वित्वादिकार्य्ये प्रार्थयांचक्रे इति ।

**वाच्य०**—अनुकया पतीयन्त्या चञ्चूर्यमाणयाऽमुया प्रियवदया रघूत्तमः प्रार्थयाचक्रे ।

प्रार्थनास्वरूपमाह—

**सौमित्रे ! मामुपायंस्थाः कम्रामिच्छुर् वशं-वदाम् ।**
**त्वद्-भोगीनां सह-चरीम-शङ्कः पुरुषाऽऽयुषम् ॥२०॥**

**अन्वयः**—हे सौमित्रे ! अशङ्कः ( त्वम् ) कम्राम् वशंवदाम् त्वद्भोगीनाम् पुरुषायुषं सहचरी माम् इच्छुः सन् उपायस्थाः ।

**हिन्दी**—हे लक्ष्मण, तुम्हे चाहने वाली, तुम्हारे अधीन रहने वाली, तुम्हारे भोग योग्य, यावज्जीवन साथ रहनेको उत्सुक मुझ ( शूर्पणखा ) से संकोच त्यागकर इच्छा पूर्वक तुम विवाह कर लो ।

**व्याख्या**—हे सौमित्रे लक्ष्मण ! अशङ्कः निःसन्देहः सन्, कम्राम् कामुकीम्, वशंवदाम् वशवर्तिनीम्, त्वद्भोगीना भवद्भोगोपयुक्ताम्, पुरुषायुषम् यावज्जीवम्, सहचरीम् सहगामिनीम्, माम् ( एवं सुन्दरीम् इति अङ्गुलिनिर्देशः ) इच्छुः अभिलाषुक सन्, उपायस्थाः परिणयेत्यर्थः । वरणे हेतोरुपादानात्काव्यलिङ्गम् ।

**कोशः**—'आयुर्जीवितकालो ना जीवातुर्जीवनौषधम्'—इत्यमरः ।

**समासः**—तव भोगः त्वद् भोगः, तस्मै हिता त्वद्भोगीना, ताम् । 'आत्मन्विश्वजनभोगोत्तरपदात् खः ५।१।९' इति खे रूपम् । पुरुषस्य आयुः पुरुषायुः तत् पुरुषायुषम् 'अचतुरविचतुर० ५।४।७७' इत्यचि नपुंसकत्वम् । अत्यन्तसंयोगे द्वितीया । पुरुषायुषमिति विशेषणात् स्वस्याः राक्षसीत्वं व्यनक्ति ।

**कृदन्तः**—'बिन्दुरिच्छुः ३।२।१६९' इति सूत्रेण निपातनात् साधुः । 'नमि-कम्पि ३।२।१६७' इति रप्रत्यये टापि रूपम् । सह चरतीत्यर्थे 'भिक्षासेनादायेषु च ३।२।१७' इति चकारस्यानुक्तसमुच्चार्थत्वात् ट प्रत्यये, टित्वात् 'टिड्ढाणञ्० ४।१।१५' इति ङीपि सहचरीम् ।

**तिङन्तः**—उप पूर्वकात् यम उपरमे इति भौवादिकात् 'आशंसायां भूतवच्च ३।३।१३२' इति लुङि, 'उपाद्यमः स्वकरणे १।३।५६' इति तङि, सिचि, 'विभाषोपयमने १।२।१६' इत्यकित्वपक्षे उपायस्थाः इति ।

**वाच्य०**—इच्छुना अशङ्केन अहम् उपायसि ।

शिक्षा—सत्यापलापो भवितुं नार्हतीति शिक्षयति ॥ २० ॥

सम्प्रति लक्ष्मणोत्तरमाह सव्यङ्ग्यं श्लोकसप्तकेन—

**तामुवाच स—'गौष्ठीने वने स्त्री-पुंसभीषणे।**
**अ-सूर्यम्पश्य-रूपा त्वं किम-भीरुररार्यसे' ॥ २१ ॥**

अन्वयः—स ताम् उवाच—स्त्रीपुंसभीषणे गौष्ठीने वने असूर्य्यम्पश्यरूपा त्वम् अभीरुः सती किम् अराय्यंसे ?

हिन्दी—लक्ष्मणने शूर्पणखासे पूछा कि स्त्री-पुरुषोंके लिए भयावह, पशुओंके योग्य इस अरण्यमें तुम-सी असूर्यम्पश्या सुकुमारी निडर होकर भला क्यों बराबर इधर उधर घूम रही है ?

व्याख्या—स लक्ष्मणः, तां शूर्पणखाम् उवाच अभिदधौ, स्त्रीपुंसभीषणे नरनारीभयावहे, गौष्ठीने भूतपूर्वगोष्ठे, सम्प्रति अतिभीषणे, व्यालाक्रान्ते, वने कानने, असूर्य्यंपश्यरूपा रविरश्मिगोप्यसौकुमार्य्या (अतिसुन्दरीत्यर्थः), त्वम् (असि) तथापि अभीरुः निर्भया सती, किम् कथम्, अराय्यंसे अटाट्यसे। उभयमपि विरुद्धमित्याश्चर्य्यम्। विरोधाभासोऽलङ्कारः।

कोशः—'गौष्ठीनं भूतपूर्वकम्'—इत्यमरः।

समासः—स्त्री च पुमान् च स्त्रीपुंसौ, तयोः भीषणम्, तस्मिन्। असूर्यम्पश्यं रूपं यस्याः सा असूर्य्यम्पश्य-रूपा। न भीरुः अभीरुः।

तद्धितः—'गोष्ठात् खञ् भूतपूर्वे ५।२।१७' इति खञि 'तद्धितेष्वचामादेः ७।२।११७' इत्यादिवृद्धौ, गौष्ठीने इति। 'अचतुरविचतुर० ५।४।७७' इति निपातितौ स्त्रीपुंसौ।

कृदन्तः—अनिषिद्धदर्शनं सूर्य्यमपि न पश्यतीति विग्रहे 'असूर्य्यललाटयोर्दृशितपोः ३।२।३६' इति खशि 'पाघ्रा० ७।३।७८' इति पश्यादेशे 'अरुर्द्विषदजन्तस्य मुम् ६।३।६७' इति मुमागमे असूर्य्यंपश्यम् इत्यसमर्थो नञ्समासः, नञो दृशिना सम्बन्धात्। दर्शनमपि चेतनधर्मो रूपे जडे आरोपितम्। ञिभी भये इति जुहोत्यादिगस्य धातोः 'भियः क्रुक्लुकनौ ३।२।१७४' इति क्रुप्रत्यये क्रिया-शब्दादमनुष्यत्वाच्च 'ऊङुतश्च ४।१।६६' इत्यूङ न भवति।

तिङन्तः—अत्यर्थम् पुनः पुनः ऋच्छतीति विग्रहे 'सूचिसूत्रि० ३।१।२२' इति यङि, 'यङि च ७।४।३०' इति गुणे 'सन्यङोः ६।१।९' इति प्राप्तद्वित्वस्य 'नन्द्राः

संयोगादयः ६।१।३ इति निषेधस्यापि 'यंकारपरस्य न द्वित्वनिषेधः' इतिरेफस्य यविशिष्टस्य यं-इत्यस्य द्वित्वे हलादिशेषे अरय इत्यत्र 'दीर्घोऽकितः ७।४।८३' इत्यभ्यासदीर्घे अरार्येत्यस्य धातुत्वाल्लटि अराय्यंसे ।

**वाच्य०**—तेन सोचे । असूर्यम्पश्यरूपया त्वया अभीर्वा किम् अराय्यंते ?

**शिक्षा**—पदच्युतस्योपहासः सर्वैः क्रियते । स्त्रियाः 'सतीत्वमेव धनम् । तदेवापहातुं प्रवृत्ता शूर्पणखा लक्ष्मणेनोपहस्यते—' इत्येवं शिक्षा इतः सप्तविंशपद्यावधिर्ज्ञेया ॥ २१ ॥

पुनर्व्यङ्ग्यध्वनिनोपक्षिपति—

**मानुषानभिलष्यन्ती रोचिष्णुर् दिव्य-धर्मिणी ।**
**त्वमप्सरायमाणेह स्वतन्त्रा कथमञ्चसि ॥ २२ ॥**

**अन्वयः**—रोचिष्णुः दिव्यधर्मिणी अप्सरायमाणा स्वतन्त्रा त्वम् इह मानुषान् अभिलष्यन्ती कथम् अञ्चसि ?

**हिन्दी**—दिव्यरूप-सौन्दर्यवाली दीप्तिमती अप्सराओंके तुल्य तुम इस वनमें पुरुषोंको चाहतीसी क्यों उच्छृङ्खल होकर घूम रही हो ?

**व्याख्या**—रोचिष्णुः दीप्तिमती, दिव्यधर्मिणी दिव्यसौन्दर्यशालिनी, अप्सरायमाणा अप्सरःसदृशी, स्वतन्त्रा स्वाधीना, त्वम् सर्वविदिता शूर्पणखा, इह अस्मिन् ( वने इत्यर्थः ), मानुषान् मानवान् ( त्वदपेक्षया न्यूनान् ) अभिलष्यन्ती इच्छन्ती, कथम् किमर्थम्, अञ्चसि अटसि । विरोधाभासोऽपि ध्वन्यत एव ।

**कोशः**—'स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः'— इत्यमरः ।

**समासः**—दिव्यानां धर्माः दिव्य-धर्माः । अथवा दिव्याश्च ते धर्माः दिव्य-धर्माः, ते सन्ति अस्याः इति दिव्यधर्मिणी 'धर्मशील० ५।२।१३२' इति इनि प्रत्यये 'ऋन्नेभ्यो ङीप् ४।१।५' इति ङीपि दिव्यधर्मिणी ।

**कृदन्तः**—रुच अभिप्रीतौ इति भौवादिकाद्धातोः—'अलङ्कृञ् ३।२।१३६' इति इष्णुचि रोचिष्णुः 'वोतो गुणवचनात् ४।१।४४' इति ङीषभावपक्षे रूपम् । अप्सरस इवाचरन्ती अप्सरायमाणेत्यत्र 'कर्तुः क्यङ् सलोपश्च ३।१।११' इति 'ओजसोप्सरसो नित्यम्' इति वार्तिकबलान्नित्ये सलोपे क्यङि अप्सराय-धातोः शानचि अप्सरायमाणा । अभिपूर्वकाद् लषः शतरि 'वा भ्राशभ्लाश० ३।१।७०' इति वैकल्पिके श्यनि 'उगितश्च ४।१।६' इति ङीपि 'शप्श्यनोर्नित्यम् ७।१।८१' इति नुमागमे अभिलष्यन्ती ।

वाच्य०—रोचिष्णवा दिव्यधर्मिण्या अप्सरायमाणया त्वया स्वतन्त्रया अभिलष्यन्त्या अच्यते ॥ २२ ॥

पुनस्तथैवोपहसति लक्ष्मणः—

**उग्रं-पश्याऽऽकुले ऽरण्ये शालीन-त्व-विवर्जिता।**
**कामुक-प्रार्थना-पट्वी पतिवत्नी कथं न वा ॥ २३ ॥**

अन्वयः—उग्रम्पश्याकुले अरण्ये शालीनत्वविवर्जिता कामुकप्रार्थना-पट्वी (त्वम्) पतिवत्नी कथ न वा ? असीति शेषः।

हिन्दी—हिंस्र प्राणियोंसे पूर्ण इस जंगलमें शील-संस्कार शून्य कामी-पुरुषोंकी तलाशमें रत तुम शादीशुदा क्यों नहीं हो ?

व्याख्या—उग्रम्पश्याकुले हिंस्रसङ्कीर्णे, अरण्ये शून्यवने, शालीनत्वविवर्जिता गाम्भीर्य्यशून्या, कामुकप्रार्थनापट्वी कामिजनानुनयचाटुकृत् (त्वम्), पतिवत्नी जीवत्पतिका, कथं केन प्रकारेण, नवा न असि। सर्वमिदं पुंश्चलीचिह्नम् कथं त्वयि ?

समासः—उग्रम्पश्यैः आकुलम् उग्रम्पश्याकुलम्, तस्मिन्। शालीनत्वेन विवर्जिता शालीनत्वविवर्जिता। कामुकस्य प्रार्थना, तस्यां पट्वी।

तद्धितः—शालाप्रवेशमर्हतीति शालीना। 'शालीन-कौपीने ५।२।२०' इति खञ् निपात्यते। अधृष्टेऽभिधेये प्रवेशशब्दलोपे, खस्य च ईनादेशे शालीनाया भाव इत्यर्थे त्वे, 'त्वे च ६।३।६४' इति ह्रस्वे शालीनत्वशब्दसिद्धिः।

कृदन्तः—कमु कान्तौ इति भौवादिकात् कम धातोः 'लषपतपद० ३।२।१५४' इति उकञ् प्रत्यये उपधावृद्धौ कामुकशब्दसिद्धिः। 'वोतो गुणवचनात् ४।१।४४' इति वैकल्पिके ङीषि पट्वी। 'अन्तर्वत्पतिवतोर्नुक् ४।१।३२' इत्यत्र पतिर्विद्यते अस्या इत्यर्थे मतुपः सिद्धत्वात् जीवत्पत्यां मतुपो वत्वं निपात्यते, नुक् चागम्यते। ङीप् प्रत्ययस्तूगित्वादेव सिद्धः।

वाच्य०—शालीनत्वविवर्जितया कामुकप्रार्थनापट्व्या त्वया पतिवत्न्या कथं न भूयते ॥ २३ ॥

इदानीं तां वञ्चयन् स पुना रामपार्श्वे प्रेषयति—

**राघवं पर्ण-शालायामिच्छाऽनुरहसं पतिम्।**
**यः स्वामी मम कान्तावानौपकर्णिक-लोचनः ॥ २४ ॥**

अन्वयः—पर्णशालायाम् अनुरहसम् राघवं पतिम् इच्छ। कान्तावान् औपकर्णिकलोचनः यः मम स्वामी अस्ति।

**हिन्दी**—पर्णशालामें एकान्तमें बैठे हुए श्रीरामचन्द्रको पतिरूपमें स्वीकार करो। वे सुन्दर लोचनवाले भार्यावान् मेरे भी स्वामी हैं।

**व्याख्या**—पर्णशालायाम् उटजे, अनुरहसम् एकान्ते स्थितमिति शेषः, राघवं रामचन्द्रं, पतिम् भर्तारम् इच्छ कामयस्व। कान्तावान् सपत्नीकः ( रागीति भावः, नाहं तथा ) औपकर्णिकलोचनः कर्णंजाहविलोचनः यः रामः, मम लक्ष्मणस्य, स्वामी प्रभुः अस्ति। अत्र न ते स्वातन्त्र्यम् तत्र तत् स्यादिति भावः।

**समासः**—रहसि इति अनुरहसम् विभक्त्यर्थे 'अव्ययं विभक्ति० २।१।६' इत्यव्ययीभावः। 'अन्ववतप्ताद्रहसः ५।४।८१' इत्यचि नपुंसकम्। औपकर्णिके लोचने यस्य सः औपकर्णिकलोचनः।

**तद्धितः**—'स्वामिन्नैश्वर्ये ४।२।१२६' इति निपातनम्। कर्णस्य समीपमिति समीपार्थेऽव्ययीभावे उपकर्णशब्दात् तत्र प्रायभव इत्यर्थे 'उपजानूपकर्णोपनीवेष्ठक् ४।३।४०' इति ठकि, तस्येकादेशे, आदिवृद्धौ औपकर्णिकशब्दः, ततो बहुव्रीहिः।

तिङन्तः—इषु तुदादि-धातोर्लोटि, हौ, शे 'इषुगमियमां छः ७।३।७७' इति छादेशे, 'अतो हेः ६।४।१०५' इति हेर्लुकि इच्छ।

**वाच्य०**—त्वया राघवः पतिः इष्यताम्। येन कान्तावता औपकर्णिकलोचनेन स्वामिना भूयते ॥ २४ ॥

सूर्पणखाप्रतारणार्थं रामं पुनर्विशिनष्टि लक्ष्मणः—

**वपुश् चान्दनिकं यस्य, कार्णवेष्टकिकं मुखम्।**
**संग्रामे सर्व-कर्मीणौ पाणी यस्यौपजानुकौ ॥२५॥**

**अन्वयः**—यस्य चान्दनिकं वपुः, कार्णवेष्टकिकं मुखम्, संग्रामे सर्वकर्मीणौ औपजानुकौ यस्य पाणी इति।

**हिन्दी**—चन्दन-चर्चित शरीर, कुण्डलोंसे सुशोभित मुँह और युद्धमें समस्त क्रिया संपन्न करने वाले जंघा पर्यन्त उन ( रामचन्द्र ) के लम्बे लम्बे हाथ हैं।

**व्याख्या**—यस्य रामस्य, चान्दनिकं मलयजसुगन्धि, वपुः शरीरम् कार्णवेष्टनिकं कुण्डलशोभितं, मुखम् वदनम्, संग्रामे युद्धे, सर्वकर्मीणौ समस्तकर्मक्षमौ ( अस्त्रशस्त्रादि-क्षेपणदक्षौ ), औपजानुकौ जानुसमीपगौ, पाणी हस्तौ, स्तः इति शेषः।

**कोशः**—'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' ।
जङ्घानुप्रसृताजानूरुपर्वाष्ठीवदस्त्रियाम्'—इत्यमरः ।

**तद्धितः**—चन्दनेन सम्पाद्यते इत्यर्थे चन्दनशब्दात् इति एवम् कर्णवेष्टकाभ्यां सम्पाद्यते इत्यर्थे कर्णवेष्टक-शब्दात् 'सम्पादिनि ५ । १ । ९९' इति ठक् । उभयत्रापि ठस्य इकादेशे, आदिवृद्धौ, चान्दनिकम् कार्णवेष्टकिकम् इति । सर्वकर्माणि व्याप्नुत इत्यर्थे 'तत्सर्वादे० ५।२।७ इति खे सर्वकर्मीणौ । उपजानुभवौ इत्यर्थे 'उपजानूपकर्णोपनीवेष्ठक् ४।३।४० इति ठकि आदिवृद्धौ 'इसुसुक्तान्तात्कः ७।३।५१' इति ठस्य ककारे औपजानुकौ । औपनीविक इति २६ पद्येऽग्रे ।

**वाच्य०**—सर्वत्र तृतीयान्तेन भूयते चान्दनिकेन वपुषेत्यादिना । २५॥

शूर्पणखाप्रतारणमिषेण रामस्वरूपं साधूपसंहरति—

**बद्धो दु-र्बल-रक्षाऽर्थमसिर् येनौपनीविकः ।**
**यश् चापमाश्मन-प्रख्यं सेषुं धत्तेऽन्य-दुर्वहम् ॥२६॥**

**अन्वयः**—येन दुर्बलरक्षार्थम् औपनीविकः असि बद्धः । य आश्मनप्रख्यम् अन्यदुर्वहम् सेषुम् चापम् धत्ते ।

**हिन्दी**—रामने दुर्बलोंकी रक्षाके हेतु कमरमें तलवार बांध रखो है। वह पत्थरके समान दूसरोंके लिये दुर्वह बाण सहित धनुष धारण किये रहते हैं ।

**व्याख्या**—येन रामेण, दुर्बलरक्षार्थम् अशक्तत्राणाय औपनीविकः नीविसमीपगः, असिः खड्गः, बद्धः गृहीतः, च पुनः, यः रामः, आश्मनप्रख्यम् प्रस्तरसमम् ( दृढमिति यावत् ) अन्यदुर्वहम् इतरदुर्धार्य्यम्, सेषुम् बाणसहितम् चापम् धनुः धत्ते दधाति ।

**कोशः**—'( तूण्याम् ) खड्गे तु निस्त्रिंश-चन्द्रहासासिरिष्टयः' ।
'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' ।

**समासः**—दुर्बलानां रक्षा दुर्बलरक्षा । दुर्बलरक्षा अर्थः प्रयोजनं यस्मिन् कर्मणि तत्तथा इति बहुव्रीहिः । क्रियाया विशेषणम् । इषुणा सह वर्तते इति सेषुः, तम् । आश्मनेन प्रख्या यस्य स आश्मनप्रख्यः तम् ।

**तद्धितः**—अश्मैव आश्मनम्, स्वार्थे अणि, 'अश्मनो विकारे टिलोपो वाच्यः' इति विकारे टिलोपविधानान्नेह । प्रख्यानम् प्रख्या, प्रपूर्वकात् ख्या धातोः 'आतश्चोपसर्गे ३।३।१०६' इति अङि, टापि प्रख्याशब्दः सिध्यति ।

वाच्य०—य औपनीविकम् असिम् बद्धवान् । येन आश्मनप्रख्यः सेषुः अन्य-दुर्वहः चापः धीयते ।

पुनस्तथैन रामं विशिनष्टि—

**जेता यज्ञ-द्रुहां संख्ये धर्म-सन्तान-सूर् वने ।**
**प्राप्य दार-गवानां यं मुनीनाम-भयं सदा ॥२७॥**

अन्वयः—सख्ये यज्ञद्रुहा जेता वने धर्मसन्तानसूः य प्राप्य मुनीनाम् दारगवा-नाम् सदा अभयम् अस्तीति शेषः।

हिन्दी—युद्धमे यज्ञ-द्रोहियो पर जय पाने वाले धर्म-प्रचारक रामको पाकर मुनियोको स्त्रियाँ तथा गाये निर्भय हो गई हैं।

व्याख्या—सख्ये सग्रामे, यज्ञद्रुहा यागविध्वसिना, जेता जिष्णुः, वने अरण्ये, धर्मसन्तानसूः सुकृतराशिचेता, य राम, प्राप्य लब्ध्वा, मुनीनाम् तपोधनानाम्, दारगवानाम् पत्नीधेनूनाम्, सदा सर्वदा, अभयम् अभीतिः ( अस्तीति शेषः )।

कोशः—'युद्धमायोधन जन्यं प्रधन प्रविदारणम्'।
'मृधमास्कन्दन सख्यम्'—इत्यमरः।

समासः—धर्माणा सन्तान धर्मसन्तानः, त सूते इत्यर्थे 'सत्सूद्विष० ३।२।६१' इति क्विपि, उपपदसमासे, सुपो लुकि धर्मसन्तानसू । दाराश्च गावश्च दारग-वानि तेषाम्। 'अचतुरविचतुर० ५।४।७७' इति निपातनम्। क्षुभ्नादित्वाण्णो न।

कृदन्तः—दारयन्तीति दाराः दार-जारौ कर्तरि णिलुक् च ३।३।२०' इति घञ्। यज्ञाय द्रुह्यन्तीति यज्ञद्रुहः। अत्रापि 'सत्सूद्विष० ३।२।६१' इति क्विप्। यज्ञद्रुहाम् 'कर्तृ-कर्मणो. कृति २।३।६५' इति षष्ठी ज्ञेया।

वाच्य०—जेत्रा धर्मसन्तानस्वा अभयेन भूयते। ( ओः सुपि ६।४।८३ इति यण् उवङपवादः ) ॥ २७॥

अर्थी दोषं न पश्यतीति लक्ष्मणप्रतारणामनवगच्छन्ती सा रामं प्रार्थयते—

**ततो वावृत्यमाना ऽसौ राम-शालां न्यविक्षत।**
**'मामुपायंस्त रामेति 'वदन्ती साऽऽदरं वचः ॥२८॥**

अन्वयः—ततः वावृत्यमाना असौ 'हे राम! भवान् माम् उपायस्त' इति सादरं वचः वदन्ती रामशालां न्यविक्षत।

हिन्दी—लक्ष्मणसे सारी स्थिति समझलेनेपर शूर्पणखा रामचन्द्रका वरण करनेकी भावना से 'हे राम आप मुझसे विवाह कीजिये' ऐसा आदर पूर्वक अनुरोध करती हुई रामकी पर्णशालामें प्रविष्ट हुई।

व्याख्या—ततः सौमित्रिप्रतारणानन्तरम्, वावृत्यमाना रामम् वृण्वाना, असौ राक्षसी, हे राम हे राघव ! माम् सुन्दरीम्, उपायंस्त विवहतु भवान् ( इति लकारभेदः ) एवम् इति, सादरम् सत्कारसेवितम्, वचः वचनम् वदन्ती अभिदधती, रामशालाम् राघवपर्णकुटीम्, न्यविक्षत प्राविशत्।

कोशः—'वासः कुटी द्वयोः शाला सभा संवननं त्विदम्'—इत्यमरः।

कृदन्तः—वावृतु वरणे' इति दैवादिकाद् धातोः 'वर्तमानसामीप्ये वर्तमानवद्वा ३।३।१३१' इति कर्तरि समागतस्य लटः स्थाने 'लटः शतृशानचा० ३।२।१२४' इति शानचि, अनुबन्धलोपे, श्यनि, आने मुक् ७।२।८२' इति मुगागमे, टापि वावृत्यमाना। वदन्तीत्यत्र वद व्यक्तायां वाचि इति वद-धातोः शतरि शपि पररूपे, ङीपि, 'शप्श्यनोर्नित्यम् ७।१।८१' इति नुमागमो ज्ञेयः।

तिङन्तः—विश प्रवेशने इति तौदादिकधातोः लुङि 'नेर्विशः १।३।१७' इति तङि, च्लौ, 'शल इगुपधादनिटः क्सः ३।१।४५' इति तस्य क्सादेशे, 'व्रश्च-भ्रस्ज० ८।२।३६ षत्वे' 'षढोः कः सि ८।२।४१' इति कत्वे, 'आदेशप्रत्यययोः ८।३।५९' इति सस्य षत्वे, अडागमे न्यविक्षत। अहं प्रार्थये माम् उपायंस्त ( परिणयतु भवान् ) इत्यर्थे 'आशंसायां भूतवच्च ३।३।१३२' इति लुङि 'उपाद्यमः स्वकरणे १।३।५६' इति तङि, च्लौ, तस्य सिचि, 'विभाषोपयमने १।२।१६' इत्यकित्वपक्षे रूपम्।

वाच्य०—अमुया वावृत्यमानया हे राम भवता अहम् उपायंसि इति वचः सादरम् वदन्त्या रामशाला न्यवेशि।

शिक्षा—पुँश्चली सर्वं कर्तुमर्हति, सर्वथा निर्लज्जा भवतीति शिक्षयति ॥२८॥

रामोऽपि गाम्भीर्येण मितवचसैव प्रतारयति ताम्—

**अ-स्त्रीको ऽसावहं स्त्रीमान्, स पुष्यति-तरां तव।**
**पतिरित्यब्रवीद् रामस्-'तमेव व्रज मा मुचः' ॥२९॥**

अन्वयः—'असौ अस्त्रीकः अहम् स्त्रीमान्। स तव पतिः पुष्यतितराम्। तम् एव व्रज मा मुचः' इति रामः ( ताम् ) अब्रवीत्।

हिन्दी:—'मैं मायवाला हूँ और वह ( लक्ष्मण ) मार्यारहित है। तुम्हारा पति बनजाने पर वह भलीभांति पालन-पोषण करेगा, अतः उसे मत छोड़ो, उसीके पास जाओ' ऐसा रामने शूर्पणखासे कहा।

व्याख्या—असौ लक्ष्मणः, अस्त्रीकः स्त्री रहितः, अहम् रामः, स्त्रीमान् सुन्दरस्त्रीसहितः, स लक्ष्मणः, तव त्वदीयः, पतिः भर्ता, पुष्यतितराम् अत्यर्थं त्वां पुष्टां करोति। तम् लक्ष्मणम् एव निश्चयेन, व्रज गच्छ, मा मुचः न त्यज, इति इत्थम् रामो रामचन्द्रः, अब्रवीत् अभ्यधात् ( तामिति शेषः )। एषु सर्वत्र व्यङ्ग्य-सत्त्वान्नालङ्कारचिन्ता। सहेतुकं प्रेषणमिति काव्यलिङ्गम्।

कोशः—'धवः प्रियः पतिर्भर्ता' —इत्यमरः।

समासः—अविद्यमाना स्त्री यस्यासौ अस्त्रीकः। 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः' इति वार्तिकबलात्समासे विद्यमानशब्दलोपे च 'नद्यृतश्च ५।४।११' इति कपि, 'न कपि ७।४।१४ इति ह्रस्वप्रतिषेधे अस्त्रीकः।

तद्धितः—प्रशस्ता स्त्री अस्येति विग्रहे प्रशसार्थे मतुपि स्त्रीमान्। अतीव पुष्यतीत्यर्थे 'तिङश्च ५।३।४६' इति तरपि 'किमेत्तिङ० ५।४।१०' इत्यामि पुष्यतितराम्।

तिङन्तः—मा मुचः। मुच्लृ मोचने इति मुच्-धातोः 'माङि लुङ् ३।२।१७५' इति लुङि 'पुषादिद्युताद्यॢदितः परस्मैपदेषु ३।१।५५'च्लेरङि, गुणाभावे अडागमाभावे रुत्वविसर्गे रूपसिद्धिः। ब्रूञ् व्यक्तायां वाचि इति आदादिकस्य ब्रू धातोर्लङि, शपो लुकि, 'ब्रुव ईट् ७।३।९३' इति ईटि, गुणेऽडागमे अब्रवीत्।

वाच्य०—अमुना अस्त्रीकेण भूयते मया स्त्रीमता भूयते। तेन पत्या त्वं पुष्यसेतराम्, त्वया स एव व्रज्यताम्, मा मोचि। रामेण सा औच्यत।

शिक्षा—पदच्युतं सर्वेऽप्युपहसन्ति, दृश्यताम् पुंश्चलीं शूर्पणखां गम्भीरप्रकृतिरपि राम उपहसतीति। उपहासे 'अस्त्रीक इत्युक्तिर्याथ्या तात्कालिकत्वाच्च ॥२९

इदानीमुत्कटमन्मथा सा पुनरपि लक्ष्मणं तिरस्कुर्वन्तमपि अभिसरति—

**लक्ष्मणं सा वृषस्यन्ती महोक्षं गौरिवाऽगमत्।**
**मन्मथाऽऽयुध-सम्पात-व्यथ्यमान-मतिः पुनः ॥३०॥**

अन्वयः—( ततः ) मन्मथायुधसम्पातव्यथमानमतिः सा वृषस्यन्ती गौः महोक्षम् इव पुनः लक्ष्मणम् अगमत्।

हिन्दी—कामदेवके बाणोंसे पीड़ित बुद्धिवाली वह (शूर्पणखा) उसी प्रकार पुनः लक्ष्मणके पास पहुँची, जैसे गाय साँड़के पास जाती है।

व्याख्या— तत:) मन्मथायुधसम्पात-व्यथ्यमानमतिः मदनशरप्रहारदूयमान-मनाः, सा शूर्पणखा, वृषस्यन्ती कामुकी गौः सुरभिः, महोक्षम् अनड्वाहम्, इव यथा, पुनः भूयः, लक्ष्मणम् सौमित्रिम् अगमत् अभ्यसरत्। उपमालंकृतिः।

समासः—मन्मथस्य आयुधः मन्मथायुधः तस्य सम्पातः मन्मथायुधसम्पातः, तेन व्यथ्यमाना मतिः यस्याः सा मन्मथायुधसम्पात-व्यथ्यमानमतिः। महान् चासौ उक्षा महोक्षः। 'अचतुर० ५।४।७७' इति निपातितः।

कृदन्तः—आत्मनो वृषमिच्छतीति वृषस्यन्ती। द्वितीयान्ताद् वृषशब्दात् 'सुप आत्मनः क्यच् ३।१।८' इति क्यचि 'अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ७।१।५१ इत्यसुगागमे, वृषस्य धातोः 'शतरि' 'उगितश्च ४।१।६' इति ङीपि, 'शप्श्यनोर्नित्यम् ७।१।८१ इति नुमि वृषस्यन्ती 'अश्ववृषयोर्मैथुनेच्छायाम्' इति वार्तिकात् मैथुनेच्छा व्यज्यते।

तिङन्तः—गम्धातोर्लुङि 'पुषादिद्युतादि० ३।१।५५' इति च्लेरङि, अडागमेऽगमत्।

वाच्य०—मन्मथायुधसम्पातव्यथमानमत्या तया वृषस्यन्त्या गवा महोक्ष इव लक्ष्मण अगामि।

शिक्षा—'कामातुराणां न भयं न लज्जा' इति नीतिवाक्यमुपदिशति ॥३०॥

तस्याः पुंश्चलीत्वमपनिनीषुर्लक्ष्मणोऽपनसं मुखं करोति—

**तस्याः सासद्यमानाया लोलूया-वान् रघूत्तमः।**
**असिं कौक्षेयमुद्यम्य चकाराऽप-नसं मुखम् ॥ ३१ ॥**

अन्वयः—लोलूयावान् रघूत्तमः कौक्षेयम् असिम् उद्यम्य सासद्यमानायाः तस्याः मुखम् अपनसम् चकार।

हिन्दी—बारंबार छेदन क्रिया करनेमें निपुण लक्ष्मणने अपनी कमरमें लटकती हुई तलवार उठाकर उसी समय बुरी भावनासे समीप आती हुई शूर्पणखाका मुख नासिकाहीन कर दिया।

व्याख्या—लोलूयावान् भृशं छेदनकर्मकुशलः, रघूत्तमः रघुश्रेष्ठः (लक्ष्मण इत्यर्थः), कौक्षेयम् कटीलम्बितम्, असिम् खड्गम्, उद्यम्य उत्क्षिप्य, सासद्यमानायाः

गर्हितम् सीदन्त्याः, तस्याः शूर्पणखायाः, मुखम् वक्त्रम्, अपनसम् नासिकारहितम्, चकार कृतवान् । मुखापनासकृतौ लोलूयाहेतुरिति काव्यलिङ्गम् । अस्युत्क्षेपोऽपि हेतुर्ज्ञेयः ।

समासः—अपगता नासिका यस्मात् तद् अपनसम् 'उपसर्गाच्च ५।४।११९' इत्यचि,नासिकायाः नसादेशे रूपम् ।

तद्धितः—कुक्षौ भव इत्यर्थे 'दृतिकुक्षि० ४।३।५६' इति ढञि, आदिवृद्धौ, एयादेशे, 'यस्येति च ६।४।१४८' इतीकारलोपे कौक्षेयोऽसिः, तम् ।

कृदन्तः—गर्हितं सीदति समीपे इत्यर्थे 'लुपसद० ३।१।२४ इति यङि, 'सन्यङोः ६।१।९' इति द्वित्वेऽभ्यासकार्य्ये, 'दीर्घोऽकितः ७।४।८३' इति अभ्यासदीर्घे सासद्यस्य धातुत्वात्, शानचि सासद्यमानाशब्दस्य षष्ठ्येकवचने रूपम् । भृशमत्यर्थं लुनातीत्यर्थे लूञ् छेदने इति क्र्यादिस्थ-लू धातोः यङि द्वित्वादिकार्ये 'गुणो यङ्लुकोः ७।४।८२ इति अभ्यासगुणे लोलूयेत्यतः 'अ प्रत्ययात् ३।३।१०२' इत्यतोऽप्रत्यये, टापि, लोलूयाशब्दात् मतुपि, मस्य वत्वे लोलूयावान् ।

शिक्षा—"यादृशो शीतला देवी तादृशो वाहनः खरः" इत्येव नीतिं शिक्षयति पद्यम् । पुंश्चल्या रूपं विगुणयन् लक्ष्मणः सर्वथा अयोग्यां तां चकार ॥ ३१ ॥

ततः स्वरूपमास्थाय सा तं विनिन्दन्ती बहु विलपति—

**अहं शूर्प-णखा नाम्ना नूनं नाऽज्ञायिषि त्वया ।**
**दण्डोऽयं क्षेत्रियो येन मय्यपातीति साऽब्रवीत् ॥ ३२ ॥**

अन्वयः—अरे लक्ष्मण ! अहम् नाम्ना शूर्पणखा नूनं त्वया न अज्ञायिषि । येन अयम् क्षेत्रियः दण्डः मयि अपाति—इति सा अब्रवीत् ( तम् इति शेषः )।

हिन्दी—'अरे लक्ष्मण ! निश्चय ही तुम नहीं जानते कि मैं शूर्पणखा हूँ, इसीलिये तुमने मुझे दूसरे जन्ममें मिटने योग्य दण्ड दिया । ऐसा उसने कहा ।

व्याख्या—अरे लक्ष्मण ! अहम् नाम्ना अभिधानेन, शूर्पणखा रावणस्वसा ( मातृष्वसेयीत्यर्थः ) अस्मि । नूनं निश्चितं, त्वया नीचेन, न नैव, अज्ञायिषि अबोधिषि, येन अज्ञानेन हेतुना, अयम् नासाच्छेदरूपः क्षेत्रियः परक्षेत्रे चिकित्स्यः, दण्डः दमः, मयि पूर्वोक्तायाम्, अपाति पातितः—इति इत्थं सा शूर्पणखा, अब्रवीत् अवोचत्, तम् लक्ष्मणम् इति शेषः ।

कोशः—'साहसन्तु दमो दण्डः साम सान्त्वमथो समौ'—इत्यमरः।

तद्धितः—'क्षेत्रियच् परक्षेत्रे चिकित्स्यः ५।२।९२' इति निपातनम्। परक्षेत्रे इति सप्तम्यन्तात् चिकित्स्य इत्यर्थे घच् प्रत्यये, विभक्तेः लुकि, पर-शब्दस्य च लुकि निपातिते, घस्य इयादेशे, अलोपे क्षेत्रियः (इति मनोरमा)। 'प्रकृत्यादिभ्य उपसंख्यानम्' इति नाम्नेत्यत्र तृतीया। 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ४।१।५४' इति प्राप्तस्य ङीषः 'नखमुखात् ४।१।५८' इति निषेधे, टापि, पूर्व-पदात्संज्ञायामगः ८।४।३' इति णत्वे शूर्पणखा।

तिङन्तः—पातेर्ण्यन्तात् कर्मणि लुङि, च्लेश्चिणि, 'चिणो लुक् ६।४।१०४' इति लुकि, णेर्लोपे अपाति। अज्ञायि इत्यत्र सर्वं पूर्ववत्। 'आतो युक्० ७।३।३३' इति युक्विशेषः। ब्रूञ् धातोर्लङि 'ब्रुव ईट् ७।३।९३' इति ईटि गुणेऽडागमेऽब्रवीत्।

वाच्य०—मां नाम्ना शूर्पणखां त्वम् न अज्ञासीः, येन इमं क्षेत्रियं दण्डम् अपीपतः इति तया स औच्यत।

शिक्षा—'मतिरुत्पद्यते तादृग् व्यवसायोऽपि तादृशः।
सहायास्तादृशा ज्ञेया यादृशी भवितव्यता'॥

यतो हि नासिकाकर्तनकुपितो रावणः सीतां जहार। सीताहरणमेव तद्वधकारणम् इति सर्वानर्थमूलम् दण्डोऽयमभूत्॥ ३२॥

सम्प्रति कविः शूर्पणखाकृत्यं वर्णयति पद्यद्वयेन—

**पर्यशाप्सीद् दिवि-ष्ठाऽसौ संदर्श्य भय-दं वपुः।**
**अपिस्फवच् च बन्धूनां निनङ्क्षुर् विक्रमं मुहुः॥ ३३॥**

अन्वयः—दिविष्ठा असौ भयदं वपुः सन्दर्श्य पर्यशाप्सीत्। निनंक्षुः च बन्धूनां विक्रमं मुहुः अपिस्फवत्।

हिन्दी—आकाशमें स्थित हो वह भयंकर रूप दिखाते हुए गालियां देने लगी। 'विनाशकाले विपरीतबुद्धिः'के अनुसार नाशकी इच्छावाली वह अपने बन्धु-बान्धवोंके पराक्रमकी बढ़ा-चढ़ा कर प्रशंसा करने लगी।

व्याख्या—दिविष्ठा आकाशगा, असौ शूर्पणखा, भयदं भयङ्करं वपुः शरीरं, सन्दर्श्य दर्शयित्वा, पर्यशाप्सीत् आक्रुष्टवती। निनंक्षुः नष्टुम् इच्छुः 'विनाशकाले विपरीतबुद्धिः' इति न्यायात् च पुनः, बन्धूनाम् बान्धवानां

( खरादीनाम् ), विक्रमम् पराक्रमम्, मुहु· भूयो भूयः, अपिस्फवत् ( वाचा ) अवीवृषत् । एकस्या अनेकक्रियायोगाद्दीपकम् ।

कोशः—'शक्तिः पराक्रम. प्राणो विक्रमस्त्वतिशक्तिता'—इत्यमरः ।

कृदन्त—दिवि तिष्ठतीति विग्रहे 'सुपि स्थ २।२।४' इति क—प्रत्यये 'तत्पुरुषे कृति बहुलम् ६।३।१४' इति सप्तम्या अलुकि, आलोपे 'अम्बाम्ब० ८।३।९७' इति षत्वे, टापि, दिविष्ठेति । नष्टुमिच्छतीति विग्रहे नश्धातो. सनि, द्वित्वेऽभ्यासकार्ये, 'मस्जिनशोर्झलि ७।१।६०' इति नुमागमे, 'व्रश्चभ्रस्ज० ८।२।३६' इति शस्य षत्वे, षस्य 'षढो. कः सि ८।२।४१' इति कत्वे, सस्य षत्वे, कषोः क्षकारोल्लेखे निनङ्क्षेत्यस्य धातुत्वात् 'सनाशसभिक्ष उः ३।२।१६८' इत्यु—प्रत्यये निनक्षुः ।

तिङन्तः—स्फायी ओप्यायी वृद्धौ इति ण्यन्तात् स्फायि धातोः 'स्फायो वः ७।३।४१' इति यस्य वत्वे 'णिश्रिद्रुस्रुभ्य.० ३।१।४८' इति च्लेश्चङि, 'णौ चङ्युपधाया ह्रस्वः ७।४।१' इति ह्रस्वे, 'णेरनिटि ६।४।५१' इति णिलोपे, द्वित्वादौ 'शर्पूर्वाः खय ७।४।६१' इति फकारशेषे 'अभ्यासे चर्च ८।४।५४' इति चर्त्वे, 'सन्वल्लघुनि चङ्परेऽनग्लोपे ७।४।९३' इति सन्वद्भावे, 'सन्यतः ७।४।७९' इति अभ्यासस्येत्वे अपिस्फवत् इति । शप आक्रोशे इति लुङि 'वदव्रज० ७।२।४' इति वृद्धौ उपसर्गयोगे पर्यशाप्सीत् इति ।

वाच्य०—दिविष्ठया अमुया पर्य्यशापि । निनंक्ष्वा विक्रमः अस्फायि ।। ३३ ।।

तदनन्तर सा भ्रातरावुपागमत्—

**खर-दूषणयोर् भ्रात्रो· पर्यदेविष्ट सा पुरः ।**
**विजिग्राहयिषू रामं दण्डकारण्य-वासिनम् ।। ३४ ।।**

अन्वय.—दण्डकारण्यवासिनम् रामम् विजिग्राहयिषुः—सा खरदूषणयोः भ्रात्रोः पुर. पर्यदेविष्ट ।

हिन्दी—दण्डकारण्यमे रहनेवाले रामसे लडा देनेकी इच्छावाली वह खर-दूषण नामके भाइयोके आगे विलाप करने लगी ।

व्याख्या—दण्डकारण्यवासिनम् जनस्थानस्थितम्, रामम् रामचन्द्रम्, विजिग्राहयिषु. विरुरोधयिषुः, सा शूर्पणखा, खरदूषणयोः खरदूषणाख्ययोः, भ्रात्रोः सहोदरयोः, पुरः अग्रे, पर्य्यदेविष्ट व्यलापीत् ।

कोशः—'विलापः परिदेवनम्' इत्यमरः ।

**समासः**—'दण्डकारण्ये वसतीति विग्रहे 'सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८' इति णिनि-प्रत्यये उपधाया वृद्धौ दण्डकारण्यवासिन् शब्दस्याभि-रूपम् । वासिनोरिति पाठेऽपि तद्वत् । खरश्च दूषणश्चेति तौ, तयोः ।

**कृदन्तः**—विपूर्वकस्य ण्यन्तस्य ग्राहेः सनि प्रथमस्य एकाचः ग्रा इत्यस्य द्वित्वेऽभ्यासकार्य्ये 'सन्यतः ७।४।७९' इत्यभ्यासस्येत्वे, 'कुहोश्चुः ७।४।६२' इति गस्य जकारे, सन इटि गुणे, अयादेशे, षत्वे, विपूर्वकाद् जिग्राहयिषेति सन्नन्त-धातोः 'सनाशंसभिक्ष उः ३।२।१६८' इत्युप्रत्यये विजिग्राहयिषुः ।

**तिङन्तः**—परिपूर्वकस्य देवृ देवने इति सेटो धातोर्लुङि, तङि, पर्य-देविष्टेति ।

**वाच्य०**—विजिगाहयिष्वा तया पर्य्यदेवि ॥ ३४ ॥

शूर्पणखा त्रिभिः पद्यैः तानुद्दीपयति—

**कृते सौभागिनेयस्य भरतस्य विवासितौ ।**
**पित्रा दौर्भागिनेयौ यौ, पश्यतं चेष्टितं तयोः ॥ ३५ ॥**

**अन्वयः**—दौर्भागिनेयौ यौ सौभागिनेयस्य भरतस्य कृते पित्रा विवासितौ तयोः चेष्टितं पश्यतम् ( मन्नासाच्छेदरूपमित्यर्थः ) ।

**हिन्दी**—सौभाग्यशाली कैकयीके पुत्र भरतके लिये अभागिनी कौशल्या और सुमित्राके पुत्र राम लक्ष्मणको पिताने वनवास देदिया है, उन लोगोंकी करनी तो देखो ( मेरी नाक काट दी है ) ।

**व्याख्या**—दौर्भागिनेयौ दुर्भगापुत्रौ यौ रामलक्ष्मणौ, सौभागिनेयस्य सुभगापुत्रस्य भरतस्य कैकयीजस्य, कृते कारणाय, पित्रा जनकेन, विवासितौ निष्कासितौ, तयोः हतभाग्यासून्वोः, चेष्टितम् कर्तव्यम्, पश्यतम् निरीक्षेथाम् ( मन्नासिकाकर्तनमित्यर्थः ) ।

**तद्धितः**–दुर्भगयोरपत्ये पुमांसौ इति विग्रहे 'स्त्रीभ्यो ढक् ४।१।१२०' इति ढकि 'कल्याणदीनामिनङ् ४।१।१२६' इति अन्त्यस्येनङादेशे 'हृद्भग० ७।३।१९' इत्युभयपद-वृद्धौ, ढस्य एयादेशे दौर्भागिनेयौ । एवमेव सुभगाया अपत्यं पुमान् सौभागिनेयः, तस्य सौभागिनेयस्येति साधुः ।

**कृदन्तः**—करणम् कृदिति भावार्थे 'सम्पदादिभ्यः क्विप् ३।३।९४' इति वार्तिकेन स्त्रियां क्विपि सर्वापहारिलोपे, तुकि, कृत्, तस्यै कृते इति चतुर्थ्येकवचने, स्त्रीलिङ्गरूपमिति केचित् । वस्तुतस्तु 'कृते' इति एदन्तं तादर्थ्येऽव्ययम् प्रसिद्धम् ।

तिङन्तः—दृशिर् प्रेक्षणे इति भौवादिकस्य दृश् धातोः प्रार्थनायां लोटि, 'लोटो लङ्वत् ३।४।८५' इति ङिद्वद्भावे विहिते 'तस्थस्थमिपाम् ० ३।४।१०१' इति तमादेशे शपि 'पाघ्राध्मा० ७।३।७८' इति पश्यादेशे पश्यतम् इति ।

वाच्य०—दुर्भागिनेयौ यौ पिता विवासितवान् तयोः चेष्टितं दृश्यताम् ।

शिक्षा—नरः सर्षप-मात्राणि परच्छिद्राणि पश्यति ।

आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ? ॥

इमामेव नीतिं शिक्षयति शूर्पणखाकल्पितं रामलक्ष्मणनिन्दनम् ॥ ३५ ॥

तथैवोद्दीपयति—

**मम रावण-नाथाया भगिन्या युवयोः पुनः ।**
**अयं तापसकाद् ध्वंसः, क्षमध्वं, यदि वः क्षमम् ॥ ३६ ॥**

**अन्वयः**—रावणनाथायाः पुनः युवयोः भगिन्या मम तापसकाद् अयं ध्वंसः यदि वः क्षमम् तर्हि क्षमध्वम् ( असह्यं हीदं शीघ्रं प्रतिकुरुतम् इति ) ।

हिन्दी—रावणद्वारा सुरक्षित और तुम जैसे बलवान् बंधुओंकी बहनका शुद्ध तापसों द्वारा किया गया नःसिकाच्छेदन यदि सहन करने योग्य है तो सहो !

व्याख्या—रावणनाथाया लोकरावणरक्षितायाः, पुनः भूयश्च, युवयोः प्रसिद्धप्रभावयोः, भगिन्यः स्वसुः, मम शूर्पणखायाः, तापसकात् तुच्छभिक्षोः ( लक्ष्मणात् ), अयं नासाच्छेदनरूपो, महान् ध्वंसः वैरूप्यकरणम्, यदि चेद्, वः युष्माकम्, इत्थं प्रभावशालिनाम्, क्षमं क्षमणीयम्, तर्हि (सामान्ये नपुंसकम्) क्षमध्वम् सहध्वम् । सर्वथा असह्यम् । अधुनैवोत्थाय तयोश्शिरश्छेदं कुरुतम् चेत्तदा भवतोर्योग्यं कार्यं स्यादिति भावः ।

कोशः—'भगिनी स्वसे' त्यमरः ।

**समासः**—रावणः नाथः राजा यस्याः सा, तस्याः रावणनाथाया इति बहुव्रीहिः ।

तद्धितः—कुत्सितः तापसः इति विग्रहे 'कुत्सिते ५।३।७४' इति कनि तापसकः तस्मात् । 'युष्मदि गुरावेकेषाम् १।२।५९' इति वार्तिकबलाद् ज्येष्ठतया बहुत्वम् । युष्माकम् इत्यस्य 'बहुवचनस्य वस्नसौ ८।१।२१' इति वसादेशः ।

तिङन्तः—क्षमूष् सहने इति भौवादिकस्य लोटि ध्वमि शपि क्षमध्वम् ।

वाच्य० — अनेन ध्वंसेन यदि वः क्षमेण भूयते तर्हि क्षम्यताम् ॥ ३६ ॥

पुनस्तथैवोद्दीपयति—

**अ-संस्कृत्रिम-संव्यानावनुप्त्रिम-फलाशिनौ ।**
**अ-भृत्रिम-परीवारौ पर्यभूतां तथापि माम् ॥ ३७ ॥**

**अन्वयः**—( यद्यपि असंस्कृत्रिम-संव्यानौ अनुप्त्रिम-फलाशिनौ अभृत्रिमपरीवारौ ( तौ स्तः ) तथापि ( तौ ) मां पर्यभूताम् ( इति तयोर्दुर्विनातत्वम् पश्यतम् ) ।

**हिन्दी** – यद्यपि वे दोनों पेड़ोंको छाल पहनते हैं, बिना जोते बोए खेतों में उत्पन्न फल खाते हैं, परिवारका भरण पोषण भी नहीं करते, तो भी नाक काट कर मेरा तिरस्कार किया है ।

**व्याख्या**–( यद्यपि ) असंस्कृत्रिम-संव्यानौ वल्कलपरिधानौ, अनुप्त्रिमफलाशिनौ प्रकृष्टपच्यफलाशिनौ, निर्धनतयेत्यर्थः, अभृत्रिम-परीवारौ परीवारभरणाक्षमौ ( तौ स्तः ), तथापि अतिक्षुद्रावपि, वः स्वसारम् पर्यभूताम् परिभूतवन्तौ ( इति असह्येयं दुष्टतेति भावः ) ध्वनिकाव्यम् ।

**कोशः**—'अन्तरीयोपसंव्यान-परिधानान्यधोऽशुंके' ।
'अनादरः परिभवः परीभावस्तिरस्क्रिया'—इत्याद्यमरः ।

**समासः**—असंस्कृत्रिमे संव्याने ययोस्तौ । अनुप्त्रिमाणि च तानि फलानि अनुप्त्रिमफलानि अश्नीतस्तच्छीलौ इत्यर्थे णिनिः । अभृत्रिमः परिवारः ययोस्तौ । एषु सर्वत्र पूर्वं नञ्समासो ज्ञेयः ।

**कृदन्तः**—डुकृञ्-करणे कृधातोः संस्कारेण निर्वृत्तं संस्कृत्रिमम् इत्यर्थे 'ड्वितः क्त्रिः ३।३।८८' इति क्त्रि प्रत्यये 'क्त्रेर्मम् नित्यम् ४।४।२२' इति मबागमे 'सम्पर्युपेभ्यः० ६।१।१३७' इति सुडागमे संस्कृत्रिमशब्दसिद्धिः । एवमेव वापेन निर्वृत्तम् इत्यर्थे डुवप् बीजसन्ताने इति भौवादिकात् वप् धातोः क्त्रि प्रत्यये 'वचिस्वपियजादीनां किति ६।१।१६' इति सम्प्रसारणेऽपि च उप्त्रिमम् इति । डुभृञ् धारणपोषणयोः इति भृ-धातोः तद्वत्सर्वकृत्ये भृत्रिमसिद्धिः । परिपूर्वकात् वृञ् धातोर्घञि 'अचो ञ्णिति ७।२।११५' इति वृद्धौ 'उपसर्गे घञ्यमनुष्ये बहुलम् ६।३।१२२' इति दीर्घे परीवारसिद्धिः ।

**तिङन्तः**—भू-धातोर्लुङि 'गातिस्थाघुपाभूभ्यः० २।४।७७ इति सिचो लुकि पर्यभूताम् ।

वाच्य०—असंस्कृत्रिमसंव्यानाभ्याम् अनुप्त्रिमफलाशिभ्याम्-अभृत्रिमपरीवाराभ्याम् अहं पर्यभाविषि ॥ ३७ ॥

शूर्पणखां खरदूषणौ समाश्वासयतः पद्यद्वयेन—

**श्वःश्रेयसमवाप्तासि भ्रातृभ्यां प्रत्यभाणि सा।**
**प्राणिवस् तव मानाऽर्थं व्रजाऽऽश्वसिहि, मा रुदः ॥ ३८ ॥**

**अन्वयः**—श्वःश्रेयसम् अवाप्तासि। तव मानार्थम् प्राणिवः। व्रज, आश्वसिहि, मा रुदः ( इति ) सा भ्रातृभ्यां प्रत्यभाणि।

**हिन्दी**—खर दूषणने उसे आश्वस्त करते हुए कहा—'बहन! रोओ मत। हम तुम्हारे सम्मानके लिये ही जी रहे हैं, विश्वास रखो। तुम्हारा कल्याण होगा। चलो ( राम लक्ष्मणके ठहरनेका हमें स्थान दिखाओ )।

**व्याख्या**—वत्से! श्वःश्रेयसम् शिवम्, अवाप्तासि अधिगन्तासि। तव प्रियभगिन्याः, मानार्थम् सम्मानरक्षार्थं, प्राणिवः श्वसिवः, व्रज चल, अग्रे दर्शय मार्गम्। आश्वसिहि आश्वस्ता भव। मा रुदः नाऽरोदीः (इति) सा शूर्पणखा भ्रातृभ्याम् खरदूषणाभ्याम् प्रत्यभाणि प्रत्यबोधि।

**कोशः**—'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्'।

**समासः**—शोभनं श्रेय इत्यर्थे मयूरव्यंसकादित्वात् समासे 'श्वसोवसीयः श्रेयसः ५।४।८०' इत्यचि श्वःश्रेयसम्।

**तिङन्तः**—प्रपूर्वकात् अन् धातोरादादिकात् वसि 'रुदादिभ्यः सार्वधातुके ७।२।७६' इति इटि 'अनितेः ८।४।१९' इति णत्वे प्राणिवः इति। आङ् पूर्वकात् श्वस् धातोर्लोटि, हौ, पूर्वसूत्रादेवेटि आश्वसिहि। रुदिर् अश्रु-विमोचने इत्यतो 'माङि लुङ् ३।३।१७५' इति लुङि 'इरितो वा ३।१।५७' इति च्लेरङि, अटश्च 'न माङ्योगे' इति निषेधे मा रुदः। अवपूर्वस्य आप्लृ व्याप्तौ इति स्वादिस्थस्यानुदात्तस्योदात्तेतो लुटि मध्यमैकवचनेऽवाप्तासीति पदम्।

**वाच्य०**—भ्रातरौ तां प्रत्यभाणिष्टाम्, त्वया श्वःश्रेयसम् अवाप्ता, मानार्थं प्राण्यते, आश्वस्यताम्, मा रोदि, त्वया व्रज्यताम्।

शिक्षा—पुम्भिर्नार्य्यः सत्कार्य्या भ्रातृभिः स्वसारः इत्यादि शिक्षयति ॥ ३८ ॥

षट्त्रिंशत्तमे पद्ये 'क्षमध्वं यदि वः क्षमम्' इति यत्सोक्तवती तदुत्तरयतस्तौ—

**जक्षिमोऽनपराधेऽपि नरान् नक्तंदिवं वयम्।**
**कुतस्त्यं भीरु! यत् तेभ्यो द्रुह्यद्भ्योऽपि क्षमामहे ॥ ३९ ॥**

अन्वयः— वयम् अनपराधे अपि नरान् नक्तन्दिवं जक्षिमः। हे भीरु! द्रुह्यद्भ्यः अपि तेभ्यः यत् क्षमामहे तत् कुतस्त्यम् ?

हिन्दी— अपराध न करने पर भी हम लोग मनुष्योंका रात दिन भक्षण किया करते हैं। तब हे हमारी भोली बहन! उन द्रोहियोंको हम क्षमा कर दें, यह हो ही कैसे सकता है ?

व्याख्या— वयम् राक्षसाः, अनपराधे अपराधाभावे, अपि निश्चितम्, नरान् मानवान्, नक्तन्दिवम् रात्रिन्दिवम्, जक्षिमः खादामः। हे भीरु भयार्ते! द्रुह्यद्भ्यः द्रोहिभ्यः, अपि तेभ्यो नरेभ्यः, यत् क्षमामहे मर्षयामः, तत् पूर्वोक्तम्, कुतस्त्यम् कुत आगतम्, असम्भवमित्यर्थः। अर्थापत्तिरलङ्कारः।

कोशः—'अधीरःकातरस्त्रस्ते भीरुभीरुकभीलुकाः।
'मनुष्या मानुषा मर्त्या मनुजा मानवा नराः'।
'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः'—इत्याद्यमरः।

समासः—न अपराधः अनपराधः। नञ् समासे 'नलोपो नञः ६।३।७३' इति न-लोपे 'तस्मान्नुडचि ६।३।७४' इति अचो नुडागमे अनपराधशब्दसिद्धिः। तस्य विषयसप्तम्याम् अनपराधे इति रूपम्। नक्तं च दिवा चेति द्वन्द्वे 'अचतुरविचतुर० ५।४।७७' इति समासान्तोऽच् नक्तन्दिवम्।

तिङन्तः—जक्ष भक्ष हसनयोः इति आदादिकात् धातोर्लटि रुदादित्वादिटि तस्य 'दीधीवेवीटाम् १।१।६' इति ङिन्निमित्ते वा गुणनिषेधे जक्षिमः। द्रुह जिघांसायाम् इति दैवादिकात् शतरि सर्वकार्ये द्रुह्यद्भ्यः क्षमेरसूयार्थात् सम्प्रदानम्।

तद्धितः— कुत आगतम् इत्यर्थे 'अव्ययात्त्यप् ४।२।१०४' इति त्यपि रूपम्।

वाच्य०— अस्माभिः नरा जक्ष्यन्ते, तेन कुतस्त्येन भूयते, यत् क्षम्यते ॥ ३९ ॥

तावनले पतङ्गवत्स्वयं मृत्युमुखे प्रवेष्टुमन्यांश्च प्रवेशयितुमुदचलताम् —

**तौ चतुर्दश-साहस्रबलौ निर्ययतुस् ततः।**
**पारश्वधिक-धानुष्क-शाक्तीक-प्रासिकाऽन्वितौ ॥ ४० ॥**

अन्वयः—ततः पारश्वधिक-धानुष्क-शाक्तीक-प्रासिकान्वितौ चतुर्दश-साहस्र-बलौ तौ निर्ययतुः ( युद्धार्थम् स्वस्थानादिति शेषः )।

हिन्दी—शूर्पणखाको आश्वस्त कर चौदह हजार सैनिकोंसे परिवृत खर-दूषण फरसा, धनुष, शक्ति और भाला आदि प्रहार करने वालोंके साथ निकल पड़े।

**व्याख्या**— ततः शूर्पणखाऽऽश्वासनानन्तरम्, पारश्वधिकधानुष्कशाक्तीक-प्रासिकान्वितौ परशुधनुःशक्तिकुन्तायुधशालिसहितौ, चतुर्दशसाहस्रबलौ चतुर्दश-सहस्रसैन्यौ, तौ उभौ, निर्ययतुः निर्जग्मतुः, युद्धार्थं स्वस्थानादिति शेषः ।

**कोशः**—'परशुश्च परश्वधः' इत्यमरः ।

**तद्धितः**—चतुर्दश-सहस्राणि परिमाणं यस्य तत् इत्यर्थे संख्यापूर्वपदानां तदन्तग्रहणं प्राग्वतेरिष्यते तच्चालुकि इति तदन्तविधित्वात् 'शतमानविंशतिक-सहस्रवसनादण् ५।१।२७' इत्यणि, 'संख्यायाः संवत्सरसंख्यस्य च ७।३।१५'इत्युत्तर-पदवृद्धौ चतुर्दशसाहस्रम् । परश्वधः प्रहरणम् येषाम् इत्यर्थे 'परश्वधाट् ठञ् च ४।४।५८' इति ठञि आदिवृद्धौ पारश्वधिकाः। धनुः प्रहरणं येषाम् इत्यर्थे 'प्रहरणम् ४।४।५७' इति ठकि 'तस्य इसुसुक्तान्तात् कः ७।३।५१' इति के आदिवृद्धौ धानुष्कः । शक्तिः प्रहरणं येषामित्यर्थे 'शक्तियष्टयोरीकक् ४।४।५९' इति ईककि आदिवृद्धौ शाक्तीकः । प्रासः प्रहरणं येषामित्यर्थेऽपि पूर्ववत् प्रासिकाः ।

**समासः**—चतुर्दशसाहस्रं बलम् ययोस्तौ । पारश्वधिकाश्च धानुष्काश्च शाक्तीकाश्च प्रासिकाश्चेति समाहारद्वन्द्वे 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् २।४।२' इति एकत्वं, नपुंसकञ्च, तेन अन्वितौ ।

**तिङन्तः**—या प्रापणे इति धातोर्लिटि द्वित्वादौ 'आतो लोप इटि च ६।४।६४' इत्यालोपे निरो योगे निर्ययतुः ।

**वाच्य०**—चतुर्दशसाहस्रबलाभ्यां ताभ्यां पारश्वधिक-धानुष्क-शाक्तीक-प्रासिकान्विताभ्याम् निर्यये ।

**शिक्षा**—'जलमग्निर्विषं शस्त्रं क्षुद् व्याधि पतनं गिरेः ।
निमित्तं किञ्चिदासाद्य देही प्राणैर्वियुज्यते' इति ॥ ४० ॥

रामलक्ष्मणौ क्रमशस्तान् मृत्युमुखे प्रावेशयतामित्याह पद्यैः पञ्चभिः—

**अथ सम्पततो भीमान् विशिखै राम-लक्ष्मणौ ।**
**बहुमूर्ध्नो द्वि-मूर्धश्च त्रि-मूर्धाश्चाऽहतां मृधे ॥ ४१ ॥**

**अन्वयः** अथ रामलक्ष्मणौ सम्पततः भीमान् बहुमूर्ध्नः द्विमूर्धान् त्रिमूर्धांश्च मृधे विशिखैः अहताम् ।

**हिन्दी**—सामने आते हुए दो शिरों वाले, तीन शिरों वाले और अनेक शिरों वाले राक्षसोंको राम एवं लक्ष्मणने युद्धमें बाणोंसे मार डाला ।

व्याख्या—अथ अनन्तरम्, रामलक्ष्मणौ राघवसौमित्री, सम्पततः सम्मुखमागच्छतः, भीमान् भयानकान्, बहूमूर्ध्नः बहुशिरस्कान्, द्विमूर्धान् द्विशिरस्कान्, त्रिमूर्धान् त्रिशिरस्कान् च अपि, मृधे युद्धे विशिखैः शरैः, अहताम् अवधिष्टाम् ।

समासः—रामश्च लक्ष्मणश्चेतीतरेतरद्वन्द्वः, 'भ्रातुर्ज्यायसः २।२।३४' इति पूर्वनिपातः। बहवो मूर्धानः येषां ते बहुमूर्धानः, तान्, 'अल्लोपोऽनः ६।४।१३४' इति उपधालोपे बहुमूर्ध्नः। द्वौ मूर्धानौ येषाम् इत्यर्थे द्विमूर्धान्। 'द्वित्रिभ्यां ष मूर्ध्नः ५।४।१५' इति ष-प्रत्यये टिलोपे द्विमूर्धाः, ताम्। एवम् त्रिमूर्धानपि।

तिङन्तः—हन् धातोर्लङि 'अनुदात्तोपदेश० ६।४।३७' इति न-लोपे अहताम्।

वाच्य०—रामलक्ष्मणाभ्याम् सम्पतन्तः भीमा बहुमूर्द्धानो द्विमूर्धाः त्रिमूर्द्धाश्च अहन्यन्त ॥ ४१ ॥

तदेव पुनर्वर्णयति—

**तैर् वृक्ण-रुग्ण-सम्भुग्न-क्षुण्ण-भिन्न-विपन्नकैः।**
**निमग्नोद्विग्न-संह्रीणैः पप्रे दीनैश् च मेदिनी ॥ ४२ ॥**

अन्वयः—वृक्णरुग्णसम्भुग्नक्षुण्ण-भिन्नविपन्नकैः निमग्नोद्विग्न-संह्रीणैः दीनैश्च तैः मेदिनी पप्रे।

हिन्दी—काटे गये, तोड-मोड़े गये, विदीर्ण किये गये, टुकडे-टुकडे किये गये, पृथ्वीमें धंसे हुए, घबराये हुए, अत्यन्त लज्जित एवं दुःखित उन राक्षसोंसे पृथ्वी पट गयी।

व्याख्या—वृक्णरुग्णसम्भुग्नक्षुण्णभिन्न-विपन्नकैः छिन्नभग्नवक्र-चूर्णितविदीर्णमृतैः, निमग्नोद्विग्नसंह्रीणैः भूमग्नव्यग्रातिलज्जितैः, दीनैः दुःखितैः, च पुनः, तैः राक्षसैः, मेदिनी युद्धस्थली, पप्रे आवव्रे। अनुप्रासछटया एकक्रियायाम् अनेकेषामन्वयाद्दीपकोपि।

कोशः—'छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम्'—इत्यमरः

समासः—वृक्णाश्च रुग्णाश्च सम्भुग्नाश्च क्षुण्णाश्च भिन्नाश्च विपन्नकाश्चेतीतरेतरद्वन्द्वः। एवम् निमग्नाश्च संह्रीणाश्चेति, तैः।

कृदन्तः–वृश्चि रुजि भुजि मस्जि विजिभ्यो धातुभ्यो निष्ठायाम् 'ओदितश्च ८।२।४५' इति नत्वम्, 'चोः कुः ८।२।३०' इति कुत्वम्, 'ग्रहिज्येति० ६।१।१६'

सम्प्रसारणे, 'स्कोः संयोगाद्योरन्ते च ८।२।२९' इति सलोपो ज्ञेयः। 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति णत्वे वृक्ण इति विशेषः। क्षुदिभिदिपदिभ्यस्तु 'रदाभ्याम्० ८।२।४२' इति दस्य च नत्वे रूपाणि। संह्लीण इति तु 'नुदविद० ८।२।५६' इति नत्वम्। दीन इति दीङ् क्षये इत्यस्य 'स्वादय ओदितः' इति ओदित्वात् ओदितश्चेति नत्वम्।

तिङन्तः—प्रा पूरणे इति धातोः कर्मणि लिटि, द्वित्वादौ, 'आतो लोप इटि च ६।४।६४' इत्यालोपे पप्रे।

वाच्य०—वृक्णरुग्णसम्भुग्नक्षुण्णभिन्नविपन्नकाः निमग्नोद्विग्नसंह्लीणाः दीनाः ते मेदिनीं पप्रुः ॥ ४२ ॥

अन्येषां दशामाह—

**केचिद् वेपथुमासेदुरन्ये दवथुमुत्तमम्।**
**स-रक्तं वमथुं केचिद्, भ्राजथुं न च केचन ॥ ४३ ॥**

**अन्वयः**—केचिद् वेपथुम्, अन्ये उत्तमं दवथुम्, केचिद् सरक्तं वमथुम् आसेदुः। केचन भ्राजथुम् न (आसेदुः इति शेषः)।

**हिन्दी**—कई कांप उठे, कई दुःखसे पराभूत हो गये, कई खून उगलने लगे। इस तरह (रामलक्ष्मणकी मारसे) सभीकी हालत खराब हो गयी।

**व्याख्या**—केचित् केऽपि (राक्षसाः), वेपथुम् कम्पम्, अन्ये अपरे, उत्तमम् अधिकम्, दवथुम् परितापम्, केचित् केचन, सरक्तं सलोहितम्, वमथुम् छर्दिकाम्, आसेदुः प्रापुः। भ्राजथुम् शोभाम् (दीप्तिमित्यर्थः) केचन केचिदपि न आसेदुः न प्रापुः। अथुशब्दानुप्रासो दिव्यो दीपकार्थालङ्कार आसादनक्रियायां सर्वेषामन्वयात्।

**कोशः**—'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्'। 'अथ वेपथुः कम्पः'।
'प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः'—इत्याद्यमरः।

**कृदन्तः**—टुवेपृ कम्पने, टुदु उपतापे, टुवम उद्गिरणे, टुभ्राज् दीप्तौ—सर्वत्र 'ट्वितोऽथुच् ३।३।८९' इत्यथुचि पुंलिङ्गे रूपम्। षद्लृ धातोर्लिटि द्वित्वादौ 'अत एकहल्मध्ये० ६।४।१२०' इति एत्वाभ्यासलोपे आसेदुः।

**वाच्य०**—कैश्चिद्वेपथुः, अन्यैः उत्तमो दवथुः, कैश्चित् सरक्तो वमथुः आसेदे। भ्राजथुः कैरपि नासेदे ॥ ४३ ॥

राक्षससेनापतेस्त्रिमूर्द्धस्य दशां विशिष्याह—

**मृगयुमिव मृगोऽथ दक्षिणेर्मा, दिशमिव दाह-वतीं मरावुदन्यन्।**
**रघु-तनयमुपाययौ त्रि-मूर्धो, विषभृदिवोग्र-मुखं पतत्रि-राजम् ॥४४॥**

**अन्वयः**—अथ दक्षिणेर्मा मृगः मृगयुम् इव उदन्यन् मरौ दाहवतीं दिशम् इव विषभृत् उग्रमुखम् पतत्रिराजम् इव त्रिमूर्द्धः रघुतनयम् उपाययौ।

**हिन्दी**—दक्षिण पार्श्वमें बाण-विद्ध मृग जैसे व्याधके पास जाता है, मरुस्थलमें प्यासा मृग जैसे जलती दिशाकी ओर जाता है, विषैला सर्प जैसे भयानक मुख वाले गरुडकी ओर जाता है, वैसे ही ( राक्षसोंकी हालत खस्ता होने पर ) त्रिशिर नामका राक्षस रामके पास पहुँचा।

**व्याख्या**—अथ अनन्तरम्, दक्षिणेर्मा व्रणितदक्षिणपार्श्वः, मृगः हरिणः, मृगयुम् व्याधम्, इव यथा, उदन्वन् पिपासुः, मरौ निर्जलप्रदेशे, दाहतीं ज्वलन्तीं, दिशम् इव यथा, विषभृत् सर्पः, उग्रमुखं भीमाननं, पतत्रिराजम् गरुडम्, इव यथा, त्रिमूर्धः त्रिशिराः राक्षसविशेषः, रघुतनयं रामचन्द्रम्, उपाययौ उपाजगाम। अत्र मालोपमाऽलङ्कृतिः। 'मालोपमा यदेकस्योपमानं बहु दृश्यते' इति लक्षणम्। पद्यद्वयेऽन्ते पुष्पिताग्रा छन्दः। 'अयुजि न-युग-रेफतो यकारो युजि च न-जौ जरगाश्च पुष्पिताग्रा' इति तल्लक्षणम्।

**समासः**—दक्षिणे ईर्मं यस्य स इत्यर्थे बहुव्रीहौ 'दक्षिणेर्मा लुब्धयोगे ५।४।१२६' इति अनिच् निपात्यते। रघोः तनयः रघुतनयः, तम्। त्रयः मूर्द्धानः यस्य स इत्यर्थे 'बहुव्रीहौ द्वित्रिभ्यां ष मूर्ध्नः ५।४।११५' इति ष प्रत्यये, टिलोपे त्रिमूर्धः। उग्रं मुखं यस्य स उग्रमुखः, तम्।

**तिङन्तः**—उपापूर्वकात् या धातोर्लिटि 'परस्मैपदानां० ३।४।८' इति णलादेशे, द्वित्वादिकार्ये 'आत औ णलः ७।१।३४' इति णल औकारे वृद्धौ, उपाययौ।

**वाच्य०**—दक्षिणेर्मणा मृगेण मृगयुरिव उदन्यता दाहवती दिगिव विषभृता उग्रमुखः पतत्रिराज इव त्रिमूर्द्धेन रघुतनय उपायये॥ ४४॥

उपसंहरते चतुर्थं सर्गं कविः—

**शित-विशिख-निकृत्त-कृत्स्न-वक्त्रः क्षिति-भृदिव क्षिति कम्प-कीर्ण-शृङ्गः।**
**भयमुपनिदधे स राक्षसानाम् अ-खिल-कुल-क्षय-पूर्व-लिङ्ग-तुल्यः ॥४५॥**

**अन्वयः**—शितविशिखनिकृत्तकृत्स्नवक्त्रः क्षितिकम्पकीर्णशृङ्गः क्षितिभृत् इव अखिलकुलक्षयपूर्वलिङ्गतुल्यः स ( त्रिमूर्द्धः ) राक्षसानां भयम् उपनिदधे।

**हिन्दी**—भूकम्पसे बिखरी हुई चोटियों वाले पर्वतकी भांति राक्षस कुलके नाशकी प्रथम किश्तके रूपमें तीक्ष्ण तीरोंसे अनेक शिरोंको कटवा

देने वाले इस त्रिशिरने राक्षसोंके हृदयमें भय पैदा कर दिया ( खर दूषणके सेनापति प्रचण्ड शक्तिशाली त्रिशिरके वधसे रासक्षोंके सामने राम-लक्ष्मणकी अपराजेयता शत-शत रूपोंमें प्रकट हो गई )।

व्याख्या—शितविशिखनिकृत्तकृत्स्नवक्त्रः तीक्ष्णशरच्छिन्नसर्वशिरः, अतएव क्षितिकम्पविकीर्णशृङ्गः भूकम्पपतितशिखरः, क्षितिभृत् पर्वत इव यथा, अखिलकुलक्षयपूर्वलिङ्गतुल्यः सम्पूर्णवंशनाशपूर्वचिह्नसदृशः, स त्रिमूर्द्धः राक्षसः, राक्षसानाम् निशाचराणाम् भयम् भीतिम्, उपनिदधे जनयामास। आर्थीश्रौतीत्युभयोपमालङ्कारः।

कोशः—'विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम्'।

समासः—शिताश्च ते विशिखाः शितविशिखाः, तैः निकृत्तानि कृत्स्नानि वक्त्राणि यस्य सः तथोक्तः। क्षितेः कम्पः क्षितिकम्पः तेन विकीर्णानि शृङ्गाणि यस्येति त्रिपदबहुव्रीहिः। अखिलं च तत् कुलम्, तस्य क्षयः अखिलकुलक्षयः। पूर्वं च तत् लिङ्गम् पूर्वलिङ्गम्। अखिल-कुलक्षयस्य पूर्वलिङ्गम्, तेन तुल्यः अखिलकुलक्षयपूर्व-लिङ्गतुल्यः।

तिङन्तः—उपनिपूर्वकात् धा धातोर्लिटि द्वित्वेऽभ्यासकार्ये' आतो लोप इटि च ६।४।६४' इत्यालोपे उपनिदधे।

वाच्य०—शितविशिखनिकृत्तकृत्स्नवक्त्रेण, क्षितिकम्पकीर्णशृङ्गेण क्षितिभृता अखिलकुलक्षयपूर्वलिङ्गतुल्येन भयम् उपनिदधे।

शिक्षा—ईश्वरः स्वकार्य्यारम्भमित एव सन्तेने एकेन पदातिनाऽपरिमितराक्षसनाश इति। स हि केन विधिना स्वकृत्यं साधयतीति मनुष्यागम्यो विषय इत्येव शिक्षयति ॥ ४५ ॥

**इति श्रीभट्टिमहाकाव्ये लक्षणात्मके प्रकीर्णकाण्डे लक्ष्यरूपे कथानके त्रिशिरादिराक्षसनिधननामा चतुर्थः सर्गः समाप्तः॥**

**इति श्री-क्षेमधारिणा कौशल्याजेन विहाराभिजनेन काशीवास्तव्येन म० म० पण्डितराजेन-व्याख्यानवाग्मिना दर्शनकेशरिणा डॉ० गोपालशास्त्रिणा विरचिता प्रकीर्णकाण्डगा काव्य-मर्म-विमर्शिका व्याख्या चतुर्थ-सर्गान्ता समाप्ता॥**

# परिशिष्टम्

शक्तिशक्तिमतोः शश्वद्विलासस्त्रिजगद् यथा ।
प्रकृति-प्रत्ययोद्भूतं शब्दशास्त्रे पदं तथा ॥

जैसे शक्ति-शिवका शाश्वतिक विलास ही त्रिभुवन है । वैसे धातुरूप प्रकृति और तिङादिरूप प्रत्ययोंका विलास ही तो शब्दशास्त्रमें पदसमूह है । अतः शब्दों-का मूल धातु ही है । वे धातु दो हजारके लगभग पाणिनिने धातुपाठ पुस्तकमें लिखे हैं । उन्हीं धातुओंसे १० लकार तथा १० गण भेदसे धातुओंके पद बनाए जाते हैं ।

इस भट्टिकाव्यशास्त्रमें उन सभी धातुओंके पदोंके प्रयोग प्रायः दिखाए गये हैं । पर यहाँ मुझे भट्टिके चार सर्गोंमें प्रयुक्त धातुओंके प्रयुक्त लकारोमें छात्र कैसे पद स्वयं बना लेंगे, उसका संक्षिप्त स्वरूप बता देना है । देखिये—शिव सूत्रके आधार पर १० लकार—

लट् लिट् लुट् लृट् लेट् लोट् ( टित् लकार ६ ), लेट् वेद में ही आता है । लङ् विधिलिङ् आशीर्लिङ् लुङ् लृङ् ( ङित् लकार ) ।

इन १० लकारोंके सार्वधातुक, आर्द्धधातुक नामके दो भेद हैं । लट् लङ् लोट् विधिलिङ् ये चार सार्वधातुक लकार हैं । इन्ही चारों लकारोंमे १० गणके भेदसे १० प्रकारके विकरण लगाकर १० ढंगके पद बनाते है । यहाँ वे १० विकरण बताये जाते हैं, जिन्हे धातु + प्रत्ययोंके बीचमें बैठाकर पद बनाए जाते हैं ।

भ्वाद्यदादी जुहोत्यादिर्दिवादिः स्वादिरेव च ।
तुदादिश्चरुधादिश्च तनादिक्रीचुरादयः ॥

१ भ्वादि, २ अदादि, ३ जुहोत्यादि, ४ दिवादि, ५ स्वादि, ६ तुदादि, ७ रुधादि, ८ तनादि, ९ क्र्यादि, १० चुरादि । इन्हीं १० गणोंमें १० ढंगके विकरण धातु + प्रत्ययके बीच में टपक पड़ते है । वे यों हैं—

१ भ्वादिमें शप् ( अ ), २ अदादिमें लुक् ( × ), ३ जुहोत्यादिमें श्लु ( × ), ४ दिवादिमें श्यन् ( य ), ५ स्वादिमें श्नु (नु), ६ तुदादिमें श ( अ ), ७ रुधादिमें श्नम् (न), ८ तनादिमें (उ), ९ क्र्यादिमें श्ना (ना), १० चुरादिमें णिच् ( इ ) लगाकर दूसरा धातु बनाकर शप् ( अ ) ये ही १० विकरण हैं, जो धातुओंका विकृत करके रुपान्तर करते हैं, इसी कारण इनका नाम विकरण है । विक्रियन्ते धातवोऽनेनेति विकरणम् । अब भट्टिकाव्यशास्त्रके ४ चार सर्गोंमें आये लकारों-के प्रत्यय देखें—

आत्मनेपद और परस्मैपद भेदसे दो प्रकारके प्रत्यय हैं, सभी प्रत्यय १८ जिन्हें तिङ कहते हैं। सूत्र—

तिप् तिस् झि सिप् थस् थ मिब्वस्मस् तातां झ थासाथांध्व मिड् वहि महिङ् ३।४।७८ इनका परिष्कृत रूप लकारोंमें देखें—

## सार्वधातुक-प्रत्यय

### लट् लकार[1] ( वर्तमानकाल )

| | परस्मैपद ( १० गण ) | | | आत्मनेपद ( ४ गण ) | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्र०पु० | तिप् (ति) | तस् (तः) | झि (अन्ति) | त ( ते ) | आताम् (इते) | झ (अन्ते) |
| म०पु० | सिप् (सि) | थस् (थः) | थ | थास् (से) | आथाम् (इथे) | ध्वम् (ध्वे) |
| उ०पु० | मिप् (मि) | वस् (वः) | मस् ( मः ) | इट् (ए) | वहि (वहे) | महिङ् (महे) |

### लङ् लकार[2] ( अनद्यतनभूतकाल )

| | परस्मैपद ( १० गण ) | | | आत्मनेपद ( ४ गण ) | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्र०पु० | त् | ताम् | अन् | त | इताम् | अन्त |
| म०पु० | स् | तम् | त | थाः | इथाम् | ध्वम् |
| उ०पु० | अम् | व | म | इ | वहि | महि |

अतो दीर्घो यञि ७।३।१०१ से उत्तम पुरुषका विकरण चार गण भ्वादि, दिवादि तुदादि, चुरादि १।४।६।१० गणोंमें दीर्घ हो जाते हैं।

### लोट् लकार[3] ( विध्यादिकाल )

| | परस्मैपद ( १० गण ) | | | आत्मनेपद ( ४ गण ) | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्र०पु० | तु (तात्) | ताम् | अन्तु | ताम् | इताम् | अन्ताम् |
| म०पु० | हि (तात्) | तम् | त | स्व | इथाम् | ध्वम् |
| उ०पु० | आनि | आव | आम | ऐ | आवहै | आमहै |

---

१.२.३. लट्, लङ् और लोट्मे परस्मैपदके ये ही प्रत्यय होते हैं। केवल जुहोत्यादि गणमें क्रमसे अन्तिका अति, अन्का ऊ ( धातुका गुण भी ) और अन्तुका अतु हो जाता है। छ गणोंमें ( अदादि जुहोत्यादि स्वादि रुधादि तनादि क्र्यादिमें ) तो आत्मनेपदमें प्रथम और मध्यम पुरुषके द्विवचनमें लट् लङ् लोट्

### लिङ् लकार ( विध्यादि-काल )

| | परस्मैपद ( ४ गण ) | | | आत्मनेपद ( १० गण[४] ) | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्र०पु० | इत् | इताम् | इयुः | ईत | ईयाताम् | ईरन् |
| म०पु० | इः | इतम् | इत | ईथाः | ईयाथाम् | इध्वम् |
| उ०पु० | इयम् | इव | इम | ईय | ईवहि | ईमहि |

## आर्धधातुक-प्रत्यय

### लृट् ( सामान्य भविष्यत्-काल )

| | परस्मैपद | | | आत्मनेपद | | |
|---|---|---|---|---|---|---|
| | एक | द्वि० | बहु० | एक | द्वि० | बहु० |
| प्र०पु० | स्यति | स्यतः | स्यन्ति | स्यते | स्येते | स्यन्ते |
| म०पु० | स्यसि | स्यथः | स्यथ | स्यसे | स्येथे | स्यध्वे |
| उ०पु० | स्यामि | स्यावः | स्यामः | स्ये | स्यावहे | स्यामहे |

### लृङ् ( भूत-क्रियतिपत्तिकाल )

| | परस्मैपद | | | आत्मनेपद | | |
|---|---|---|---|---|---|---|
| | एक | द्वि० | बहु० | एक | द्वि० | बहु० |
| प्र०पु० | स्यत् | स्यताम् | स्यन् | स्यत | स्येताम् | स्यन्त |
| म०पु० | स्यः | स्यतम् | स्यत | स्यथाः | स्येथाम् | स्यध्वम् |
| उ०पु० | स्यम् | स्याव | स्याम | स्ये | स्यावहि | स्यामहि |

### लुट् ( अनद्यतन भविष्यत्-काल )

| | परस्मैपद | | | आत्मनेपद | | |
|---|---|---|---|---|---|---|
| | एक | द्वि० | बहु० | एक | द्वि० | बहु० |
| प्र०पु० | ता | तारौ | तारः | ता | तारौ | तारः |
| म०पु० | तासि | तास्थः | तास्थ | तासे | तसाथे | ताध्वे |
| उ०पु० | तास्मि | तास्वः | तास्मः | ताहे | तास्वहे | तास्महे |

---

तीनोंमें इ नहीं होगा आ रहेगा और प्रथमपुरुषके बहुवचनमें न् नहीं रहेगा लिङ्के परस्मैपदमें यात् याताम् युः इत्यादि होते हैं। आशीर्लिङ्के स् निकालकर इसका प्रत्यय बना लेते है।

४. दसो गणोंके ये ही प्रत्यय होते हैं।

लुङ् ( सामान्य भूतकाल ) सेट् धातोः प्रत्ययाः ।

| | परस्मैपद | | | आत्मनेपद | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्र०पु० | ईत् | इष्टाम् | इषुः | इष्ट | इषाताम् | इषत |
| म०पु० | ईः | इष्टम् | इष्ट | इष्ठाः | इषाथाम् | इढ्वम् |
| उ०पु० | इषम् | इष्व | इष्म | इषि | इष्वहि | इष्महि |

लुङ् ( सामान्य भूतकाल ) अनिट् धातोः प्रत्ययाः ।

| | परस्मैपद | | | आत्मनेपद | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्र०पु० | सीत् | स्ताम् | सुः | स्त | साताम् | सत |
| म०पु० | सीः | स्तम् | स्त | स्थाः | साथाम् | ध्वम् |
| उ०पु० | सम् | स्व | स्म | सि | स्वहि | स्महि |

क्वचित्तु सिज्लुगादिजाते लङ् प्रत्यया एव यथायथं प्रयुज्यन्ते ।

( कहीं-कहीं तो सिच्, लुक्, ङ्, क्स, चङ्में लङ्के ही प्रत्यय होते हैं । )

लिट् ( परोक्ष अनद्यतन भूतकाल )

| | परस्मैपद | | | आत्मनेपद | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्र०पु० | अ(णल्) | अतुः | उः | ए | आते | इरे |
| म०पु० | थ | अथुः | अ | से | आथे | ध्वे |
| उ०पु० | अ(णल्) | व | म | ए | वहे | महे |

आशीर्लिङ् ( आशीर्वादार्थक-काल )

| | परस्मैपद | | | आत्मनेपद | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्र०पु० | यात् | यास्ताम् | यासुः | सीष्ट[1] | सीयास्ताम् | सीरन् |
| म०पु० | याः | यास्तम् | यास्त | सीष्ठाः | सीयास्थाम् | सीध्वम् |
| उ०पु० | यासम् | यास्व | यास्म | सीय | सीवहि | सीमहि |

---

१. ये अनिट् प्रत्यय हैं । सेट् धातुओंके लिए इन्हींमें इकार लगाकर इषीष्ट इत्यादि बना लिया जाता है ।

# प्रथमतश्चतुर्थसर्गान्तर्गतानां धातूनां विवरणम्

| क्र०सं० | धातु | अर्थ | गण | आत्म०पर० | सेट्/अनिट् | सर्ग | श्लोक | प्रयोग |
|---|---|---|---|---|---|---|---|---|
| १ | भू | सत्तायाम् | भ्वादि | परस्मै० | सेट् | १ | १ | अभूत् |
| २ | गम्लृ | गतौ | ,, | ,, | अनिट् | १ | १ | उपागमत् |
| ३ | इङ् | अध्ययने | अदादि | आत्मने० | ,, | १ | २ | अध्यैष्ट |
| ४ | यज | देवपूजादिषु | भ्वादि | उभय० | ,, | १ | २ | अयष्ट |
| ५ | पॄ | पालनपूरणयो: | जुहो० | परस्मै० | सेट् | १ | २ | अपारीत् |
| ६ | मन | ज्ञाने | दिवादि | ,, | अनिट् | १ | २ | अमंस्त |
| ७ | जि | जये | भ्वादि | ,, | ,, | १ | २ | व्यजेष्ट |
| ८ | रमु | क्रीडायाम् | ,, | आत्मने० | ,, | १ | २ | अरंस्त |
| ९ | हन | हिंसागत्यो: | अदादि | परस्मै० | ,, | १ | २ | न्यवधीत् |
| १० | कॄ | विक्षेपे | तुदादि | ,, | सेट् | १ | ३ | व्यकारीत् |
| ११ | वस | निवासे | भ्वादि | ,, | अनिट् | १ | ३ | अध्यवात्सीत् |
| १२ | ष्ठा (स्था) | गतिनिवृत्तौ | ,, | ,, | ,, | १ | ३ | उपास्थित |
| १३ | असु | क्षेपणे | दिवादि | ,, | सेट् | १ | ४ | निरास्थत् |
| १४ | ज्वल | दीप्तौ | भ्वादि | ,, | ,, | १ | ३ | जज्वाल |
| १५ | आस | उपवेशने | अदादि | आत्मने० | ,, | १ | ५ | अध्यास्त |
| १६ | भा | दीप्तौ | ,, | परस्मै० | अनिट् | १ | ८ | भान्ति |
| १७ | णीञ् (नी) | प्रापणे | भ्वादि | उभय० | ,, | १ | १० | अनायि |

| क्र०सं० | धातु | अर्थं | गण | आत्म० पर० | सेट्/अनिट् | सर्ग | श्लोक | प्रयोग |
|---|---|---|---|---|---|---|---|---|
| १८ | ईह | चेष्टायाम् | भ्वादि | आत्मने० | सेट् | १ | ११ | ऐहिष्ट |
| १६ | तनु | विस्तारे | तनादि | उभय० | सेट् | १ | ११ | व्यतानीत् |
| २० | हु | दानादनयोः | जुहोत्यादि | परस्मै० | अनिट् | १ | १२ | अहौषीत् |
| २१ | मार्ग | अन्वेषणे | चुरादि | ,, | ,, | १ | १२ | अमार्गीत् |
| २२ | अश | भोजने | क्र्यादि | ,, | सेट् | १ | १३ | प्राशुः |
| २३ | षूङ् | प्राणिप्रसवे | अदादि | आत्मने० | अनिट् | १ | १४ | प्रासोष्ट |
| २४ | अर्च | पूजायाम् | भ्वादि | परस्मै० | सेट् | १ | १५ | आर्चीत् |
| २५ | षिध | गत्याम् | ,, | ,, | ,, | १ | १५ | न्यषेधीत् |
| २६ | यम | उपरमे | ,, | परस्मै० | अनिट् | १ | १६ | उपायंसत |
| २७ | इण् | गतौ | अदादि | ,, | ,, | १ | १७ | अभ्यगात् |
| २८ | अर्ह | पूजायाम् | भ्वादि | ,, | सेट् | १ | १७ | आर्जिहत् |
| २६ | इषु | इच्छायाम् | तुदादि | ,, | ,, | १ | १८ | ऐषीः |
| ३० | वृतु | वर्तने | भ्वादि | आत्मने० | ,, | १ | १८ | न्यवृतत् |
| ३१ | बुध | अवगमने | दिवादि | आत्मने० | अनिट् | १ | १८ | अबुद्धाः |
| ३२ | वद | व्यक्तायां वाचि | भ्वादि | परस्मै० | सेट् | १ | १८ | अवादीत् |
| ३३ | ख्या | प्रकथने | अदादि | ,, | अनिट् | १ | १६ | आख्यत् |
| ३४ | तृह | हिंसायाम् | रुधादि | परस्मै० | सेट् | १ | १६ | तृणेढु |
| ३५ | मुह | वैचित्ये | दिवादि | ,, | ,, | १ | २० | मुमोह |

| क्र०सं० | धातु | अर्थ | गण | आत्म० पर० | सेट्/अनिट् | सर्ग | श्लोक | प्रयोग |
|---|---|---|---|---|---|---|---|---|
| ३६ | ब्रूञ् | व्यक्तायां वाचि | अदादि | उभय० | अनिट | १ | २० | ऊचे |
| ३७ | आप्लृ | व्याप्तौ | स्वादि | परस्मै० | ,, | १ | २१ | आप्थाः |
| ३८ | डुकृञ् | करणे | तनादि | उभय० | ,, | १ | २१ | मा कृथाः |
| ३९ | हि | गतौ वृद्धौ च | स्वादि | परस्मै० | ,, | १ | २१ | प्रहिणु |
| ४० | दह | भस्मीकरणे | भ्वादि | ,, | ,, | १ | २३ | धक्ष्यति |
| ४१ | तप | सन्तापे | ,, | ,, | ,, | १ | २३ | तप्स्यति |
| ४२ | लोचृ | दर्शने | ,, | आत्मने० | सेट् | १ | २३ | अवालुलोचे |
| ४३ | ज्ञा | अवबोधने | क्र्यादि | परस्मै० | अनिट् | १ | २३ | अनुजज्ञे |
| ४४ | रुदिर् | अश्रुविमोचने | अदादि | ,, | सेट् | १ | २६ | मा रुदन् |
| ४५ | गद | व्यक्तायां वाचि | भ्वादि | परस्मै० | ,, | १ | २७ | जगदुः |
| ४६ | स्फुर | संचलने | ,, | ,, | ,, | १ | २७ | पुस्फोर |
| ४७ | कु | शब्दे | अदादि | ,, | अनिट् | १ | २७ | चुकुवुः |
| ४८ | दृशिर् | प्रेक्षणे | भ्वादि | ,, | ,, | २ | १ | ददर्श |
| ४९ | राजृ | दीप्तौ | ,, | ,, | सेट् | २ | २ | रेजुः |
| ५० | लोकृ | दर्शने | चुरादि | परस्मै० | ,, | २ | ५ | आलोकयां चक्रुः |
| ५१ | षह | मर्षणे | भ्वादि | आत्मने० | सेट् | २ | ६ | संसहते |
| ५२ | डुधाञ् | धारणपोषणयोः | जुहोत्यादि | उभय० | अनिट् | २ | ७ | दधे |
| ५३ | बन्ध | बन्धने | क्र्यादि | परस्मै० | ,, | २ | ९ | बबन्ध |
| ५४ | श्रु | श्रवणे | भ्वादि | ,, | ,, | २ | १० | अश्रोषत |

| क्र०सं० | धातु | अर्थ | गण | आत्म० पर० | सेट्/अनिट् | सर्ग | श्लोक | प्रयोग |
|---|---|---|---|---|---|---|---|---|
| ५५ | घ्रा | गन्धोपादाने | ,, | ,, | ,, | २ | १० | आघ्रायि |
| ५६ | ग्रह | उपादाने | क्र्यादि | उभय० | सेट् | २ | ११ | अगृह्णा् |
| ५७ | स्पृश | संस्पर्शने | तुदादि | परस्मै० | अनिट् | २ | ११ | उपास्पृशत् |
| ५८ | तुष | प्रीतौ | दिवादि | ,, | ,, | २ | १३ | तुतोष |
| ५९ | ईक्ष | दर्शने | भ्वादि | आत्मने० | सेट्, | २ | १४ | ऐक्षिष्ट |
| ६० | मुद | हर्षे | ,, | ,, | ,, | २ | १५ | मुमुदे |
| ६१ | टुनदि | समृद्धौ | ,, | परस्मै० | ,, | २ | १६ | अनन्दयत् |
| ६२ | गुजि | अव्यक्ते शब्दे | ,, | ,, | ,, | २ | १९ | जुगुञ्ज |
| ६३ | हृञ् | हरणे | ,, | उभय० | अनिट् | २ | १९ | जहार |
| ६४ | ढौकृ | गतौ | ,, | आत्मने० | सेट् | २ | २३ | डुढौके |
| ६५ | अद | भक्षणे | अदादि | परस्मै० | अनिट् | २ | २५ | जक्षुः |
| ६६ | श्वस | प्राणने | ,, | ,, | सेट् | २ | २५ | विशश्वसे |
| ६७ | काशृ | दीप्तौ, | भ्वादि | आत्मने० | ,, | २ | २६ | चकाशिरे |
| ६८ | पूज | पूजायाम् | चुरादि | परस्मै० | ,, | २ | २६ | अपूपुजन् |
| ६९ | वह | प्रापणे | भ्वादि | परस्मै० | अनिट् | २ | २७ | अवोढम् |
| ७० | रक्ष | पालने | ,, | ,, | सेट् | २ | २७ | रक्षतम् |
| ७१ | भाष | व्यक्तायां वाचि | ,, | आत्मने० | ,, | २ | २७ | अभाषिषाताम् |
| ७२ | ष्टुञ् | स्तुतौ | अदादि | उभय० | अनिट् | २ | २८ | प्रस्तुत |

